# ईश्वरपर्यालोचनम्

(The Critical Views of other Schools on the God of Nyāyavaiśeṣika Philosophy)

डॉ॰ सच्चिदानन्द मिश्र

# ईश्वरपर्यालोचनम्

(The Critical-Views of other Schools on the God of Nyāyavaiśeṣika Philosophy)

डॉ० सच्चिदानन्द मिश्रः
न्यायविभागः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
श्रीसदाशिवपरिसरः
पुरी–७५२००१
ओडिशा



भारतीय विद्या प्रकाशन
दिल्ली वाराणसी
(भारत)

प्रकाशक :

**भारतीय विद्या प्रकाशन**

१, यू. बी., जवाहरनगर, बंग्लो रोड, दिल्ली-११०००७

फोन : (०११) २३९७१५७०

*अन्य प्राप्ति स्थान :*

**भारतीय बुक कार्पोरेशन**

(१) १, यू. बी., जवाहरनगर, बंग्लो रोड, दिल्ली-११०००७

फोन : (०११) २३९७१५७०

E-mail : bvpbooks@hotmail.com

(२) पो. बा. नं. ११०८, कचौड़ी गली, वाराणसी-२२१००१

फोन : (०५४२) २३९२३७६






प्रथम संस्करण : २००४

मूल्य : ४००.००

ISBN : 81-217-0176-7

टाईप सैटिंग :

**ए-वन ग्राफिक्स**

एक्स-४, गली नं०-२, ब्रह्मपुरी,

दिल्ली-११००५३ फोन : २२१८३४७०

मुद्रक :

**जैन अमर प्रिंटिंग एजेन्सी**

जवाहरनगर, बंग्लो रोड, दिल्ली-११०००७

# प्राक्कथनम्

## प्रवृत्तिबीजम्–

संसारे यदा मानवश्चरणं निक्षिप्तवान् तदा प्रभृत्येवास्य संसारस्य सृष्टिसंहारविषययोः स्वकीयेन मनसा मननं विदधाति चिन्तयति। आश्चर्यसिक्तेन मनसा चिन्तयन्नसौ विविधेषु निष्कर्षेष्वात्मानं प्रापयति। अत एव चानेकेषां दर्शनानां सिद्धान्तानाञ्च जनिरभूत्। किन्तु सर्वेष्वपि दर्शनेषु सिद्धान्तेषु च परमेश्वरविषयको विचार उपलभ्यते। यद्यपि केषुचिद्दर्शनेषु मूलावस्थायां परमेश्वरविषये किञ्चिदपि नैव विचारितं किन्तु परवर्तिसाहित्ये तेष्वपि परमेश्वरविषये विचार्यते। वेदे तमेव परमेश्वरं लक्ष्यीकृत्य प्रोच्यते–"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय" इति। निश्चयेनैतद्वक्तुं शक्यते यन्नास्ति संसारस्य काचिदपि दार्शनिकपरिपाटी या परमेश्वरविषये विचारं नैव करोति। तच्चेन्नास्तिकशिरोमणीभूतं चार्वाकदर्शनं स्यादथवाऽऽस्तिकदर्शनानां न्यायवैशेषिकमीमांसादिदर्शनानां सरणिः स्यात्। भारतीयदर्शनेष्वपि परमेश्वरविषये बहवो विचाराः समुपलभ्यन्ते। भारतीयदर्शनेष्वीश्वरविषयेऽत्यन्तं स्वरूपे वैमत्यमस्ति। चार्वाकबौद्धजैनप्रभृतीनि नास्तिकदर्शनसंज्ञया संज्ञापनीयान्येव दर्शनानि नैवेश्वरस्य खण्डनं कुर्वन्ति किन्त्वास्तिकान्यपि सांख्यमीमांसाप्रभृतिदर्शनानि परमेश्वरास्तित्वं खण्डयन्ति। न्यायवैशेषिकयोगदर्शनानां प्रायशः परमेश्वरस्वरूपविषये साम्यमस्ति। वेदान्तदर्शनानां परमेश्वरास्तित्वे समानेऽपि परमेश्वरस्वरूपविषयेऽत्यन्तं वैमत्यमस्ति। पाश्चात्त्यदर्शनेष्वपि परमेश्वरस्वरूपविषये तस्मिन् प्रमाणञ्च किमस्तीत्यस्मिन् विषये चात्यन्तमस्ति वैमत्यम्। परमेश्वरस्यास्तित्वं ख्यापयितुं त्रिविधानि प्रमाणानि प्रदीयन्ते (१) कार्यकारणभावमूलकम् (Cosmological) (२) सत्तामूलकम् (Ontological) (३) प्रयोजनमूलकम् (Teleological) एतेषु कार्यकारणभावमूलकं प्रमाणं परमेश्वरसाधनाय नैयायिकाः वैशेषिकाश्च प्रयुञ्जन्ते तथाहि "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवत्" यानि हि कार्याणि दृष्टिसरणावायान्ति घटपटादीनि तानि हि सकर्तृकाणि भवन्ति क्षित्यादिकान्यपि कार्याणीति तैरपि सकर्तृकैर्भाव्यम्। एतेषाञ्च यः कर्ता स एवेश्वरः इति भवति परमेश्वरस्य सिद्धिः कार्यकारणभावमूलकं तर्कमाश्रित्य। सत्तामूलकं प्रमाणं पाश्चात्त्यदार्शनिकेष्वन्यतमेन देकार्तनाम्ना दार्शनिकेनेश्वरसाधनाय प्रयुज्यते।

तेषामाशयोऽयमस्ति यदहं चिन्तयामीति अहमस्मि। एवं निश्चयात्मकं सिद्धान्तयति यत् "या प्रतीतिरभिव्यक्ता निश्चिता च साऽवश्यमेव सत्या"। परमेश्वरस्याप्यभिव्यक्तिः विशुद्धा निश्चिता चातोऽस्ति परमेश्वरस्यास्तित्वम्। एतादृशं सत्तामूलकं प्रमाणं ब्रह्मसूत्रभाष्येऽद्धैतसिद्धान्तप्रवर्तकाः शङ्कराचार्याः अपि प्रददति आत्मास्तित्वप्रसाधनाय। तत्र ह्याचार्यशङ्करः वदति-"सर्वो ह्यात्मास्तित्वं प्रत्येति, न नाहमस्मीति यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो हि लोको नाहमस्मीति प्रतीयात्" किन्त्वत्राचार्य-शङ्करमते देकार्तमतादन्तरमेतावदस्ति यद् देकार्तः परमेश्वरजीवयोर्भेदमङ्गीकरोति, आचार्यशङ्करस्तु जीवब्रह्मणोरभेदं प्रतिपादयति। अतः देकार्तस्येदं सत्तामूलकं परमेश्वरसाधकं प्रमाणं तादृशं प्राबल्यं नैव वहति यादृशमाचार्यशङ्करस्य सत्तामूलकं प्रमाणं प्राबल्यं वहति। अत एवेदं सत्तामूलकं प्रमाणमनेकैः कान्टप्रभृतिभिः पाश्चात्यैर्दार्शनिकैर्दूषितम्। प्रयोजनमूलकं प्रमाणमेवं प्रदीयते यत् सृष्टिरचनायामद्भुता व्यवस्था दृष्टिगोचरीभवति, अनया व्यवस्थया चानुमीयते यदस्ति कश्चिदस्य व्यवस्थापकः। एतदपि प्रमाणं भारतीयदर्शनेषु बहुशः उपलभ्यते। न्यायदर्शने धृतिमत्त्वहेतुना ब्रह्माण्डादेः पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितत्वसाधनाय प्रयुक्तमनुमानं प्रयोजनमूलकेऽनुमान एवान्तर्भवति। केनोपनिषद्भाष्ये शङ्कराचार्यो-पीदमनुमानं प्रयुक्ते शब्दार्थयोः किञ्चिद्वैपरीत्येन। तदेतत् सर्वमपि दर्शनेषु दर्शनान्तरेषु बहुशः आलोचितं प्रत्यालोचितञ्च। सिद्धान्तत एतत् निश्चयेन वक्तुं शक्यते यत् परमेश्वरविषये यावान् विचारो दार्शनिकैः कृतो नैव तावान् कस्मिंश्चिदन्यस्मिन् विषये कृतः। तथापि किञ्चिदवशिष्यतेऽस्मिन् विषये विचारणाय यच्चास्मिन् शोधप्रबन्धे चिन्तितः। तथाहि न्यायदर्शनाभिमतस्य परमेश्वरस्य विषये दर्शनान्तराणां को दृष्टिः? इति नैव चिन्तितं पूर्वं केनचित्। तदेव चास्मिञ्छोधप्रबन्धे चिन्तितं मया। यत् किञ्चिदप्यस्मिन् विषये दर्शनान्तराणां विप्रतिपत्तिराक्षेपो वा तत्तद्दर्शनेषूप स्थापितः स इदानीं विपश्चितां दृष्टिपथमानेयः एतदेव मनसि कृत्वाऽयं विषयो मया शोधप्रबन्धाय परिगृहीतः।

**शोधप्रबन्धस्य पृष्ठभूमिः-**

भारतीयदर्शनेषु विचारस्वातन्त्र्यस्य भावना बहुषु स्थलेषु दरीदृश्यते। अत्र यथा सर्वस्यैव परमेश्वरात्मकं स्वीकुर्वतामद्वैतिनां समादरो विद्यते तथैव शून्यवादमङ्गीकुर्वतां बौद्धानामपि। विचारस्वातन्त्र्यस्यैव प्रभावोऽयं यदस्मिन् देशे गौतमो बुद्धोऽपि परमेश्वरमनङ्गीकुर्वन्नपीश्वरावतारः स्वीक्रियते। सहिष्णुतायाः भावनाऽस्मिन् देशे बहुश उपलभ्यते। यद्यपि भारतीयदर्शनेषु तादृक् वैचित्र्यं नैवोपलभ्यते यादृक् च पाश्चात्यदर्शनेषु किन्त्वत्र सत्यप्येवं विचारस्वातन्त्र्यं तिरोहितं

नैव भवति। भारतीयदर्शनानामादिकालत एव क्रमशोऽन्येषां दर्शनानां सिद्धान्ताः दर्शनान्तरैः खण्ड्यन्ते स्वकीयश्च मतवादः तर्कयुक्त्या समुपस्थाप्यते। एतस्मिंश्च क्रमे भारतीयदर्शनैः टीकाप्रटीकाखण्डनमण्डनादिक्रमेण उच्चतायाः श्रेष्ठः शिखरो लब्धः। विचारस्य सूक्ष्मेक्षिकता व सूक्ष्मात् सूक्ष्मतरीकृता। विवादास्पदीभूते परमेश्वरात्मके विषये वैमत्यमस्ति विदुषां दर्शनानाञ्च। तदिदं वैमत्यं भारतीयदर्शनानां परिष्कारकमिति मन्यामहे वयम्। यथा शाणोल्लीढो मणिरधिकमुत्कर्षमादधाति तथैवानेन वैमत्येन या दर्शनान्तरैः दर्शनान्तरसिद्धान्तानामालोचना कृता पुनश्च दर्शनान्तरैः साऽऽलोचना खण्डिता, आभ्यामालोचनप्रत्यालोचनाभ्यां भारतीयदर्शनानामनेके सिद्धान्ताः साधु परिष्कृताः सन्तो दृष्टिपथमागच्छन्ति, विद्यतेऽस्माकमेषा दृष्टिः। अयं परमेश्वरविषयकः सिद्धान्तोऽप्येतादृश एव। अत्रापि भारतीयदर्शनेषु मतभेदः, अनेन वैमत्येन च प्रायशः सर्वैरपि दर्शनैरन्यदर्शनीयाः सिद्धान्ता आलोचिताः न्यायदर्शनाभिमतस्येश्वरस्य विषयेऽपीदृश्येवावस्था विद्यते। न्यायदर्शनाभिमतस्येश्वरस्यालोचने न्यायदर्शनस्य समानतन्त्रं वैशेषिकदर्शनं पातञ्जलदर्शनञ्च परित्यज्यान्यैः सर्वैरपि दर्शनैः विशिष्टः प्रयासो विहितः। केषुचित् स्थलेषु चास्तिकदर्शनान्यपि नास्तिकदर्शनैः सहैवावस्थितानि दृश्यन्ते। यथाऽनुमानतः परमेश्वरसिद्धिर्नैव सम्भवतीत्यस्मिन् पक्षे बौद्धजैनदर्शनाभ्यां सहैवास्तिकदर्शनानि सांख्यमीमांसकवेदान्तप्रभृतीन्यवस्थितानि सन्ति। केषुचित् स्थलेषु विद्यतेऽन्या दृष्टिरास्तिकनास्तिकदर्शनानाम्। किन्तु बहुधाऽऽलोचितं परमेश्वरस्य स्वरूपम् दर्शनान्तरैः। चार्वाकबौद्धजैनानां दर्शनानां परमेश्वरनिराकरणे विशिष्टाऽभिरुचिः दृश्यते। बौद्धदर्शनेन साकन्तु सहस्राब्दादप्यधिका दीर्घा संघर्षस्य परम्परा विद्यते। अस्मिन् सङ्घर्षे न्यायदर्शनसिद्धान्तरक्षार्थं गोतम-वात्स्यायनोद्योतकरवाचस्पतिमिश्रोदयनाचार्यादयो बौद्धसिद्धान्तस्थापनार्थञ्च नागार्जुन-दिङ्नागवसुबन्धुधर्मपालधर्मकीर्तिकल्याणरक्षितधर्मोत्तराचार्यशान्तिरक्षितप्रभृतयः बद्धपरिकरा आसन्। यद्यप्येतादृशी दीर्घावधिव्यापिनी संघर्षपरम्परा नास्ति दर्शनान्तरैः साकम् किन्तु दर्शनान्तरैरपि जैन, सांख्य, मीमांसादिभिः न्यायाभिमतेश्वरस्यालोचना तीव्रेण रंहसा प्रबलया च युक्त्या कृता। न्यायदर्शनस्य विपश्चिद्भिः बौद्धदर्शनेन दर्शनान्तरैश्च कृतानां न्यायाभिमतेश्वरस्यालोचनानामुत्तराण्यपि प्रदत्तान्याकूतानि च। नैयायिकशिरोमणिनोदयनाचार्येण च परमेश्वरविषयिणीनां साधनयुक्तीनां प्रतिपादनाय तदसत्त्वावेदिकानां युक्तीनां निरासाय च न्यायकुसमाञ्जलिनामको ग्रन्थो विरचितः। सन्त्यन्येऽपि वर्द्धमान, गङ्गेशोपाध्याय, रघुनाथशिरोमणिप्रभृतयो नैयायिकाः यैरेताः परमेश्वरास्तित्वखण्डिकाः युक्तयो विच्छिन्नाः, अस्य शोधप्रबन्धस्यैषा पृष्ठभूमिः।

**शोधप्रबन्धस्य दृष्टिः-**

बौद्धदर्शनेन साकं न्यायदर्शनस्य यः सहस्राब्दाधिककालं यावत् संघर्षः

सञ्जातः तत्रैषः सिद्धान्तः परमेश्वरविषयको विशेषतो वैमत्यावहः। इमं विषयमधिकृत्य पण्डितश्रीकिशोरनाथझामहोदयैः "न्यायशास्त्रीय ईश्वरवाद" नामक एकः ग्रन्थो विरचितो हिन्दीभाषायाम्। तस्मिन् ग्रन्थे च ग्रन्थकारो बौद्धदर्शनस्य परिप्रेक्ष्ये न्यायशास्त्रीयमीश्वरवादं विवृणोति। अतो यावान् संघर्षः परमेश्वरविषयकः बौद्धदर्शनन्यायदर्शनयोः सञ्जातः सः सर्वोऽपि तत्र प्रायशः सम्पादितः। किन्तु पण्डितश्रीझामहोदयानां दृष्टिरेषास्ति यत् बौद्धदर्शनस्य परिप्रेक्ष्ये न्यायदर्शनीयः परमेश्वरवादः कथङ्कारं क्रमशः परिष्कृतः? कथङ्कारञ्च दोषाणामुद्धाराः कृताः इत्यैतिहासिकसरण्या प्रतिपादयति। अत एव च श्रीमद्भिर्झामहोदयैः नैयायिकानां प्रशस्तमत्यविद्धकर्णादीनामपि मतमुपस्थाप्यते येषाञ्च वस्तुतः सैद्धान्तिकदृष्ट्याऽधिकं महत्त्वं नास्ति। मया शोधप्रबन्धेऽस्मिन् भिन्ना दृष्टिराश्रिताऽत्र त एव सिद्धान्ताः विवेचिताः येषाञ्च सैद्धान्तिकदृष्ट्या महत्त्वमस्ति। यथा कश्चिदाक्षेपो यदि बौद्धैः प्रदत्तो नैयायिकैश्च परिशोधितोऽनन्तरञ्च पुनः पुनराक्षेपपरिशोधनक्रमेण स दोषः प्रदीयते बौद्धैस्तर्हि मयाऽन्तिमो यादृश आक्षेपः प्रदीयते स एवास्मिन् शोधप्रबन्धे प्रदत्तः। अनेके दोषाः प्रत्येकमनेकैः बौद्धैः प्रदीयन्तेऽनेकैश्च भिन्नैः दार्शनिकैः प्रदीयन्ते ते मया प्रयासेनैवं समुपस्थापिताः येन वारं वारं तेषामुपस्थापनमावश्यकं मा भवेत् ये च दोषाः एकेन बौद्धेन दार्शनिकेन प्रदत्ताः यदि त एवान्येनापि प्रदत्तास्तर्हि मयैकवारमेव प्रायशस्ते दोषाः प्रदत्ताः। अस्मिन् शोधप्रबन्धे विशेषत एतदवधार्य मया शोधकार्यमनुष्ठितं येन कस्मिंश्चिद्दर्शनविशेषे पक्षपातो मा भवेत्। अत एव कुत्रचित् स्थलेषु नवीना सरणिः स्वकीयमवलोकनमाश्रित्य मया निर्धारिता। यथा चार्वाकदर्शने प्रमाणमेकविधमेवास्ति प्रत्यक्षमेव। तत्र केषाञ्चित् शास्त्राणामवलोकनेन निर्धारितमस्माभिर्यत् प्रत्यक्षमूलकमनुमानमपीष्यते चार्वाकैः। चार्वाकीय-स्वभाववादस्य विषयेप्येवमेव विपश्चितां मतमस्ति यत् कस्यचिदपि कार्यस्य किञ्चिदपि कारणं नास्ति। अकस्माद्वाद, यदृच्छावाद, नियतिवादादिभिरप्ययं स्वभाववाद आहूयते। अत्र च मया न्यायाभिमतेश्वरस्य चार्वाकदर्शनदिशाऽऽलोचने स्वभावादः कीदृश-श्चार्वाकमते स्वीक्रियते इति नवीनया सरण्या व्यवस्थाप्यते। तदनुसारञ्च न्यायाभिमतेश्वर आलोच्यते। कुत्रचित् स्थलेषु यत्र किञ्चित् प्रमाणं नवीने पक्षे नोपलभ्यते तत्र परम्परया परिगृहीतत्वात् प्राचीन एव सिद्धान्तः स्वीकृतः तमाधारीकृत्य च न्यायाभिमतः परमेश्वरः पर्यालोचितः। यथा सांख्यदर्शनविषये विद्यते विदुषां विप्रतिपत्तिर्यत् सांख्यदर्शनं निरीश्वरं सेश्वरं वा? नवीनाः नैके विद्वांसः सांख्यदर्शनस्य सेश्वरत्वं साधयन्ति, एवमेव मीमांसादर्शनविषयेऽपि विद्यते विदुषां विप्रतिपत्तिर्यत् मीमांसादर्शनं निरीश्वरवादि सेश्वरवादि वा। अत्र तु मीमांसादर्शनस्यार्वाचीना आचार्याः स्वयमपि

मीमांसायाः सेश्वरत्वं व्युत्पादयन्ति। किन्तु परम्पराबलेनोपलब्धानां युक्तीनाञ्च साहाय्येन मया सांख्यदर्शनस्य, मूलरूपे मीमांसादर्शनस्य च निरीश्वरत्वमेव स्वीकृत्य शोधप्रबन्धेऽस्मिन् विचारः कृतः। शङ्कराचार्य, रामानुजाचार्य, मध्वाचार्य, निम्बार्काचार्य, वल्लभाचार्यानुयायिभिर्विभिन्नसिद्धान्तावलम्बिभिर्वेदान्तिभिः परमेश्वरस्य शास्त्रैकप्रमाणकत्वं स्वीक्रियते, मध्वाचार्यपरित्यागेन चान्यैः वेदान्तिभिः शास्त्रैकप्रमाणकत्वाद्ब्रह्मणो जगतोऽभिन्ननिमित्तोपादानकारणता स्वीक्रियते। अत्र तर्काः प्रायशस्त एवेति मयैकत्रैव प्रतिपादिताः अद्वैतवेदान्तनिरूपणावसरेऽन्यत्र तद्वेदान्तनिरूपणावसरे च संक्षेपत एव ते विषयाः प्रतिपादिताः। एवमेव वेदपौरुषेयत्वानुमानं नैयायिकोक्तं दूषयितुं मीमांसकैः या रीतिः समाश्रीयते ताःरीतयः एव वेदान्तिभिरपि प्रायशः आश्रीयन्ते। अत्रापि मया मीमांसादृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनावसर एव विस्तरतो युक्तयः समुपस्थापिताः, अन्यत्र च संक्षेपतः, याश्च नवीनाः युक्तयः ताश्च विस्तरेणालोचिताः। एवमेवाऽदृष्टस्यास्वीकरणमपि विद्यते-अद्वैत, विशिष्टाद्वैत, निम्बार्क, वल्लभप्रभृतयो वेदान्तिनोऽदृष्टस्य सत्तां नैवाङ्गीकुर्वन्ति तत्रैकैव युक्तिः समाश्रिता एतैः सर्वैरपि यत् परमेश्वरः स्वामिवत् जीवकृतकर्मणां फलं ददाति तत्र नास्त्यावश्यकता काचिदप्यदृष्टस्वीकरणस्य। एतदपि मयाऽद्वैतवेदान्तदिशा समालोचनावसरे प्रतिपादितं विस्तरेण युक्तिं प्रतिपाद्यान्यत्र स्थलेषु चात्यन्तं संक्षेपतः प्रतिपादितम्। एतदेव मनसा निश्चित्य मया समेषां दर्शनान्तराणां दृष्ट्या क्रमशः प्रथमं न्यायाभिमतेश्वरस्य पर्यालोचनं विधायाऽनन्तरञ्चान्त्ये समेषामाक्षेपाणां परमेश्वरविरोधिनीनां युक्तीनाञ्च समीक्षणं कृतं येन वारं वारं एकमेव विषयमवलम्ब्य युक्तिप्रदर्शनरूपं पिष्टपेषणं मा भवेत्। अत एव विषयप्रवेशेऽपि बहु नैव प्रतिपादितम् विषये यावन्निर्वचनेन प्रवेशो भवेत् तावदेव प्रतिपादितम्।

# कृतज्ञताज्ञापनम्

प्रथमं तावत् स्वकीयमिष्टदेवं साम्बशिवं मनसा शतशः स्मरामि प्रणमामि च येषामनुकम्पया दीर्घकालिकमिदं शोधकार्यं सम्पादयितुं मया साफल्यमवाप्तम्। पितामहानां पं० श्रीकुञ्जबिहारिमिश्राणां चरणकमलयोः प्रणतिपुष्पाञ्जलिं वितरामि।

अनन्तरं पितरं पं० श्रीरमाकान्तमिश्रं मातरं श्रीमती अनारा देवीं च प्रणमामि, तौ प्रति च कृतज्ञतां ज्ञापये याभ्यां बाल्ये वयस्येव सत्यपि महति स्नेहे मदीयं हितमन्विच्छद्भ्यां काशीं सम्प्रेषितोऽहं विदुषां सकाशम् स्वस्मात् दूरीकृतश्च। एताभ्यामेव चाहं संस्कृतभाषामधिकृत्याध्ययनाय प्रवर्त्तितः, संस्कृतभाषामधिकृत्या-ध्ययनार्थमनुरागश्चोत्पादितः।

पूज्यान् पितृकल्पान् पितृव्यचरणान् डॉ० अम्बरीषमिश्रान् व्याकरणाचार्यान् प्रति कृतज्ञतां ज्ञापयितुं शब्दानेव नोपलभे येषां कृपया स्नेहेन व वाराणस्यां गुरूणां सान्निध्यमधिगतम् एतैरेव वाराणस्यां पठनायाहं समानीतः।

स्व० पं० श्री ब्रह्मदत्तमिश्रमहोदयान् प्रत्यपि कृतज्ञतां ज्ञापये यैर्वार्द्धक्येन शरीरे जीर्णे सत्यपि स्नेहेनाहमध्यापितः, विविधेषु महत्त्वपूर्णेषु प्राथमिकेषु ग्रन्थेषु लघुकौमुद्यादिषु मदीयः प्रवेशश्च सम्पादितः। यद्यपीदानीमस्मिन् क्षणभङ्गुरे संसारे ते न सन्ति किन्तु तेषां स्मृतिरिदानीमपि मह्यं प्रेरणां प्रददाति।

प्रातःस्मरणीयान् पूज्यपादान् स्वामिशाश्वतानन्दतीर्थमहोदयान् प्रत्यपि कृतज्ञतां ज्ञापये यैर्व्याकरणाध्ययने सम्प्रवृत्ते मयि न्यायशास्त्रमधिकृत्याध्ययनायाभिरुचिः समुत्पादिता।

गुरुवर्यान् प्रो० वशिष्ठत्रिपाठिमहोदयान् प्रति कैः शब्दैः कृतज्ञतां ज्ञापयामीति नावगच्छामि। यैरनेके ग्रन्था स्नेहेन अध्यापिताः। यैश्च नैराश्ये तमसि मग्नोऽहं वारं वारं समुद्बोधितः समुत्साहितः, पुत्रकल्पेन स्नेहेन सम्मानितः, शोधकार्यसम्पादने सर्वविधः सहयोगश्च प्रदत्तः।

अनन्तरं स्वकीयां धर्मजायां सुनन्दां प्रति कृतज्ञतां ज्ञापये यया विपरीतास्व-प्यवस्थासु मदीयः उत्साहः संवर्द्धितः, शोधकार्यसम्पादनाय च प्रेरितः।

अन्तेऽन्यानपि काञ्चन गुरून् प्रति कृतज्ञतां ज्ञापये येषां साक्षाद्यद्यपि शोधकार्येऽस्मिन् योगदानं नास्ति किन्तु शोधकार्यसम्पादनयोग्यतालाभे परम्परया येषां सुमहद् योगदानमस्ति, ते चेमे (१) पं० श्रीशालिग्राम मिश्रः (२) डॉ० नर्वदेश्वर तिवारी (३) पं० श्री वि० रामकृष्णभट्टश्च।

**–सच्चिदानन्दमिश्रः**

# सङ्केतसूची

| | | |
|---|---|---|
| अङ्गुत्तरनिकायः | – | अं०नि० |
| अद्वैतब्रह्मसिद्धिः | – | अ०ब्र०सि० |
| अद्वैतसिद्धिसिद्धान्तसारः | – | अ०सि०सि०सा० |
| अन्ययोगव्यवच्छेदद्वात्रिंशिका | – | अ०यो०व्य०द्वा० |
| अभिधर्मकोशः | – | अ०ध०को० |
| अर्थसङ्ग्रहः | – | अ०सं० |
| आत्मतत्त्वविवेकः | – | आ०त०वि० |
| आप्तपरीक्षा | – | आ०प० |
| उपस्कारः | – | उप० |
| उपस्कारविवृतिः | – | उप०वि० |
| ऐतरेयारण्यकम् | – | ऐत०आ० |
| कणादरहस्यम् | – | क०रह० |
| केनोपनिषद् | – | केन उप० |
| कौस्तुभप्रभा | – | कौ०प्र० |
| गद्यपद्यात्मकन्यायकुसुमाञ्जलिः | – | गद्य०न्या०कु० |
| चतुःशतकम् | – | च०श० |
| छान्दोग्योपनिषद् | – | छा०उप० |
| जैनदर्शन | – | जै०द० |
| जैमिनीयन्यायमालाविस्तरः | – | जै०न्या०मा०वि० |
| तत्त्वप्रदीपिका | – | त०प्र० |
| तत्त्वमुक्ताकलापः | – | त०मु०क० |
| तत्त्वमुक्ताकलापः सर्वार्थसिद्धिः | – | त०मु०क०स०सि० |
| तत्त्वसङ्ग्रहः | – | त०सं० |
| तत्त्वसङ्ग्रहपंजिका | – | त०सं०पं० |

| | | |
|---|---|---|
| तत्त्वार्थसूत्र | – | त०सू० |
| तन्त्रवार्त्तिकम् | – | त०वा० |
| तर्कताण्डवम् | – | त०ता० |
| तैत्तिरीयोपनिषद् | – | तै०उप० |
| तैत्तिरीयब्राह्मणः | – | तै०ब्रा० |
| तैत्तिरीयसंहिता | – | तै०सं० |
| दर्शन दिग्दर्शन | – | द०दि० |
| दीघनिकाय | – | दी०नि० |
| द्रव्यसङ्ग्रहः | – | द्र०सं० |
| द्वादशदर्शनसङ्ग्रहः | – | द्वा०द०सं० |
| न्यायालङ्कारः | – | न्या०अलं० |
| न्यायकन्दली | – | न्या०क० |
| न्यायकुसुमाञ्जलि | – | न्या०कु० |
| न्यायकुसुमाञ्जलि कारिका | – | न्या०कु०का० |
| न्याकुसुमाञ्जलि हरिदासी | – | न्या०कु०हरि० |
| न्यायपरिशुद्धिः | – | न्या०परि० |
| न्यायभाष्यम् | – | न्या०भा० |
| न्यायभूषणम् | – | न्या०भू० |
| न्यायमञ्जरी | – | न्या०मं० |
| न्यायवार्तिकम् | – | न्या०वा० |
| न्यायवार्तिकतात्पर्यटीका | – | न्या०वा०ता०टी० |
| न्यायविनिश्चयः | – | न्या०वि०नि० |
| न्यायविनिश्चयविवरणम् | – | न्या०विनि०वि० |
| न्यायसिद्धाञ्जनम् | – | न्या०सि० |
| न्यायसिद्धान्ततत्त्वामृतम् | – | न्या०सि०त० |
| न्यायसिद्धान्तमुक्तावली | – | न्या०सि०मु० |
| न्यायसूत्रम् | – | न्या०सू० |
| पञ्चदशी | – | प०द० |
| पञ्चपादिका | – | प०पा० |
| पञ्चपादिकाविवरणम् | – | प०पा०वि० |

| | | |
|---|---|---|
| पञ्चपादिकातत्त्वदीपनम् | – | प०पा०त० |
| पदार्थतत्त्वनिरूपणम् | – | प०त०नि० |
| परीक्षामुखसूत्रम् | – | प०मु०सू० |
| पातञ्जलयोगदर्शनम् | – | पा०यो०द० |
| प्रकरणपंचिका | – | प्र०पं० |
| प्रत्यक्तत्त्वचिन्तामणि: | – | प्र०त०चि० |
| प्रभाकरविजय: | – | प्र०वि० |
| प्रमाणवार्तिकम् | – | प्र०वा० |
| प्रमेकमलमार्तण्ड: | – | प्र०क०मा० |
| प्रमेयरत्नमाला | – | प्र०र०मा० |
| प्रशस्तपादभाष्यम् | – | प्र०पा०भा० |
| बार्हस्पत्यसूत्रम् | – | बा०सू० |
| बुद्धचरितम् | – | बु०च० |
| बृहदारण्यकोपनिषद् | – | बृ०उप० |
| बृहदारण्यकोपनिषद्भाष्यम् | – | बृ०उप०भा० |
| बृहदारण्यकोपनिषद्भाष्यवार्तिकम् | – | बृ०उप०भा०वा० |
| बोधिचर्यावतार: | – | बो०च० |
| बोधिचर्यावतारपंजिका | – | बो०च०पं० |
| बौद्धदर्शन | – | बौ०द० |
| ब्रह्मसूत्रम् | – | ब्र०सू० |
| ब्रह्मसूत्रशाङ्करभाष्यम् | – | ब्र०सू०शा०भा० |
| भारतीयदर्शन | – | भा०द० |
| भारतीय दर्शन की रूपरेखा | – | भा०द०की रूप० |
| मज्झिमनिकाय | – | म०नि० |
| मध्वसिद्धान्तसार: | – | म०सि०सा० |
| माण्डूक्यकारिका | – | मा०का० |
| मानमनोहर: | – | मा०म० |
| मानमेयोदय: | – | मा०मे० |
| मानसोल्लास: | – | मा०उ० |
| मिलिन्दप्रश्न | – | मि०प्र० |

| | | |
|---|---|---|
| मीमांसादर्शन | – | मी०द० |
| मीमांसान्यायप्रकाशः | – | मी०न्या०प्र० |
| मीमांसापादुका | – | मी०पा० |
| मीमांसापादुकापरित्राणम् | – | मी०पा०परि० |
| मीमांसाशास्त्रकुतूहलम् | – | मी०शा०कुतू० |
| मीमांसासूत्रम् | – | मी०सू० |
| मुण्डकोपनिषद् | – | मु०उप० |
| मैत्रायणी संहिता | – | मैत्रा०सं० |
| यतीन्द्रमतदीपिका | – | य०म०दी० |
| योगसूत्रम् | – | यो०सू० |
| योगाचारभूमिः | – | यो०भू० |
| वाक्यपदीयम् | – | वा०प० |
| विवरणप्रमेयसङ्ग्रहः | – | वि०प्र०सं० |
| विवेकचूडामणिः | – | वि०चू० |
| वृत्तिसारः सांख्यसूत्रटीका | – | वृ०सा० |
| वेदान्तकौस्तुभः | – | वे०कौ० |
| वेदान्तपरिभाषा | – | वे०परि० |
| वेदान्तपारिजातसौरभम् | – | वे०पा०सौ० |
| वेदान्तसारः | – | वे०सा० |
| वैशेषिकसूत्रम् | – | वै०सू० |
| वैशेषिकसूत्रवृत्तिः | – | वै०सू०वृ० |
| शास्त्रदीपिका | – | शा०दी० |
| शुक्लयजुर्वेदसंहिता | – | शा०यजु०सं० |
| शुद्धाद्वैतमार्तण्डः | – | शु०अ०मा० |
| श्लोकवार्तिकम् | – | श्लो०वा० |
| श्वेताश्वरोपनिषद् | – | श्वे०उप० |
| षड्दर्शनसमुच्चयः | – | ष०द०स० |
| संक्षेपशारीरकम् | – | सं०शा० |
| सर्वदर्शनसंग्रहः | – | स०द०सं० |
| सर्वमतसंग्रहः | – | स०द०सं० |

| | | |
|---|---|---|
| सर्वसिद्धान्तसङ्ग्रहः | – | स०सि०सं० |
| सांख्यकारिका | – | सां०सं० |
| सांख्यसूत्रम् | – | सां०सू० |
| सांख्यसूत्रवृत्तिः | – | सां०सू०वृ० |
| सिद्धान्तबिन्दुः | – | सि०वि० |
| सिद्धिविनिश्चयः | – | सि०विनि० |
| सेश्वरमीमांसा | – | से०मी० |
| स्याद्वादमञ्जरी | – | स्या०वा०मं० |

# विषयानुक्रमणिका

**(भाग ख)**



**(भाग ग)**

# प्रथमोऽध्यायः

## विषयप्रवेशः

"संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनास्ति किम्" एवं वदता केनचित् कविना सुष्ठ्वेवोक्तम्। अयं संसार एव सर्वाश्चर्यप्रदमिन्द्रजालमस्ति। अनादिकालत एवास्मिन् संसारे निवसतो मानवस्य मनस्यनेके प्रश्ना आविर्भवन्ति। संसारोऽयं कौतुकाकीर्णः विविधाश्चर्याप्रदः। मानवो यदाऽस्मिन् जगतीतले जन्म गृह्णाति तदा प्रभृत्येव कौतुकावहैः दृश्यैश्चतुर्दिक् आत्मानं परिवेष्टितं प्राप्नोति। प्रतिदिनं प्रातः सूर्यस्य नियमेनोदयः, सुधाकरस्य चन्द्रस्य प्रतिनक्तं स्वरूपपरिर्त्तनेनोपस्थितिः। असंख्यतारागणानां समुपस्थितिः, ऋतूनां प्रतिवर्षं समयेन नियमानुसारमेवागमनम् कस्य हृदय आश्चर्यं नैवोत्पादयन्ति। कश्चिन्मानवो जन्मत एव सुविचारसम्पन्नो बुद्धिमान् दृश्यते, कश्चिच्चः मूर्खः, कश्चित्प्रकृत्यैव कृपालुः कश्चिच्च निर्दयः नैकविधाः मानवाः नैकविधा प्राणिनश्चास्मिन् संसारेऽवलोक्यन्ते। विविधाहार-व्यवहाराचारविचारस्वभावाः पाणिनो जीवाश्च दृष्टिपथमायान्ति। जीवन्नरः क्षणाभ्यन्तर एव स्मृतिमात्रशेषो भवति। किमिदं सर्वम्? कुत एतत्सर्वमाविर्भवति? केन वैतत् सर्वं परिचाल्यते? कश्चैतत् परिचालयति? सुनियन्त्रितयन्त्र इवायं संसारो ब्रह्माण्डश्च केन परिचालकेन नियन्त्रितम्? कोऽहम्? कीदृशश्च मदीयं स्वरूपम्? इत्यादयोऽनेके प्रश्नाः मानवीये मस्तिष्के परिभ्रमन्ति। इमान् प्रश्नानुत्तरयितुं मानवो स्वकीयाज्जन्मनः प्रभृत्येव प्रयतते। उपनिषत्सु वेदेषु चेमे प्रश्नाः केचन विवेच्यन्ते उपस्थाप्यन्ते च-

**"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।**
**केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति।।"[१]**

इदमिन्द्रजालं संसारमेव विवेचयितुं मानवः प्रयतते वैदिककालत आरभ्येदानीं प्रभृति। वैदिककालेऽत एव विभिन्नानां दृष्टिकोणानामाश्रयणेन बहुदेवतावादः एकदेवतावादः सर्वेश्वरवादश्च व्यवहृतिमायाताः। आधुनिके युगे वैज्ञानिकानामनेके सिद्धान्ताः ब्रह्माण्डोत्पत्तिविषयकाः अनेके वादाश्चात एवाविर्भूताः। किन्तु संसारस्य रहस्यमयता यथापूर्वमेव विद्यते नैव किञ्चिदपि हीना। एको वैज्ञानिको यं सिद्धान्तं

स्थापयति द्वितीयस्तं परिष्करोति खण्डयति वा। ब्रह्माण्डोत्पत्तिविषयका अनेके वादा: अत एव व्यवहृतिमानीता:, कस्यचिद्वैज्ञानिकस्य मतमस्ति यद्ब्रह्माण्डेऽस्मिन् सङ्कोचविकासा: क्रमशो भवन्ति कदाचित् सङ्कोचो भवति कदाचिच्च विकास:। इदानीं विकासो भवत्यस्य ब्रह्माण्डस्य एकाया आकाशगङ्गाया अपराऽकाशगङ्गा दूरीभवति। एकस्मात्सौरमण्डलादपरं सौरमण्डलं विसर्पति अनन्तरञ्च सङ्कोचो भविष्यति। अनेके नवीना: ग्रहा: तारकाश्च समुत्पन्ना: भवन्ति। अस्ति सिद्धान्तेऽस्मिन्नपि विप्रतिपत्तिरनेकेषां वैज्ञानिकानाम्।

### प्रमुख: प्रश्न:

संसारविषयकेष्वेतेषु प्रश्नेषु द्वयो: प्रश्नयो: प्रामुख्यमस्ति तौ चेमौ स्त: केनैतज्जगन्निर्मितम्? केन प्रकारेण चैतन्निर्मितम्? एतयोरुभयो: प्रश्नयोर्दर्शनानां मूलप्रश्नत्वेन प्राधान्यमस्ति। महापण्डितो राहुलसांकृत्यायनमहोदयो विवृणोति यदुपनिषदां मूल: प्रश्नोऽयमस्ति विश्वस्य किं तत् मूलमुपादानं येन विज्ञातेन सर्वं विज्ञातं भवति।[२] एतयो: प्रश्नयोरेव समाधानमन्विष्यते सर्वैरपि दार्शनिकै:, उपनिषत्सु वेदेष्वारण्यकग्रन्थेषु च प्राधान्यमस्त्यनयो: प्रश्नयो:। एतयो: प्रथमेन ब्रह्माण्डकर्तृविषयिणी जिज्ञासोपस्थाप्यतेऽपरेण च सृष्टिप्रक्रियाविषयिणी। अनयो: प्रश्नयोरुत्तरविषये वेदेषूपनिषत्स्वारण्यकेषु नैका: सिद्धान्ता उपस्थाप्यन्ते तत्र कुत्रचिदीश्वरस्यैवोपादानता निमित्तकारणतोभयापि विद्यते इति, कुत्रचित् सत्त्व रजस्तमोगुणाया: प्रकृतेरुपादानता निमित्तकारणता चेश्वरस्य प्रतिपाद्यते, कुत्रचिच्च परमाणूनामेवोपादानता प्रतिपाद्यते परमेश्वरस्य च निमित्तकारणता। रहस्यपूर्णस्य जगतो रहस्यान् समाधातुं परमेश्वरविषयेऽनेके विचारा उपस्थाप्यन्ते कुत्रचित् भ्रातृभावना, मित्रभावना, पितृभावना, पुत्रभावना चेश्वरेऽस्तीति व्यवस्थाप्यते।

### वैदिकसाहित्ये परमेश्वरविषयिणी दृष्टि:

वैदिकसाहित्ये कवि: कुत्रचिदीश्वरे जनकत्वं भावयति कुत्रचिच्च बन्धुत्वादिकम्। वेदस्य एकस्मिन् मन्त्रे कवि: परमेश्वरविषये भावयति यत् योऽस्माकम् पिता, अस्माकं विधाता य: देवानामेक एव नामधा स: परमेश्वरो भुवनानि धामानि वेद।[३] अपरत्रैकस्मिन् मन्त्रे परमेश्वरोऽस्माकं विधाता, अस्माकं जनक: यत्र देवा अमृतमानशाना: तृतीये धामन्यध्यैरयन्त स विश्वा भुवनानि धामानि वेद एवं परमेश्वरविषये प्रतिपाद्यते।[४] वैदिक: कवि: परमेश्वरे जीवसख्यभावं प्रतिपादयन् वक्ति यत् द्वौ पक्षिणौ सहैव स्थितौ सर्वदैव सहस्थितौ सखायौ समानं वृक्षं परिषस्वजाते तयो परिष्वक्तयोरन्य

एकः जीवात्मा वृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं विचित्रास्वादरूपं भक्षयति अन्यः परमेश्वरश्चाभुञ्जानो केवलं पश्यति।[५] वैदिकः कविः परमेश्वरे एकत्र पितृभावं पुत्रभावं ज्येष्ठभ्रातृभावं कनिष्ठभावञ्च पश्यति वदति च-एक एव देवो मनसि प्रविष्टः प्रथमो जातः स देवः अस्माकं पिता उत वा पुत्रः उत वा ज्येष्ठभ्राता उत वा कनिष्ठभ्राता।[६] परमेश्वरस्य मातृत्वं पितृत्वञ्च मानयन् वैदिकः कविर्वदति यत् परमेश्वरो भूतस्य भुवनस्य अखिलस्य ब्रह्माण्डस्य राजा, सः परमेश्वर एवेमां पृथिवीं धारयति परमेश्वरेण धारितैवैषा पृथिवी स्थिता। परमेश्वर एवेमानि भुवनानि समस्तञ्च विश्वं आश्रितमस्ति तं परमेश्वरमहं पितरं मन्ये मातरञ्च मन्ये।[७] अस्मिन् मन्त्रे परमेश्वरस्य पितृभावं मातृभावञ्च प्रतिपाद्यते। यद्यपि वैदिकः कविरस्मिन् मन्त्रे परमेश्वरशब्दं नैव प्रयुङ्क्ते इन्द्रशब्दं प्रयुङ्क्ते। परवर्तिसाहित्येऽस्य शब्दस्य प्रयोगो देवताविशेषविषये भवति यश्च देवानां राजा। किन्त्वालोचनेन वैदिकसाहित्यस्य सिद्धं भवति यद्वेदेषु शब्दस्यास्य प्रयोगः परमेश्वरविषय एव। अत्र च प्रमाणविधया "इन्द्रो मायाभिः पुरुरूप ईयते" "रूपं रूपं मघवा बोभवीति" इत्यादीनि वाक्यानि दातुं शक्यन्ते तथा ह्येतेषु स्थलेषु परमेश्वरवाचकेनैवेन्द्रपदेन भाव्यम् मायया परमेश्वरस्यैवानेकरूपत्वं प्रतिपाद्यत इति युक्तम् नत्विन्द्रस्य। अत्र चानुशासनमप्यस्ति तथाहि अस्य "इन्द्र" शब्दस्य सिद्धिः परमैश्वर्यार्थकेन इदि धातुना भवति। अतः "इदि परमैश्वर्ये" इति धातुना निष्पन्नस्येन्द्रशब्दस्य परमेश्वरबोधकत्वमेव युक्तम्। मुण्डकोपनिषदि परमेश्वरस्य सर्वभूतानामन्तरात्मत्वं प्रतिपाद्यत एकस्मिन् मन्त्रे। तत्र परमेश्वरस्यैकं स्वरूपं प्रतिपाद्यते यत् अग्निरस्य परमेश्वरस्य मूर्धा, सूर्याचन्द्रमसावस्य चक्षुषी, दिशोऽस्य परमेश्वरस्य श्रोत्रे, वेदाश्चास्य वाक्स्थानीयाः, वायुरस्य परमेश्वरस्य प्राणभूतः, विश्वमस्य हृदयस्थानीयम्, पृथिवी च चरणस्थानीया एष परमेश्वरः सर्वभूतान्तरात्मा।[८] एकस्मिन् मन्त्रे समेषां देवानामेकत्वं प्रतिपादन्नुच्यते यत् परमार्थतो मूलं तत्त्वमेकमेवास्ति विद्वांसस्तमेवैकं तत्त्वं इन्द्रमित्रवरुणाग्निगरुत्मदग्नियमादिभिः शब्दैः वदन्ति केवलं शब्दानामेवास्त्यन्तरं मूलतः तत्त्वन्त्वेकमेव।[९] ऋग्वेदेऽपरत्राप्युच्यते यत् तदेवैकं तत्त्वं मधुरया मानवीयया वाचा वदति, पक्षिणां कलरवैः स एव कूजति, विकसितानां पुष्पाणां रूपेण स एव हसति, प्रचण्डैः मेघगर्जितैः प्रवातादिभिः स एव क्रोधमाविर्भावयति नभसि च सूर्यचन्द्रतारकादीन् स एव यथास्थानं स्थापयति।[१०] पुरुषसूक्ते "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्" इत्येवं रूपेण वैदिकः ऋषिरखिलानामपि पदार्थजातानां ये च भूताः यानि च भवितव्यानि तेषां समेषामपि परमेश्वरात्मत्वं प्रतिपादयति। नहि परमेश्वराद्भिन्नं किमप्यस्ति संसारे। एवमीश्वरविषयिका अनेकाः दृष्टयो दृष्टिपथमायान्ति।

## परमेश्वरस्य दुर्विज्ञेयता

रहस्यमयस्यास्य जगतो नियन्ताऽपि रहस्यमय एव। कीदृशमस्य परमेश्वरस्य स्वरूपम्? कीदृगसौ विद्यते? किं करोति? किमर्थं करोति? सर्वमपि दुरासदं दुर्विज्ञेयञ्च विद्यते। नात्र कश्चनापि सिद्धान्तो दृष्टिपथमायाति येन सरलतयाऽसौ परमेश्वरो विज्ञायेत। "नेति" "नेति" एवं निषेधमुखेनास्य विज्ञानं कर्तुमत एव प्रतिपाद्यते। परमेश्वरस्य दुर्विज्ञानत्वं प्रतिपादयन् एकत्र वैदिकः ऋषिः वदति "नेन्द्रो अस्तीति नेम उत्व आह क ईं ददर्श कमभिष्टवाम्।"[११] केनोपनिषदीश्वरस्य ब्रह्मणो दुर्विज्ञेयत्वविषये आख्यायिकैका मनोरञ्जिका प्रदीयते। यत् एकदा देवासुरसङ्ग्रामेऽसुरेभ्यो देवाः विजयं प्रापुः। विजयं प्राप्य च ते देवा अमहीयन्त यदेषोऽस्माकमेव विजयोऽस्ति, एषाऽस्माकमेव महिमा। तदा ब्रह्म देवानात्म-प्रभावज्ञापनाय हिमालयप्रदेश एकस्य यक्षस्य वेषेण स्थितः। तदा देवा अविचारयन् यत् कोऽसौ तेजस्वीति, एतद्विज्ञानार्थं ते देवाः देवाग्रगण्यमग्निं प्रेषयामासुः। यदा चाग्निस्तत्सकाशमधिगतस्तदा यक्षस्य तस्य तेजसा परिभूतो नैव किञ्चित्प्रष्टुं सफलीभूतः। यक्ष एव तदाऽग्निना पप्रच्छ कोऽसि त्वम्? किञ्च ते वीर्यमस्ति? तदाऽग्निनोत्तरितं यदहमग्निः, यच्च किञ्चित् पृथिव्यां सर्वमपि दग्धुं मे सामर्थ्यमस्ति। यक्षस्तदाऽग्नेः पुरस्तादेकं तृणं निधायाब्रवीत् यदिमं दह। अग्निश्च तं तृणं दग्धुं तीव्रेण वेगेन प्रवृत्तः किन्तु तृणं दग्धुं नैव शशाक। लज्जितश्च तृणदहनेऽसमर्थत्वात् प्रतिनिवृत्तः। प्रत्यागत्य च देवेभ्य न्यवेदयत् नाहं तं यक्षं विज्ञातुमपारयम्। तदा देवाः वायुं प्रैषयन् तद्विज्ञानार्थम्। वायुरपि यक्षमधिगतः सन् यक्षस्य तेजसा पराभूतः किञ्चिदपि प्रष्टुं नैवाशक्नोत्। पुनःस यक्षो वायुना पप्रच्छ कोऽसि त्वम्? किञ्च ते वीर्यमस्ति? वायुनोत्तरितम् यदहं वायुः मातरिश्वा यत्किञ्चिदपि पृथिव्यां विद्यते तत्सर्वमप्यादातुं शक्नोमि। तदा स यक्षो वायोः पुरस्तात् तृणं निधायाब्रवीदिमं तृणमादीयताम्। वायुश्च सम्पूर्णेन जवेन तं तृणमादातुं प्रायतत किन्तु नैव शशाक तं तृणमादातुम्। लज्जितश्च प्रतिनिवृत्तोऽवदत् यन्नाहं वेद तं यक्षं कोऽसाविति। तदा देवराज इन्द्रस्तद्विज्ञानार्थं गतः। इन्द्रे गते च स यक्षस्तिरोहितो बभूव। इन्द्रोऽपि नैवं तं विज्ञातुं समर्थः। अनन्तरमिन्द्रो विचारमग्न एव तत्र स्थितस्तदा परमेश्वरकृपयाऽम्बा गौरी तस्मिन् स्थले दर्शनविषयीभूताऽभवत्। तदा स इन्द्रः श्रद्धया गौरीं पृष्टवान् क आसीत् स यक्षः? गौरी च तदेन्द्रं बोधितवती। एवमत्र केनोपनिषदि दृष्टान्तेनानेन ब्रह्मणो दुर्विज्ञेयता प्रतिपाद्यते।[१२] श्वेताश्वतरोपनिषदि परब्रह्मणो विषय उच्यते यत् स महान् पुरुषः परमेश्वरोऽपाणिपादः हस्तपादविरहितः ग्रहीताऽस्ति, अयं परमेश्वरोऽक्षि-विरहितोऽपि पश्यति, श्रोत्रहीनोऽपि शृणोति। सः सर्वमपि वेत्ति तस्य किञ्चिदपि

वेद्यमवशिष्टं नास्ति किन्तु तस्य कश्चिदपि वेत्ता नास्ति तमेवाग्रगण्यं महान्तं पुरुषमाहुः विद्वांसः।[१३] अत्र मन्त्रेऽपि परमेश्वरस्य दुर्विज्ञेयता प्रतिपाद्यते एतानि तूदाहरणमात्राण्येव सन्त्यन्येऽपि मन्त्रा ये परमेश्वरस्य दुर्विज्ञेयतां वदन्ति।

## ईश्वरस्योपादानकारणता

वैदिके साहित्येऽद्वैतभावनायाः प्राधान्यमस्ति। अत्र नासदीयसूक्ते वैदिकः ऋषिः कोऽहम्? कस्त्वम्? कुत आयातः? प्रभृत्यादिकालत एव मानवमस्तिष्के जायमानान् प्रश्नान् समाधातुं विचारयति यत्-तदानीम् नैवासदासीत् नैव च सदासीत् नैव च व्योमात्परं किञ्चन आसीत्......किमासीत्तस्मिन् गभीरगहने जलगर्भे? नैवामरत्वमासीत् नैव मृत्युरासीत्। दिनमपि नासीत् रजनी अपि नासीत् ब्रह्ममात्रमेव श्वासरहितं निःश्वसिति स्म। नासीदेतदतिरिक्तं किञ्चिदपि। तमः तमसाऽऽच्छादितं आसीत् घोरश्च गर्त्त आसीत्। अत्राद्वैतस्य प्रतिपादनं क्रियते। एवमन्यत्रापि प्रतिपाद्यतेऽद्वैतमेव "सर्वं खल्विदं ब्रह्म" इत्यादिभिः सूक्तिभिः। एकत्र स्थले वैदिकः ऋषिः प्रश्नोत्तरमुखेन स्वेतरनिरपेक्षं ब्रह्म कारणमस्ति संसारस्येति विचारयति तथाहि किंस्विद्वनम् आसीत्? कः सः वृक्ष आसीत् यतो पृथिवीयं द्यौश्च निष्टतक्षुः। मनीषिणः मनसा पृच्छत यदेतत् भुवनानि धारयन् अध्यतिष्ठत्।[१४] अपरेण मन्त्रेण समाधीयते यद्ब्रह्मैव तद्वनमासीत्, ब्रह्मैव स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणः मनसा वः विब्रवीमि ब्रह्मैव भुवनानि धारयन् अध्यतिष्ठत्।[१५] अत्र ब्रह्मैवेत्यत्रैवकारः तदतिरिक्तस्य कस्यचिदपेक्षां व्यावर्तयति। तद् ब्रह्म स्वेतरेण कारणान्तरेण निरपेक्षमेव जगतोऽस्य कारणं भवति। अतः सिद्धान्तितं भवत्येतद् यत् ब्रह्मैतत् जगतो निमित्तकारणमुपादानकारणञ्चोभयमपि विद्यते। एताविमौ मन्त्रौ ब्रह्मसूत्रस्य वेदान्तकौस्तुभव्याख्याने परब्रह्मणो निमित्ताभिन्नोपादानकारणतां प्रतिपादयितुं प्रमाणविधयोपस्थापितौ स्तः।[१६] उपनिषत्सु बहुषु स्थलेषु परमेश्वरस्योपादानताप्रतिपादकानि वाक्यान्युपलभ्यन्ते। छान्दोग्योपनिषदि प्रश्नोत्तरमुखेन परमेश्वरस्योपादानता प्रतिपाद्यते। आरुणेः पुत्रः श्वेतकेतुर्यदा गुरुकुलाद्वेदमधीत्य गृहं प्रत्यावर्तितस्तदाऽऽरुणिर्ज्ञातवान् यदयं स्तब्धः स्वकीये ज्ञानेऽभिमानी जातोऽस्ति। एषा चास्य भावना दूरीकर्तव्येति विचार्य पप्रच्छ पुत्रं श्वेतकेतुमारुणिः सोम्य! श्वेतकेतो! त्वं शास्त्राध्ययनं परिसमाप्येहागतोसि। किं त्वया ज्ञातमस्ति तत् येन ज्ञातेन सर्वं विज्ञातं भवति, येन मतेन सर्वं मतं भवति। येन श्रुतेन सर्वमश्रुतमपि श्रुतं भवति तदा श्वेतकेतुनोक्तं कीदृशोऽयमादेशोऽस्ति भगवन्! उपदिश्यताम्। तदाऽऽरुणिः प्रोक्तवान् यथैकेन मृत्पिण्डेन ज्ञातेन सर्वं मृण्मयं विज्ञातं भवति, यथैकेन लौहमणिना विज्ञातेन

सर्वमपि लौहमयं विज्ञातं भवति तथैवाऽयमप्यादेशः। एवमेव तेन ब्रह्मणा विज्ञातेन सर्वमपि विज्ञातं भवति।[१७] सोम्य! श्वेतकेतो! सदेवेदमग्र आसीत् नासीत्तेनातिरिक्तं किञ्चिदपि वस्तु। केषाञ्चिद्विदुषाम् मतमस्ति यत् पूर्वं केवलमसदासीत् तेनासतैव सदुत्पन्नम्। किन्तु सोम्य! श्वेतकेतो! कुत एवं स्यात् असतः सदुत्पत्तिः? अत एतदेव स्वकरणीयं सोम्य! यत् अग्रे सदेवासीदेकमद्वितीयम्। तत् सदैक्षत बहुस्याम् प्रजायेय इति तेजसः सृष्टिरभूत्[१८] पुनः क्रमशो जलादीनामप्युत्पत्तिरभूत् तयैव रीत्या एवमत्र प्रतिज्ञादृष्टान्तोभयानुरोधात् तस्य परब्रह्मण एकत्वमुपादानत्वञ्च सिद्धं भवति, ईक्षाश्रवणाच्च चेतनत्वं प्रतिपन्नं भवति न ह्यचेतनस्येक्षणं सम्भवति। अत्र प्रतिज्ञा क्रियते पूर्वं येन विज्ञातेन सर्वं विज्ञातं भवत्यमनन्तरञ्च दृष्टान्तोऽस्ति यथा मृत्पिण्डेनैकेन विज्ञातेन सर्वं मृण्मयं विज्ञातं भवति। अपरश्च दृष्टान्तोऽस्ति यद्यथा लोहमणिनैकेन ज्ञातेन सर्वं लोहमयं विज्ञातं भवति। अत्रोभयत्रापि मृण्मयं प्रति मृदः, लोहमयं प्रति च लोहमणेरुपादानता विद्यते। एवं प्रतिज्ञादृष्टान्तानुरोधाज्ज्ञायते यद् यथा दृष्टान्तस्थल उपादानता विद्यते तथैव दार्ष्टान्तिकेऽप्युपादानतैवास्ति। अग्रे च प्रोच्यते यत् सदेवासीदेकमेवाद्वितीयम्। एवं दृष्टान्तबलेनावगम्यते यदत्रैकस्याद्वितीयस्य परस्य ब्रह्मण एवोपादानकारणता प्रतिपाद्यते। ईक्षापूर्वकत्वश्रवणाच्च चेतनत्वमप्यवगम्यते। तैत्तिरीयेऽपीक्षापूर्वकत्वश्रुतिरस्ति। तत्र वैदिकः ऋषिर्वक्ति यत् सोऽकामयताहमेकोऽस्मि बहु स्याम इति। तत्रैव प्रोच्यते ऋषिणा यदिदं किञ्चन संसारे विद्यते तत् सर्वमिदं ब्रह्मैवासृजत्, आत्मानमेव तद्ब्रह्म स्वयमकरोत्, आत्मानमेव विश्वरूपेणाकरोत्।[१९] ऐतरेये ऋषिर्वदति यदग्रे केवलमात्मैवासीत् नासीदात्मभिन्नं किञ्चिदपि। स आत्मेक्षाञ्चक्रे "लोकान्वहं सृजा" इति। अनन्तरञ्चेमान् लोकान् स आत्माऽसृजत्।[२०]

मुण्डकोपनिषदि परमेश्वरविषये वदति ऋषिः यत् तत् अद्रेश्यमस्ति= अदृश्यमस्ति=अर्थात् बुद्धीन्द्रियाणां समेषामप्यगम्यमस्ति। अग्राह्यमस्ति= कर्मेन्द्रिया-णामविषयमस्ति। अगोत्रमस्ति=मूलरहितमस्ति किञ्चिदप्यस्यान्वयं मूलं नास्ति। अवर्णमस्ति=वर्णरहितमस्ति वर्णाः द्रव्यधर्माः स्थूलत्वादयः सर्वैरपि द्रव्यधर्मैर्वि-रहितमस्ति। चक्षुः श्रोत्रादिविरहितं पाणिपादहीनं तमीदृशं नित्यं विभुं सर्वगतं सुसूक्ष्ममव्ययं=व्ययरहितं व्ययो नाम विनाशः इति विनाशरहितं धीराः भूतयोनिं = भूतानां कारणीभूतं परिपश्यन्ति।[२१] अस्मिन् मन्त्रे परमेश्वरस्य एवैकस्य निर्गुणस्य निराकारस्य बुद्धीन्द्रियादिभिरगम्यस्य सर्वगतस्य व्ययहीनस्य जगत्कारणता प्रतिपाद्यते। एकस्यैव कारणत्वप्रतिपादनात् योनिपदप्रयोगाच्चोपादानकारणत्वमनेनापि प्रतिपादितं भवति। अग्रिमे मन्त्रे मुण्डक एवोच्यते यत् निर्गुणस्य निराकारस्य ब्रह्मणः सकाशात्

कथं भूतोत्पत्तिः? तत्रोदाहरणमुखेन प्रतिपाद्यते यद्यथा लूताकीटः स्वेतरकारणनिरपेक्ष एव स्वयमेव स्वशरीरव्यतिरिक्तानपि तन्तून् सृजति पुनश्च तान् तन्तून् गृह्णते स्वात्मभावमापादयति तथैव ब्रह्म स्वस्माद्विलक्षणमपि जगत् सृजते गृह्णते च। यथा च पृथिव्यां व्रीहियवादिस्थावरान्ता ओषधयः पृथिवीतरकारणनिरपेक्षा एव जायन्ते। तथैव ब्रह्मणः सकाशात् विलक्षणमपि जगत् स्वेतरकारणनिरपेक्षतयैवं समुत्पद्यते। यथा च सतः पुरुषात् केशलोमान्यचेतनान्यपि जायन्ते तथैव परस्मात् ब्रह्मणो विलक्षणमपि जगदुत्पद्यते।[२२] परब्रह्मणो वैलक्षण्यं च जगति स्वरूपत एवागम्यते, तथाहि निर्गुणं ब्रह्म जगच्च समुणमस्ति, ब्रह्मनिराकारं जगच्च साकारं, ब्रह्माव्ययं जगद् व्ययशीलं विद्यते।

## ईश्वरस्य निमित्तकारणता प्रकृतेश्चोपादानता

एवं वैदिकीभिः ऋचाभिः उपनिषत्वाक्यैश्च परमेश्वरस्योपादानता प्रतिपाद्यते। एवमेव कासुचिदृचासु उपनिषदां केषुचित् वाक्येषु च परमेश्वरस्य निमित्तकारणत्वं प्रतिपाद्यते प्रकृतेश्चोपादानकारणत्वं प्रतिपाद्यते। कानिचन च वाक्यान्येवं विधानि विद्यन्ते येषां परमेश्वरस्योपादानत्वेऽपि स्वारस्यं सम्भवति निमित्तकारणत्वेऽपि च स्वारस्यं सम्भवति। ऋग्वेद एकत्र सर्गप्राक्कालीनाऽवस्था वर्ण्यते तदानीं सूर्यचन्द्रौ नास्ताम् रात्रिदिवसयोर्विभागोऽपि नासीत् वायुरपि नासीत् तदानीं स्वधा सहैकः परमेश्वर एवासीत् नैव च तस्मात् परः किञ्चन आस।[२४] स्वधया नाम प्रकृतिः तया प्रकृत्या सहैकः परमेश्वर आसीदेवमुच्यतेऽस्यां ऋचायां किन्तु प्रश्नोऽयं भवति यदि प्रकृत्या सह परमेश्वर आसीत्तर्ह्येक इति निर्देशः कथङ्कारं कर्तुं शक्यः? तत्रोत्तरमिदमस्तीति प्रकृतेरप्रधानतया सम्भवति परमेश्वरस्यैकत्वनिर्देशः। श्वेताश्वतरोपनिषदि प्रोच्यते त्रिगुणात्मिकाया प्रकृतेः प्रजोत्पादकत्वम्। तत्रैकां अजां जन्मरहितां लोहितकृष्णशुक्लां बह्वीः सरूपाः प्रजाः सृजमानाम्।[२५] लोहितकृष्णशुक्लामिति पदेन त्रिगुणात्मत्वं निर्दिष्टं भवति प्रकृतेः तथा च प्रसिद्धिरस्ति कृष्णवर्णः तमोगुणस्य परिचायकः, लोहितवर्णो रजोगुणस्य शुक्लवर्णश्च सत्त्वगुणसय। एवं त्रिगुणात्मिका प्रकृतिः बह्वीः प्रजाः सृजति। श्वेताश्वतरोपनिषद्येवैकत्रोच्यते "तं कारणं सांख्ययोगाधिगम्यम्"[२७] सांख्यदर्शनेन योगदर्शनेन चाधिगम्यं तम् कारणम्। सांख्योगाधिगम्यं कारणमुपादानं प्रकृतिरस्ति। एकत्र स्थले दृष्टान्तमुखेनोच्यते यद्यथा लूताकीटः स्वशरीरोत्पन्नैः तन्तुभिः निर्मिमीत एकां सृष्टिम् तथैव परमेश्वरोऽपि प्रकृतिजन्यैः गुणैरात्मानं प्रकटयति।[२८] अत्रैवं प्रतिपादनेन स्पष्टत एव प्रकृतेरुपादानता परमेश्वरस्य च निमित्तकारणता प्रतिपन्ना भवति। श्वेताश्वतर एवैकत्रोच्यते प्रकृतिरीशस्य

मायाशक्तिः परमेश्वरश्च मायाया अधिपतिरस्ति। अतः मायीति कथ्यते।[२९] एवं प्रकारेणानेकेषु स्थलेषु स्पष्टप्रायेण प्रकारेण प्रकृतेरुपादानता परमेश्वरस्य च निमित्तकारणता प्रतिपाद्यते। किन्तु सन्ति कानिचन स्थलान्येवंविधान्यपि यत्र स्पष्टत इदं नैव प्रतिभाति यदत्र परमेश्वरस्योपादानकारणता प्रतिपाद्यतेऽथवा निमित्तकारणता। उभयत्रापि सम्भवत्यस्य सामञ्जस्यम्। यथोच्यते श्वेताश्वतरे "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः"[३०] सः परमेश्वरः करणाधिपाधिपोऽस्ति न ह्यस्य कश्चिज्जनितास्ति नैव च कश्चिदधिपोऽस्ति यदि परमेश्वरस्य निमित्तकारणता स्वीक्रियते तदाप्येतत् सम्भवति, परमेश्वरस्योपादानकारणत्वे "यतो वेमानि भूतानि जायन्ते येन जातानि जीवन्ति" इति श्रुतिरपि प्रमाणविधयोपस्थाप्यते। तदेतद्वाक्यमस्माभिः परमेश्वरस्योपादानकारणत्वप्रकरणे उपन्यस्तं व्याख्यातञ्च। अत्रापि सम्भवति निमित्तकारणत्वस्य कल्पनम्। अत्र मुख्यः तर्कोऽस्ति परमेश्वरोपादानत्वस्वीकर्तृणां यद्यदि परमेश्वरस्यात्रोपादानकारणता न स्यात्तदाऽत्र यतः इति पञ्चम्याः योगो न स्यात् "जनकर्तुः प्रकृतिः" (पा०सू०१/४/३०) इति सूत्रेण जनी प्रादुर्भावे धातोः कर्तुरेवापादानत्वविवक्षया पञ्चमीविधानात् किन्त्वस्मिन् तर्के बलं नास्ति यतोहि सूत्रेऽस्मिन् प्रकृतिपदं निमित्तोपादानसाधारणं विद्यते, यथापादानकारणस्यापादानत्वं सम्भवति तथैव निमित्तस्यापि। "पुत्रात्प्रमोदो जायते" इत्यादौ प्रमोदं प्रति निमित्तकारणस्यापि पुत्रस्यापादानता भवति तत्प्रयुक्ता च पञ्चमी भवति। अत उपर्युक्तस्थले परमेश्वरस्य निमित्तकारणतापि स्वीकर्तुं शक्या।

### परमेश्वरस्य निमित्तकारणता परमाणूनामुपादानता

यद्यपि परमेश्वरस्य कारणत्वप्रतिपादकानि बहूनि श्रुतिवाक्यान्युपनिषत्वाक्यानि च श्रूयन्ते किन्तु परमाणूनामुपादानत्वविषये स्वल्पमेवोपलभ्यते प्रमाणं वैदिकसाहित्ये। अत एव परमाणुकारणतावादस्य वेदबाह्यत्वं प्रतिपादयन्त्यनेके दार्शनिकाः आचार्याश्च। सर्वमतसङ्ग्रहे योगदर्शने प्रकृतेरुपादानतां प्रतिपादयतोच्यते-"परमाणुजसृष्टेश्च श्रुतिबाधात् प्रकृतिसृष्टिमेवाहुः"[३१] अन्येऽप्याचार्याः परमाणूपादानकारणतावादं श्रुतिप्रामाण्यरहितमेवाङ्गीकुर्वन्ति। किन्तु क्वचित् क्वचित् परमाणूपादानकारणतावादः श्रुतावपि बीजरूपेणावस्थितोऽस्ति। यथा चैको मन्त्रोऽस्ति यत् परमाणूपादानकारणतावादस्य पोषकत्वेन निर्दिश्यते। श्रीमतोदयनाचार्येण न्यायकुसुमाञ्जलौ पञ्चमस्तबके एष मन्त्र उद्ध्रियते, प्रशस्तपादभाष्यस्य सूक्तिव्याख्यायामपि मन्त्रोऽयं परमाणूपादानकारणत्वपरमेश्वरनिमित्तकारणत्वप्रतिपादनाय प्रयुज्यते। स मन्त्रश्चैवमस्ति-"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी

जनयन् देव एकः।"[३२] अयमर्थः विश्वतश्चक्षुः सर्वतः चक्षुः सर्वज्ञः इति यावत् विश्वतोमुखः विश्वप्रतिपादकः। विश्वतो बाहुः अत्र बाहुमतं सहकारित्वं बाहुपदेन विवक्षितम् इति सर्वसहकारित्वं लभ्यते सर्वसहकारीति यावत्। विश्वतस्पात् विश्वव्याप्तः, बाहुभ्यां धर्माधर्मलक्षणौ यौ कार्यविशेषं प्रति प्रधानकारणीभूतौ तावुपलक्ष्येतेऽतः बाहुभ्यामित्यस्यार्थो भवति धर्माधर्माभ्याम्। सम्पतत्रैः इत्यनेन पतनशीलत्वं द्योत्यते, सञ्चरणशीलत्वं द्योत्यते तैः अर्थात् सञ्चरणशीलैः परमाणुभिः एको देवः द्यावाभूमी जनयन् संधमति। द्यावापदेनाकाशस्य यद्यपि बोधो भवति किन्तु अत्र स्थल आकाशस्याजन्यत्वात् भूराद्यूर्ध्वसप्तलोकानामुपलक्षणेन बोधो भवति। एवं रीत्येतन्मन्त्रं परमाणूपादानताविषये परमेश्वरस्य निमित्तकारणताविषये च प्रमाणविधयोपस्थाप्यते श्रीमदुदयनाचार्यैः।[३३] सामान्यतः परमेश्वरकर्तृत्वप्रतिपादिकाः कारणत्वप्रतिपादिकाश्चानेका अपि श्रुतयो विद्यन्ते "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादयः। किन्तु परमाणूनामुपादानत्वप्रतिपादिकाः श्रुतयस्तु क्लेशेनोपालभ्याः अत एवाचार्यशङ्करादयः परमाणुकारणतावादं वेदबाह्यमिति स्वीकुर्वन्ति प्रतिपादयन्ति च। "अपरिग्रहाच्चात्यन्तमनपेक्षा" इति सूत्रस्य व्याख्याने सिद्धान्तस्यास्य वेदबाह्यतां सुस्पष्टं ख्यापयन्ति आचार्यशङ्करप्रभृतयः।

न्यायवैशेषिकदर्शनयोरेष परमाणूपादानकारणतावादः परमेश्वरनिमित्तकारणतावादश्चाङ्गीक्रियते। यच्चाग्रिमेऽध्याये पुरत आयास्यति। यद्यपि नैयायिकैरेतद्वेदोक्ततया नैव स्वीक्रियतेऽपितु विभिन्नानामनुमानानामत्र प्रामाण्यमिति व्यवस्थाप्यते। किन्तु विद्यते नैयायिकविपश्चितामत्र श्रद्धा यन्न्यायाभिमतेश्वरविषये वेदानां सम्मतिर्भूयात्, स्वीकुर्वन्ति च वेदानां प्रामाण्यं नैयायिकाः परमेश्वरप्रणीतत्वेन। आस्तिकदर्शनेषु वेदान्तदर्शनानि शास्त्रैकप्रमाणकत्वं परब्रह्मणः स्वीकारं कुर्वन्ति। मीमांसादर्शने तु सृष्टिप्रलययोरेवास्वीकारः, केचन मीमांसकाः स्वीकुर्वन्ति जगतो जन्यत्वम्, किन्तु मूलतः मीमांसादर्शने सर्गप्रलययोरस्वीकार एवास्ति। सांख्ययोगदर्शनयोः प्रकृतिः सृष्टिवादः स्वीकृतः। वेदान्तदर्शनैः मध्ववेदान्तं परित्यज्य ब्रह्मणो जगदभिन्ननिमित्तोपादानकारणता स्वीक्रियते। मध्ववेदान्तदर्शनेऽपि परमेश्वरस्य निमित्तकारणतापक्ष आदृतः। एतेषां समेषामस्तिकदर्शनानां मूलं वैदिके साहित्ये प्राप्यते। यद्यपि बौद्धजैनचार्वाकदर्शनानामपि मूलं वैदिके साहित्ये विकीर्णमस्ति तथापि तेषां वेदबाह्यता स्वीक्रियते वेदप्रामाण्यानङ्गीकारात्। एवं वैदिकावैदिकदर्शनयोरेवास्तिकनास्तिकपदे रूढे विद्येते। अत्र शोधप्रबन्धे सपष्टीभविष्यति यद्वैदिकत्वे समानेऽपि न्यायाभिमतेश्वरखण्डने विभिन्नैरास्तिकदर्शनैः नैव काचित् सहानुभूतिः प्रदर्श्यते। अत्र

तु भिन्नानि दर्शनान्यास्तिकान्यपि नास्तिकदर्शनानीव न्यायाभिमतेश्वरपर्यालोचने बलमादधति।

## पादटिप्पणी

१. केन उप० १/१
२. द० दि०, पृ० ४
३. यो नः पिता जनिता सनो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामथा एक एव तं सं प्रश्न भुवना यन्त्यन्या।।
ऋक्० १०/८२/३, अथर्व० सं० २/१/३, तै० सं० ४/६/२/१, तै० आ० १०/४/४
४. स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा।
यत्र देवाऽमृतमानशानास्तृतीये धामन्नध्यैरयन्त।। शु० यजु० सं० ३२/१०, १६४/२०
६. उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भेऽन्तः।।
अथर्व० सं० १०/८/२८
७. इन्द्रो भूतस्य भुवनस्य राजेन्द्रो दाधार पृथिवीमुतेमाम्।
इन्द्रो ह विश्वा भुवनाश्रितानीन्द्रं मन्ये पितरं मातरञ्च।। मैत्रा० सं० ४/१४/९
८. अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येषा सर्वान्तरात्मा।। मु० उप० २/१/४
९. इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णा गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः।। ऋक् सं० १/१६४/४६
१०. ऋ० सं० १०/१२/१५
११. ऋ० सं० ६/७/४ वर्ग, ८/१०/८९ सूक्त
१२. के०उप० तृतीयखण्ड एवं चतुर्थखण्ड
१३. अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्।। श्वे० उप० ३/१९
१४. किं स्विद्वनं क उ स वृक्ष आस यतो द्यावा पृथिवी निष्ठतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद्भुवनानि धारयन्।।
ऋ० सं० ८/३/१६/४, तै० ब्रा० २/८/९/८
१५. ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्ठतक्षुः।
मनीषिणो मनसा विब्रवीमि वः ब्रह्माध्यतिष्ठद्भुवनानि धारयन्।। तै० ब्रा० २/८/९/९
१६. वे० कौ० १/४/२५, पृ० २४४
१७. उत तमादेशमप्राक्ष्यः। येन---अविज्ञातं विज्ञातं---भवतीति।

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्। ---यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्। छा० उप० ६/१/२-५

१८. कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति।
सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तदैक्षत बहुस्याम् प्रजायेयेति तत्तेजोऽसृजत।। छा० उप० ६/२/२-३

१९. सोऽकामयत बहु स्यां प्रजायेय। ---इदं सर्वमसृजत, यदिदं किञ्च। तदात्मानं स्वयमकुरुत। तै० उप० २/६-७

२०. आत्मा वा इदमेक एवाग्र आसीत्। नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजाः इति। स इमांल्लोकानसृजत। ऐत० १/१/१

२१. यत्तदद्रेश्यमग्राह्यमगोत्रवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपारयन्ति धीराः।।
मु० उप० १/१/६

२२. यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात् केशलोमानि तथाऽचरात् सम्भवतीह विश्वम्।। मु० उप० १/१/२

२३. आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास। ऋक् १०/१२९/२

२४. अजामेकां लोहितकृष्णं शुक्लां बह्वीः प्रजाः सृजमानां सरूपाः।। श्वे० उप० ४/५

२५. श्वे० उप० ४/१६

२६. श्वे० उप० ६/१३

२७. यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः।
देव एकः स्वमातृणोतिं स नो दधातु ब्रह्माव्ययम्।। श्वे० उप० ७/१०

२८. श्वे० उप० ४/१०

२९. श्वे० उप० ६/६

३०. स० म० सं०, पृ० १९

३१. ऋक् सं० ८/३/१६/३, तै० सं० ४/६/२/४, मै० सं० २/१०/२/१८. श्वेता० ३/३

३२. गद्य० न्या० कु०, पृ० ६४६

## द्वितीयोऽध्यायः (भाग क)

# न्यायाभिमतेश्वरस्वरूपनिर्वचनम्

न्यायाभिमतेश्वरस्य दर्शनान्तरदृष्ट्या पर्यालोचनाय प्रथमतो न्यायाभिमतेश्वरस्य स्वरूपं निर्वाच्यम्। तत्र न्यायकुसुमाञ्जलिकाराणां श्रीमदुदयनाचार्याणां न्यायदर्शनाभिमतेश्वरविषयकं स्वरूपनिर्वचनं समीचीनतामधिगच्छति, श्रीमतोदयनाचार्येण न्यायकुसुमाञ्जलौ–

"इह यं कमपि पुरुषार्थमर्थमानाः शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति पाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः"।[१]

एवं रीत्याऽन्यान्यदर्शनानुसारमीश्वरनिर्वचनं कुर्वता न्यायदर्शनाभिमतमीश्वरस्वरूपं वर्णयन्नुच्यते "यावदुक्तोपपन्न इति नैयायिकाः" इति। टीकाकृद्भिरस्य पदस्य समासं वर्णयन्नुच्यते–"यावदुक्तेषु यदुपपन्नं युक्तिमत् सर्वज्ञत्वादि तेनोपपन्नः सम्पन्न इति मध्यमपदलोपिसमासस्तत्पुरुषः। यावदुक्तेषु उपपन्नः प्रामाणिको धर्मो यस्येति बहुव्रीहिर्वा"[२] अर्थात् ये गुणाः सर्व एतेऽन्येषु दर्शनेषु प्रतिपादिताः परमेश्वरीयगुणत्वेन, तेषु सर्वेषु यद् यद् युक्तिपुरस्सरमुपपन्नं भवति ते सर्वे गुणाः नैयायिकैरीश्वरे स्वीक्रियन्ते।

वस्तुतः समग्रमपि दर्शनशास्त्रं युक्तिभित्तावेव संस्थितमास्ते। कस्यचिदपि दर्शनस्य कश्चिदपि सिद्धान्तः तर्कमनादृत्य नैव स्थितः। अस्तु नाम कानिचन दर्शनानि शास्त्रस्यैव परमं प्रामाण्यमङ्गीकुर्वन्तु परन्तु न हि तर्कस्य तैरप्यनादरः क्रियते। तत्रान्यैः दार्शनिकैर्ये ये गुणाः परमेश्वरीयत्वेन निर्दिष्टा अधिकांशतः सर्वेऽपि युक्त्याऽवश्यमेव सिद्धिमेष्यन्ति। किन्तु समेषां दर्शनानां समेषाञ्च जनानाञ्च विचारदृष्टिरन्या

भवति। अत एवानेकेषां दर्शनानां सिद्धान्तानाञ्च जनिरभूत्। अतः यावदुक्तोपपन्न इति शब्देन नैयायिकदृष्ट्या यावताम् युक्तीनामौचित्यं ताभिर्यावदुपपद्यते तावत् सर्वं नैयायिकैरीश्वरीयगुणत्वेनाङ्गीक्रियते। एतदेव न्यायाभिमतेश्वरस्य निष्कृष्टं स्वरूपम्। तदेषः सिद्धान्तो न्यायसूत्रप्रणेतृगोतमादारभ्येदानीन्तननैयायिकविचारानालोच्य निर्णीयते। तत्रापि केषांचित् सिद्धान्तानां वैमत्यं विद्यते।

## महर्षिगोतमानुसारमीश्वरस्वरूपम्

महर्षिणा गौतमेन संक्षिप्तैस्त्रिभिः सूत्रैरीश्वरविषयकः सिद्धान्तो वर्णितः।[३] ईश्वरस्य नातिस्पष्टं स्वरूपं दृष्टिपथमायाति प्रथमेन तावत् सूत्रेण पुरुषकर्मणां सत्यपि प्रयासविशेषे वैफल्यदर्शनात् परमेश्वरोऽपि कारणम्। पुरुषोऽयं समीहमानो नावश्यं कर्मफलमाप्नोति, किन्तु कदाचिदसफलतामप्याप्नोति, अतोऽनुमीयते यत् पुरुषस्य कर्मफलाराधनं पराधीनं, यदधीनमस्ति पुरुषस्य कर्मफलाराधनं स ईश्वरः। अपरेण सूत्रेणाशङ्क्यते पुरुषकर्माभावेऽपि फलनिष्पत्तेरभावात् फलनिष्पत्तिर्न परमेश्वराधीना। तृतीयेन च सूत्रेण पुरुषकर्मसापेक्षस्य परमेश्वरस्य कारणत्वमुपपाद्यते, तेनैव चास्या आशङ्कायाः समाधानमपि क्रियते। एभिस्त्रिभिरेव नातिस्पष्टैः सूत्रैरीश्वरो निरुच्यते न्यायसूत्रनामके न्यायदर्शनादिमे ग्रन्थे। अत एवात्र संदिह्यतेऽपि कैश्चित् तार्किकैर्यद् न्यायदर्शनमादिकालीनमनीश्वरवादि स्यात् सम्भवतः। गार्वेमहोदयः न्यायसूत्रेषु परमेश्वरस्य सत्तां नाङ्गीकरोति।[४] ग्योरमहोदयो न्यायदर्शनीयप्राचीनस्य सिद्धान्तस्य सेश्वरत्वनिरीश्वरत्वविषये सन्दिहान एव तिष्ठति।[५] अन्येषामप्यनेकेषां विदुषामयमाशयो विद्यते। तत्र तैः प्रमाणमुपदर्श्यते यत् "प्रमाणप्रमेयसंशयप्रयोजन-दृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः"[६] इति प्रथमसूत्रे नास्तीश्वरस्योल्लेखो मुक्तिकारणी-भूततत्त्वज्ञानविषयतया। "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्त-रापायादपवर्गः"[७] इति मोक्षक्रमोपदर्शके सूत्रेऽपि कारणाभावात् कार्याभाव इति रीत्या मिथ्याज्ञानदोषप्रवृत्तिजन्मनां समुच्छेदादनायासेनैव मोक्षः सम्पद्यते न हि तत्र परमेश्वरानुग्रहस्य काचिदप्यावश्यकता। ईश्वरो यद्यात्मकल्प इति पक्षः स्वीक्रियते तर्हि नैतदपि सम्भाव्यते यतो हि "इच्छाद्वेषप्रयत्नसुखदुःखाज्ञानान्यात्मनो लिङ्गम्"[८] इति सूत्र इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लक्षणभूताः गुणाः समुद्दिष्टाः परन्तु नैतेऽपि परमेश्वरे सम्भाव्यन्ते। अतः स्पष्टीभवति यद् गोतम आत्मपरमात्मनोः भेदं निरुच्य परमात्मनोस्तित्वं साधयितुं युक्तिः न प्रास्तौत् इति। वेदानामपि प्रामाण्यं नैयायिकैरर्वाचीनैरीश्वरोच्चरितत्वेन स्वीक्रियते परन्तु नेदमपि न्यायसूत्रे

प्रतिपाद्यते, "मन्त्रायुर्वेदप्रामाण्यवच्च तत् प्रामाण्यमाप्तप्रामाण्यात्"[९] इति सूत्रेणाप्त-प्रामाण्याद्वेदानां प्रामाण्यं व्यवस्थापितम् किन्तु परमात्मना प्रणीतत्वादस्य प्रामाण्यं नैव व्यवस्थापितम्। न्यायसूत्रस्य पूर्वमुल्लिखितेषु सूत्रेषु त्रिषु परमेश्वरसाधकेषु परमेश्वरस्यास्तित्वं साध्यते खण्ड्यते वा नेदं स्पष्टीभवति। अत्र च कारणमिदमेव यत् कैश्चिद टीकाकृद्भिरस्य परमेश्वरसाधनपरा व्याख्या कृता कैश्चिच्चोपादानकारणी-भूतेश्वरखण्डनपरा उभयविधोऽप्यर्थोऽस्य सूत्रत्रयस्य कर्तुं शक्यते। इति कः पक्षः समुचितः? कश्चानुचितः? इति निर्णेतुमशक्यम्। न्यायदर्शने चेश्वरप्रत्ययोऽप्यनावश्यकः प्रतीयते। अत एवेश्वरप्रमाणस्यान्तिमेन चरणेन ४/१/२१ सूत्रेण प्रहेलिकारूपेण सिद्धान्तः प्रस्तूयते। निष्कर्षश्चैवमायाति यत् सूत्ररूपे न्यायदर्शने परमेश्वरस्य किञ्चित् महत्त्वपूर्णं स्थानं नासीत्, यत्किञ्चिदर्वाचीनैः दार्शनिकैः नैयायिकैः व्यवस्थाप्यते सर्वमपि तत् प्राचीने न्यायदर्शने संशयास्पदमेवासीत्।[१०]

किन्तु तार्किकदृष्ट्या विविच्यमाने नेदं मतं समीचीनतामधिगच्छति। प्रमाणानि तत्रेमानि--यद्यपि प्रमाणप्रमेयादिसूत्रे नास्तीश्वरस्य समुल्लेखो मुक्तिकारणत्वेन परन्तु सूत्रेऽस्मिन् नापेक्षित ईश्वरस्योल्लेखः। अत्र सूत्रे प्रमेयतयैव यथाऽऽत्मशरीरादीनां प्रमाविषयाणां परिग्रहो भवति तथैवेश्वरस्यापि परिग्रहः शक्यः। यच्चोपस्थाप्यते यत् नास्ति दुःखजन्मप्रवृत्तिसूत्रोपदर्शिते मोक्षक्रमे परमेश्वरानुग्रहस्यावश्यकता। तदपि साधु। परन्तु नैतदीश्वरास्तित्वबाधकमस्ति। यदीश्वरानुग्रहस्य स्यात् काचिदावश्यकता मोक्षक्रमे तर्हि कर्तुमकर्तुमन्यथाकर्तुं समर्थः परमकारुणिकः स ईश्वरः सर्वानेव जीवान् मोक्षपदं कथं नैव प्रापयेत्? अतो नैयायिकैरीश्वरानुग्रहस्यावश्यकता मोक्षक्रमे नैव प्रतिपाद्यते जीवश्च स्वकर्मरज्जुबद्धः स्वाचरणानुष्ठाने स्वतंत्रः क्रमशः मोक्षमवाप्नोति। ईश्वरस्य तु न किमपि प्रेमास्पदं स्वकीयपरकीयेत्यादिबुद्धिविषयीभूतञ्च येन सः पक्षपातेन कमपि जनमनुगृह्णीयात्। यच्चोपस्थाप्यते वेदानां प्रामाण्यं महर्षिणा गौतमेन न हीश्वरप्रणीतत्वादङ्गीक्रियते। यद्यप्याप्तोच्चरितत्वेनैवास्ति वेदानां प्रामाण्यं किन्तु "ईश्वरप्रणीताः वेदाः" इति दिङ्मात्रमपि नोपदर्श्यते। तदपि मन्य आपातरमणीयतामेव भजते तदीयं मतम्। यतो हि सिद्धान्तितमेतत् यद्वेदानां प्रामाण्यमाप्तोच्चरितत्वादेव विद्यते। केनाप्तेनोच्चरितत्वाद्वेदानां प्रामाण्यम्? प्रश्नोऽयं जागर्ति, परमेश्वरोच्चरितत्वाभावे ऋषिभिरुच्चरितत्वादेव वेदानां प्रामाण्यमिति स्वीकार्यम् समाधातुं प्रश्नमिमम्। किन्तु सूक्ष्मेक्षिकया विवेचने बहव्यः त्रुटयः दृष्टिपथमायान्ति। प्रथमं तावदेतत् यन्नहि केनचिद् भारतीयेनास्तिकदर्शनेन वेदानां ऋषिप्रणीतत्वात् प्रामाण्यं स्वीक्रियते। सांख्यदर्शनेन वेदानां कपिलेनोपदिष्टत्वात् प्रामाण्यमिष्यते किन्तु नहि कपिलस्य वेदप्रणेतृत्वं स्वीक्रियते वेदस्यापौरुषेयत्वात्, केवलमपौरुषेयं वेदं स्मृत्वा कल्पान्तरानुसारं वेदानयमुपदिशति।[११] एवमस्य न्यायदर्शनस्यास्तिकत्वेऽपि

ऋषिप्रणीतत्वाद्वेदानां प्रामाण्यस्वीकारो न युज्यते। अपि च, न्यायसूत्रकृता गोतमेन महर्षिणा द्वितीयेऽध्याये प्रथमे पादे वेदानां प्रामाण्यविषये पूर्वपक्षमुपस्थापयता "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः"[१२] इति सूत्रेण अनृतव्याघातपुनरुक्तदोषेभ्यो वेदानां प्रामाण्यं नास्तीत्येवमाक्षिप्यते। तत्र यदि गोतमेन महर्षिणा वेदानां प्रामाण्यमृषिप्रणीतत्वात् स्वीक्रियते चेत् तदा नहि नैकानामृषीणां वाक्येषु वेदेषु पुनरुक्तिरूपेणैकार्थत्वेन प्रामाण्यं नास्तीत्येवमाक्षिप्तुं शक्यते यतो ह्येककर्तृकेष्वेव वाक्येषु एकार्थवत्त्वं पुनरुक्तिदोषमापादयति। अनेककर्तृकेषु वाक्येषु सामान्यत एवैकार्थवत्त्वं सम्भवति। तत्र नहि केनाप्युच्यते यदेतदेवान्येनापि विदुषोच्यतेऽत एतत्पुनरुक्तिदोषदुष्टतयाऽप्रमाणम्। अपि तु एतदेवान्येनापि विदुषोच्यतेऽतः कथनमेतत् सत्यमेवमुच्यते। अतो वेदानां प्रामाण्यमृषिप्रणीतत्वान्नैवाङ्गीकार्यम्। अन्यच्च "ऋषियो मन्त्रद्रष्टारः" इत्यादिवचनैः मन्त्रद्रष्टृत्वमेवर्षीणां स्वीक्रियते अतः कथङ्कारमेवं कल्पयितुं शक्यं यन्न्यायदर्शनेन वेदानां ऋषिप्रणीतत्वं स्वीक्रियते। पूर्वोक्त्या युक्त्या वस्तुतो वेदानामेककर्तृकत्वं स्वीकार्यमेव, एककर्तृकत्वे च स्वीकृते वेदानामीश्वरप्रणीतत्वमङ्गीकार्यमेव। अतः गौतमेन वेदानां प्रामाण्यमीश्वरप्रणीतत्वात् स्वीक्रियत इति स्पष्टीभवति।

तथाकथितेष्वीश्वरसाधकेषु च ईश्वरः कारणमित्यादित्रिषु सूत्रेषु परमेश्वर-साधकत्वमेव स्वीकरणीयम्। यतो हि परम्परया सूत्रतात्पर्यं भाष्यानुसारमेव स्फोरणीयं भवति। प्राचीनभारतीयपरम्परायां सूत्रभाष्यादिक्रमेणैव ग्रन्थानामाशयः क्रमशः स्फुटीक्रियमाण आसीत्। केचिच्च विद्वांसः स्वयमेव मूलग्रन्थं निर्माय टीकाग्रन्थमपि प्रणिन्युः। पूर्वोक्त्या युक्त्या वेदानामीश्वरप्रणीतत्वादेव प्रामाण्यमिति तु स्पष्टमेव। अतः स्पष्टीभवति यन्न्यायसूत्रकारो गोतमोऽवश्यमेव परमेश्वरमङ्गीकरोति। यद्यपि न हि गोतमोऽधिकमीश्वरविषये विवेचनं करोति तत्र गोतमानुसारमीश्वरः कीदृशोऽङ्गी-क्रियते? तदैतदेव वक्तुं शक्यते यद्गोतमेन परमेश्वरः वेदानां प्रणेता, जीवकर्मफलप्रदाता च स्वीक्रियते। ईश्वरस्य जीवकर्मफलप्रदातृत्वे स्वीकृते सर्वज्ञत्वमप्यस्य स्वीकार्यं भविष्यति जीवानां जीवकृतकर्मणाञ्चानन्त्यात् तेषां परिज्ञानाय। परिज्ञानं विना च नह्यस्य जीवकृतकर्मफलप्रदातृत्वं घटते। एवंविधयाऽयमीश्वरो जीवकर्मणां नियन्तेति सिद्ध्यति। एकश्चायम्। अन्ये के के गुणाः परमेश्वरे गोतमेनाङ्गीक्रियन्ते निर्णेतुम-शक्यमिदम्। अर्वाचीनाः नैयायिकाः यथेश्वरस्य क्षित्यादिकर्तृत्वं स्वीकुर्वन्ति तथाऽयं स्वीकरोति न वा स्वीकरोति स्पष्टं नास्तीदम्। खद्योते लिखितं विद्यते-

"तथा चेश्वरः केवलं नियन्तैवेति न्यायमतं प्रतिभाति, भाष्यकारोऽप्यग्रे ईश्वरो द्रष्टा बोद्धा सर्वज्ञातेत्येवोक्तवान् न पुनः कर्ता स्रष्टेति"।[१३]

**वात्स्यायनानुसारमीश्वरः**

भाष्यकारो वात्स्यायनः स्वरूपमीश्वरस्य स्वल्पेनेव निर्वचनैन स्पष्टयति।[१४] तत्र च "गुणविशिष्टमात्मान्तरमीश्वरः" इति कृत्वेश्वरस्य लक्षणं निरुच्यते। गुणपदेन च सर्वज्ञत्वादिकमुपादीयते। अयमात्मकल्पः आत्मसमानजातीयः सर्वज्ञत्वादि-भिर्गुणैर्विभूषितः। इत्येवं परमेश्वरस्य लक्षणमभिधायाग्रे तस्य स्वरूपं निरूप्यते। सोऽयमीश्वरोऽधर्ममिथ्याज्ञानप्रमादरहितः स्वीक्रियतेऽन्यथा जीवैरीश्वरस्य सामान्यं स्यात्, जीवकोटावेवायमप्यागच्छेत् । अधर्ममिथ्याज्ञानप्रमादसहितः सन् तत्फलभूतेन सुखदुःखादिनाऽवश्यमेव लिप्येत। ईश्वरत्वञ्च व्याहन्येत। अतोऽधर्ममिथ्याज्ञानप्रमाद-राहित्यमीश्वरेऽङ्गीक्रियते। अत्रेश्वरस्याधर्ममिथ्याज्ञानप्रमादराहित्येऽनुमानमपि प्रमाणम् तथाहि लौकिकोऽनुभवः कारणस्य सत्त्वे कार्यस्योत्पाद आवश्यकः। अधर्म-मिथ्याज्ञान-प्रमादानां सुखदुःखादिकारणानाम् सत्वे सुखदुःखाद्युत्पाद आवश्यकः। सुखदुःखाद्युपलब्धिर्न भवतीत्यतो ज्ञायते यत् कारणस्यापि अधर्ममिथ्याज्ञानादेः सत्त्वं नास्ति। एवं कार्याभावेन सुखादुःखाद्यभावेन कारणाभावोऽधर्ममिथ्या-ज्ञानप्रमादाद्यभावोऽनुमीयते। धर्मज्ञानसमाधिसम्पदा विशिष्टः इति वात्स्यायनमतम्। धर्मज्ञानसमाधिसम्पद्वैशिष्ट्यञ्चाणिमा, गरिमाद्यष्टविधैश्वर्यसम्पादकम्। सोऽयमीश्वरीयो धर्मः सङ्कल्पानुविधायी, बाह्यं कर्मानुष्ठानं विनापि सङ्कल्परूपानुष्ठानादुत्पद्यते। परमेश्वरः प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि भूतानि च धर्मतो जायमानेन ऐश्वर्येण प्रवर्तयति। एवं रीत्या परमेश्वरस्य निर्माणप्राकाम्यं स्वकृतकर्मफलं वेदितव्यम्। स्पष्टीभवत्येवम् यद्वात्स्यायनः परमेश्वरस्यैश्वर्यं धर्मसमाधिसम्पादित मस्तीति मनुते। एवं प्रतिभाति यद्वात्स्यायन ईश्वरत्वं जन्यमेव मनुते। अयमीश्वरः आगमात् द्रष्टा, बोद्धा, सर्वज्ञातेत्युच्यते, अपत्यानां पितेव जीवानां पितृभूतः परमेश्वरः आप्तकल्पः। कृपया जीवाननुगृह्णन् वेदानुपदिशति। पितृवत् प्रमाणभूतः न हि पिता पुत्रमसन्मार्गे प्रवर्तयितुमुपदिशति किन्तु सन्मार्गे प्रवर्तयितुमेवोपदिशति। वात्स्यायनानुसारमीश्वर एवंविधः आत्मसाधकैः बुद्ध्यादिभिश्चावश्यमेव युक्तः आत्मलिङ्गैः आत्मसाधकैः बुद्धीच्छादिभिरविशिष्ट ईश्वरस्तु न हि केनचिदपि प्रत्यक्षतोऽनुमानेनागमेन वाऽतीतमज्ञेयं शक्यत उपपादयितुम्।[१५]

**वात्स्यायनाभिमतेश्वरस्वरूपविषये परवर्तिनैयायिकानां विप्रतिपत्तयः, तेषां दृष्ट्येश्वरस्वरूपम्**

अत्र वास्त्स्यायनाभिमते परमेश्वरस्वरूपे वात्स्यायनादर्वाचीनानां नैयायिकानां नैकाः विप्रतिपत्तयोऽजायन्त। वात्स्यायनो यादृशमीश्वरस्य स्वरूपं निर्वक्ति तत्र मन्ये

किञ्चित् पूर्वाग्रहयुक्तेन मनसा निर्वक्ति। यथा धर्मज्ञानसमाधिविशिष्टत्वमीश्वरस्य वात्स्यायनः स्वीकरोति, अधर्ममिथ्याज्ञानप्रमादराहित्यञ्च स्वीकरोति। एवमेवास्य परमेश्वरस्यैश्वर्यं धर्मसमाधिजन्यमित्यङ्गीकरोति। धर्मस्य फलभूतमणिमाद्यष्टविधमैश्वर्यं जगन्निर्माणकारणम्। एतत्सर्वं पूर्वाग्रहगृहीतेन मनसा विलिख्यते वात्स्यायनेन। अतः परवर्त्तिभिः नैयायिकैरुद्योतकरवाचस्पतिमिश्रप्रभृतिभिरत्र मतभेदः प्रदर्श्यते। उद्योतकरः पृच्छति यदस्य परमेश्वरस्यैश्वर्यं नित्यं वाऽनित्यं वा? यद्यस्यैश्वर्यमनित्यमिति पक्षस्तदाऽनित्यस्यैश्वर्यस्य कारणं किञ्चित् प्रतिवक्तव्यम्। यस्यैश्वर्यमनित्यं तस्य कारणभेदो भवति, एवं सत्यन्येषामपि तादृशमैश्वर्यं प्रसक्तं भवति। सति चैवमीश्वर-स्यानेकत्वं प्रसज्यते।[१६] अत्रैतदप्याशङ्क्यते-यदस्तु नाम परमेश्वरस्यानेकत्वम्? का क्षतिः? समाधीयते च-परमेश्वरस्यानेकत्वे एकस्मिन्नेव वस्तुनि परमेश्वरयोर्प्रवृत्तिर्न प्राप्नोति द्वयोरीश्वरत्वात्। यदि वैक इतरमतिशेते तर्हि योऽतिशेते तस्यैवैश्वर्यं न त्वितरस्य इति नास्यैश्वर्यमनित्यमङ्गीकर्तुं शक्यते।[१७] यदि च परमेश्वरस्यैश्वर्यं नित्यमिति पक्षस्तदा धर्मवैयर्थ्यमवश्यं स्यात्, धर्मवैयर्थ्यस्वीकारे च न्यायभाष्यकृतां "तस्य च धर्मसमाधिफलमणिमाद्यष्टविधैश्वर्यम्" इति वचनमसङ्गतं भवति। अतस्तात्पर्यटीकाकृतो वाचस्पतिमिश्राः भाष्यवचनमेतत् स्पष्टत एवायुक्तमित्युद्घोषयन्ति।[१८]

वस्तुतो यथेश्वरेऽधर्मराहित्यमङ्गीक्रियते तथैव धर्मराहित्यमप्यङ्गीकर्तव्यम्। यतो ह्यधर्मस्य फलमस्ति दुःखम्, धर्मस्य च सुखम्।[१९] ईश्वरे दुःखाभावात् कार्यस्याभावात् कारणाभावोऽधर्मराहित्यमनुमीयते, सिद्ध्यतीश्वरेऽधर्मस्याभावः। तथैव धर्मस्य फलमस्ति सुखम्, परमेश्वरे सुखाभावात् धर्मराहित्यमपीश्वरे पूर्वया युक्त्यैव सिद्ध्यति। अत उद्योतकरेण संक्षेपतः[२०] वाचस्पतिमिश्रेण च स्पष्टतः[२१] ईश्वरे धर्मराहित्यं स्वीक्रियत उद्घोष्यते च। एवं सङ्कल्पजनितस्यैश्वर्यकारणीभूतस्य धर्मस्यास्तित्वं खण्डयित्वा-ऽनन्तरञ्च नित्यस्यापि धर्मस्यास्तित्वमीश्वरे नास्तीत्युपस्थाप्यते श्रीमदुद्योतकरेण। उद्योतकर उपस्थापयन्नेतद् वक्ति यद्वयं नावजानीम एतत् यद्यथा परमेश्वरे बुद्धिसत्तायां प्रमाणमस्ति तथैव परमेश्वरस्य धर्मादिनित्यत्वेऽपि प्रमाणमस्ति। न ह्यप्रामाणिकं किञ्चित् स्वीकर्तुं शक्यते।[२२] अत उद्योतकरो नहीश्वरे नित्यस्यानित्यस्य वा धर्मस्य सत्त्वमङ्गीकरोति।

उद्योतकरानुसारमयमीश्वरोऽशरीरी। एतच्चैवं समुपस्थाप्यते अस्तु नामायं शरीरी किन्तु प्रश्नोऽयं सञ्जायते शरीरमस्य नित्यं वाऽनित्यं वेति? यदि अनित्यमीश्वरस्य शरीरमिति पक्षस्तदाऽनित्यस्य शरीरस्यादृष्टजन्यत्वात् शरीरकारणीभूतयोः धर्माधर्मयोरपि सत्त्वमङ्गीकर्तव्यं भविष्यति। ईश्वरीयशरीरस्यापि धर्माधर्मात्मकादृष्टजन्यतया शरीरस्य

धर्माधर्मात्मकादृष्टतन्त्रत्वात् परमेश्वरस्याप्यदृष्टवशीभूतत्वं स्वीकार्यम्। ईश्वरस्य चादृष्टवशीभूतत्वे कुतोऽयमीश्वरः स्यात्? अनीश्वरत्वमस्य प्रसक्तं भवति। यदि च नित्यमीश्वरस्य शरीरमिति पक्षस्तदा शरीरस्यानित्यस्यैव दर्शनात् दृष्टविपरीतं नित्यं शरीरं कल्पितं भवति। ईश्वरस्य बुद्धिमत्त्वप्रतिपादनायेश्वरस्य नित्यशरीरं दृष्टविपरीतं स्वीकरणीयं भवति तदपेक्षया नित्या बुद्धिरेव परमेश्वरे स्वीकरणीयेति सिद्धान्तितं भवति।[२३]

एवमीश्वरस्य द्रव्यत्वात् संख्यापरिमाणपृथक्त्वसंयोगविभागानां सामान्यगुणानां सत्त्वं नित्यायाः बुद्धेश्च सत्त्वं परमेश्वरे विद्यत इति सिद्धान्तयति न्यायवार्तिककारः। बुद्धेर्नित्यत्वे च किमस्ति प्रमाणम्? यतो हि लोके बुद्धेरनित्यत्वमेव श्रूयते। तत्रोहां कुर्वन्नुद्योतकर उपस्थापयति यदस्येश्वरस्य बुद्धियोग आवश्यकः कर्तृत्वात्। सा च बुद्धिर्यद्यनित्या स्यात्तदा प्रत्यर्थनियताः बुद्धिभेदाः, शरीरादिकारणसन्निधाने सत्येव तस्याः उत्पादो युज्यते, बुद्धेः प्रत्यर्थनियतायाः शरीरादिकारणासन्निधानेऽनुत्पादात्। इयं परमेश्वरबुद्धिस्तु न प्रत्यर्थनियता युगपदेवानेककार्यसम्पादनशीलत्वात् तथाहि लोकेऽनेकस्य स्थावरभेदस्य युगपदुत्पादो दृश्यते। सोऽयमनेकः स्थावरभेदः परमेश्वर-बुद्धिजन्यः। अतः परमेश्वरीयबुद्धेर्न प्रत्यर्थनियतत्वं सम्भावनीयम्। प्रत्यर्थनियमस्यासम्भ-वाच्चास्य बुद्धेर्नित्यत्वं स्वीकार्यम् ऐक्यञ्च।[२४] इयमीश्वरीया बुद्धिर्नित्या एका च सर्वार्थविषयिणी अतीतानागतवर्तमानविषया प्रत्यक्षात्मिका।[२५] ज्ञानस्य च नित्यत्वा-न्नेश्वरे संस्कारस्य सत्त्वमङ्गीक्रियते।[२६] एवमीश्वरे पञ्च सामान्यगुणाः बुद्धिश्चैते षड्गुणा अवतिष्ठन्त इति सिद्धान्तयत्युद्योतकरः।[२७] अग्रे च स्पष्टमेवोद्घोषयति यदीश्वरे एते षडेव गुणा अवतिष्ठन्त इति।[२८] परन्तु वस्तुतः ईश्वरे न हि केवलं षण्णां गुणानां सत्त्वमुद्योतकरोऽङ्गीकरोति। यतो हीश्वरस्य कर्तृत्वं स्वीक्रियते वार्तिककृता। कर्तृत्वं चेश्वरस्य सम्पादयितुमीश्वरे बुद्धियोगमिव इच्छायोगः कृतियोगश्च स्वीकरणीयः। खद्योतेऽप्येतदेव प्रतिपाद्यते। यदस्य यथा बुद्धियोगोऽभ्युपेयते तथैव कृतियोगः इच्छायोगश्चाङ्गीकर्तव्यौ। तावपि कर्तृत्वसाधनान्तर्भूतौ ज्ञानचिकीर्षाप्रयत्न-समवायलक्षणत्वात् कर्तृत्वस्य।[२९] अन्यथा भगवतः कर्तृत्वं स्वीकुर्वताऽपि न्यायवार्तिककृता कथङ्कारमीश्वरे षडेव गुणा आकाशवदित्युद्घोषयितुं शक्यते। यद्यपि केवलया ज्ञानशक्त्याऽपि कर्तृत्वं शक्यमङ्गीकर्त्तुम् यथा च श्रीधरभट्टः न्यायकन्दल्यामङ्गीकरोति।[३०] तथाप्युद्योतकरमते कृतीच्छायोग ईश्वरे स्वीक्रियते। उद्योतकरेण परमेश्वरेऽन्येषां जीवात्मगुणानां सत्त्वं निराकुर्वता इच्छायाः सत्त्वं स्वीक्रियते। तथाहि बद्धो वा मुक्त वेश्वर इति विकल्प्य प्रतिपाद्यते यदयमीश्वरः बद्धो नास्ति दुःखाभावात् दुःखस्य सत्तायामेवास्य बद्धत्वं स्वीकार्यम् दुःखाभावाच्च नास्य

बद्धत्वम्। मुक्तोऽपि नायमीश्वरः मुक्तेर्बन्धसापेक्षत्वात्।[३१] अस्येश्वरस्य कदाचिदपि बन्धो नास्ति न भूतो न वा भावि वर्तमानो वा। मुक्तपदेन च "क्त" प्रत्ययान्तेन भूतकालिकस्य बन्धनस्य बोधो भवति। वस्तुत ईश्वरेऽधर्मस्य दुःखकारणीभूतस्याभावात् दुःखं नास्ति, दुःखस्याभावात् दुःखदर्शनादेव जायमानं वैराग्यमपि नास्य विद्यते। वैराग्यं प्रति दुःखसत्त्वस्यावश्यकत्वात्। दुःखाभावादीश्वरे द्वेषोऽपि नास्ति दुःखजनकं प्रत्येव द्वेषस्य जायमानत्वात्। एवं प्रतिपादयन्नुद्योतकरो सिद्धान्तयति यदीश्वरेऽक्लिष्टायाः अव्याहतायाः सर्वार्थविषयिण्या इच्छायाः योग आवश्यकः।[३२] अतः खद्योतकाराणां मतं युक्तियुक्तं मन्यामहे।

एवमीश्वरे बुद्धीच्छाप्रयत्नानां विशेषाणां गुणानां संख्यापरिमाणपृथक्त्वसंयोग-विभागानां सामान्यगुणानां योगोऽङ्गीकर्तव्यः न्यायवार्तिककृतामुद्योतकराणामनुसारम्। ईश्वरोऽयं नित्यः तदीया बुद्धिर्नित्या, बुद्धिवदिच्छाप्रयत्नावप्यस्य नित्याविति।

तात्पर्यटीकाकृतां वाचस्पतिमिश्राणां तात्पर्यपरिशुद्धिकृतामुदयनाचार्या-णामप्यस्मिन्नेव परमेश्वरस्वरूपे सम्प्रतिपत्तिः। नास्मिन्नीश्वरस्वरूपे काचिद्विप्रतिपत्तिरेभिः समुपस्थाप्यते। न्यायमञ्जरीकृतां जयन्तभट्टानामप्यत्रैव सम्मतिः। नव्यनैयायिकेष्वप्रतिमो रघुनाथशिरोमणिः परमेश्वरस्यास्मिन्निर्वचने किञ्चित् परिष्करणं विदधाति। पश्यामस्तदीयं मतम्।

### दीधितिकृदभिमतमीश्वरस्वरूपम्

यच्च सर्वमुपरि परमेश्वरविषये प्रतिपादितं तत्र दीधितिकृतामनेकाः विप्रतिपत्तयो विद्यन्ते। पूर्वोक्तेषु प्रतिपादितेषु परमेश्वरधर्मेषु कश्चिद्धर्मो नाङ्गीक्रियते किञ्चिच्चाधिकमपि स्वीक्रियते। तदेवानुपदमत्र प्रदर्श्यते।

दीधितिकारो दिक्कालयोः सत्तां न हीश्वरादतिरिक्तां मनुते। ईश्वरातिरिक्तस्य कालस्य, ईश्वरातिरिक्तायाः दिशश्चास्वीकारेऽपि न हि काचिदनुपपत्तिर्दिग्व्यवहारस्य कालव्यवहारस्य च। तत्तन्निमित्तविशेषसमवधानवशादीश्वरादेव तत्तद्व्यवहारा- णामुपपत्तिः सम्भवति।[३३] यथा दिशः एकत्वेऽपि प्राची, प्रतीची, अवाची, उदीची इत्यादयोः विलक्षणा व्यवहारा उपाधिभेदेन सञ्जायन्ते। एवमेव कालस्यैकत्वेऽपि स्वजन्यविभागप्रागभावावच्छिन्नकर्मात्मकेन, पूर्वसंयोगावच्छिन्नविभागात्मकेन, पूर्वसंयोगनाशावच्छिन्नविभागात्मकेन, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावात्मकेन, उत्तरसंयोगावच्छिन्नकर्मात्मकेन वा उपाधिना क्षणव्यवहारो भवति। अन्यान्योपाधिभेदेन च दिन, पक्ष, प्रहर, मासादिव्यवहारो भवति। तथैव कालदिशोरीश्वरात्मकत्वेऽपि

व्यवहारा एते सम्भवन्ति। परापरत्वबुद्धिकारणत्वेन कालस्य, दूरान्तिकादिबुद्धिकारणत्वेन च दिशः स्वीकरणस्य नास्ति काचिदावश्यकता परापरत्वबुद्धेः दूरान्तिकादिबुद्धेश्च परमेश्वरात्मककालदिशोरेव सम्भवात्। अतः कालदिशोरीश्वरभिन्नत्वं नाङ्गीकरणीयम्।

एवमेव रघुनाथशिरोमणिराकाशस्यापीश्वरात्मकत्वमङ्गीकरोति। रघुनाथस्य कथनमस्ति यन्निमित्तकारणत्वेन स्वीकृतस्येश्वरस्य शब्दसमवायिकरणत्वमपि स्वीकरणीयम्।[३४] अयमाशयो दीधितिकृताम्-यत् शब्दं प्रति परमेश्वरस्य निमित्त-कारणत्वं स्वीक्रियत एव नैयायिकेन, तस्यैव परमेश्वरस्य शब्दसमवायिकारणत्वमपि स्वीकरणीयम्। एवञ्चाकाशात्मकस्यातिरिक्तस्य द्रव्यस्याकल्पनात् लाघवं भवति। रीत्याऽनया दिक्कालाकाशानामीश्वरात्मकत्वमेव स्वीकरणीयमिति प्रतिपाद्यते। अत्रेयमाशङ्का जायते-यदि जीवात्मसजातीयस्य परमेश्वरस्य शब्दसमवायिकारणत्वं स्वीक्रियते, तर्हि जीवात्मन एव शब्दसमवायिकारणत्वं स्वीक्रियताम्। का विनिगमना परमात्मनः शब्दसमवायिकारणत्वस्वीकारे? समाधीयते-भावकार्यस्य समवायिकारण-जन्यत्वस्य नियमो विद्यते। शब्दस्यापि भावकार्यत्वं विद्यते। शब्दं प्रति च यदि जीवात्मनः समवायिकारणत्वं स्वीक्रियते तदा जीवात्मनामानन्त्यात् कस्य जीवात्मनः शब्दसमवायिकारणत्वं स्वीकरणीयम्? अत ईश्वरस्यैव शब्दसमवायिकारणत्वम्।[३५] अन्याः युक्तयोऽपि विद्यन्ते परमेश्वरस्य शब्दसमवायिकारणत्वस्वीकारे-प्रथमेयं युक्तिरस्ति यत् परमेश्वरस्य शब्दं प्रति निमित्तकारणताऽस्ति, यदि परमेश्वरस्य शब्दं प्रति समवायिकारणत्वं स्वीक्रियते चेत् तदा केवलं परमेश्वरस्य शब्दसमवायित्वमात्रं कल्पनीयं भवति, जीवात्मनः शब्दसमवायिकारणत्वे कल्पनीये जीवात्मनां शब्दं प्रति निमित्तकारणताऽपि नास्ति, अतः कारणत्वं शब्दसमवायित्वमुभयमपि कल्पनीयं भवति। अतः परमेश्वरस्य शब्दसमवायिकारणत्वे स्वीक्रियमाणे लाघवम्। यदि च "शब्दः जीवात्मजन्यः तदीयादृष्टजन्यत्वात् सुखादिवत्" तथाहि सुखं जीवात्मजन्यं भवति जीवात्मीयादृष्टजन्यमपि भवति इति अनुमानेन आत्मनां शब्दकारणत्वं संसाध्यते, तर्हि नैतच्छक्यम्-यतोहि अदृष्टस्य शब्दजनकत्वेऽपि अदृष्टाश्रयस्य शब्दजनकत्वे नास्ति किञ्चित् प्रमाणम्, नास्ति कश्चिदनुकूलस्तर्कोऽत्र यत् यददृष्टजन्यं भवति तत् तददृष्टाश्रयजन्यमपि भवति। अतः जीवात्मनां शब्दसमवायिकारणत्वस्वीकारे शब्दसमवायित्वं शब्दकारणत्वमुभयमपि कल्पनीयं भवति। द्वितीया युक्तिरस्ति-यदि जीवात्मनां शब्दसमवायिकारणत्वं स्वीक्रियते तदा यथाऽहं सुखादिमान् इति मानसं प्रत्यक्षं भवति तथैवाहं शब्दवान् इत्यपि मानसप्रत्यक्षं भवेत्। न भवति "अहं शब्दवान्" इत्याकारकः मानसिकः साक्षात्कारः। अतोऽवगम्यते यन्नास्ति शब्दस्यात्म-विशेषगुणत्वं, सति चैवं न हि जीवात्मनां शब्दसमवायिकारणतवं कल्पयितुं

शक्यम्।[३६] अतः शब्दसमवायिकारणत्वं परमेश्वरस्यैवाङ्गीकर्तव्यम्। रीत्या चानया श्रोत्रमपि कर्णशष्कुल्यवच्छिन्न ईश्वर एव।[३७] यथा चान्ये नैयायिकाः कर्णशष्कुल्यवच्छिन्नमाकाशपदार्थं श्रोत्रं मन्यन्ते तथैव रघुनाथः परमेश्वरं कर्णशष्कुल्यवच्छिन्नं श्रोत्रमिति मनुते। अनेन प्रकारेण दीधितिकारः ईश्वरस्यैव दिक्कालाकाशात्मकत्वं स्वीकरोति।

नैयायिकैः दिक्कालाकाशानां सत्तां क्रमश एभिः कारणैः स्वीक्रियते। दूरान्तिकादिबुद्धिर्या भवति-दूरमिदम्, अन्तिकमिदमिति। अस्याः बुद्धेः कारणं किमस्ति? तत्र समाधीयते दिशः दूरान्तिकादिबुद्धिकारणतया सिद्धिर्भवति। दूरबुद्धिं प्रति परत्वं कारणं भवति, अन्तिकबुद्धिं प्रति चापरत्वं कारणम्। परत्वं प्रत्यपरत्वं प्रति च दिक्पिण्डसंयोगः कारणम्, दिक्पिण्डसंयोगं प्रति च दिशः कारणत्वमेवं क्रमेण दिशः परम्परया दूरान्तिकादिबुद्धिं प्रति कारणत्वं भवति असतः पदार्थस्य शशश्रृङ्गादेः नहि कमपि प्रति कारणत्वं भवति, अतः दिशः सत्त्वमाश्यकम्। अनेन प्रकारेण भवति दिशः सिद्धिः।[३८]

एवमेव कालिकपरत्वापरत्वबुद्धिं प्रति कारणतया कालस्य सिद्धिर्भवति। ज्येष्ठे परत्वप्रत्ययो भवति कनिष्ठे चापरत्वप्रत्ययः। सोऽयं परत्वप्रत्ययोऽपरत्वप्रत्ययश्च परत्वापरत्वात्मकगुणविशेषाधीनः। परत्वगुणोऽपरत्वगुणश्च सासमवायिकारणकः भावकार्यत्वात् अनेनानुमानेन परत्वापरत्वयोः किञ्चिदसमवायिकारणमिति सिद्धं भवति। तयोरसमवायिकारणञ्च कालपिण्डसंयोग एव, कालपिण्डसंयोगाश्रयतया च कालस्य सिद्धिर्भवति।[३९]

शब्दाश्रयत्वेन चाकाशस्य सिद्धिर्भवति। शब्दो विशेषगुणः, विशेषगुणानामाश्रयीभूतानि द्रव्याणि पृथिवीजलतेजोवायुवात्माख्यानि वर्तन्ते। शब्दो रूपादिरिव बहिरिन्द्रियग्राह्यविशेषगुणोऽस्ति। शब्दस्य गुणत्वादेव द्रव्याश्रितत्वं सिद्धं भवति। पृथिव्यादिषु कस्मिन् द्रव्ये शब्दस्य सत्ता? अत्रानुमीयते यत्-शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् आत्मविशेषगुणसुखादिवत्। अनुमानेनानेन शब्दे स्पर्शवद्विशेषगुणत्वाभावः सिद्ध्यति। पुनश्च शब्दो नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् इति शब्दे आत्मविशेषगुणत्वाभावः सिध्यति दिक्कालयोश्च विशेषगुणाश्रयत्वाभावात् न शब्दाश्रयत्वम्। अतः शब्दाश्रयतयाऽतिरिक्तं द्रव्यं सिद्ध्यति तदेव चाकाशम्।[४०]

अत्र यदि तर्क्यते चेत्तदा स्पष्टीभवति यत् कालदिशोरुभयोरेव सत्ता नैयायिकैरेकयैव युक्त्या स्वीक्रियते। नैयायिकानामयं राद्धान्तः यत् भावकार्यं प्रति

त्रीणि कारणानि भवन्ति (१) समवायिकारणम् (२) असमवायिकारणम् (३) निमित्तकारणञ्च।[४१] ज्ञानं प्रति च विषयस्य निमित्तकारणत्वम्। अतः दैशिकी कालिकी च या परत्वापरत्वबुद्धिर्भवति तां प्रति तस्याः बुद्धेः विषयस्य परत्वस्यापरत्वस्य कारणत्वं स्वीकार्यम्। दैशिकपरत्वापरत्वबुद्धिं प्रति दैशिकं परत्वमपरत्वञ्च कारणम्। कालिकपरत्वापरत्वबुद्धिं प्रति कालिकं परत्वमपरत्वञ्च कारणम्। तदिदं कालिकं दैशिकञ्च परत्वमपरत्वं च प्रति कालपिण्डसंयोगस्य दिकपिण्डसंयोगस्य च क्रमशोऽसमवायिकारणत्वम्। कालपिण्डसंयोगस्य समवायिकारणत्वेन कालस्य, दिक्पिण्डसंयोगस्य समवायिकारणत्वेन च दिशः सिद्धिर्भवति। अत्र पश्यामो वयं यदिमा युक्तयो यद्यपि कालसत्त्वे दिक्सत्त्वे च प्रमाणभूताः। परन्तु न हि युक्तय इमाः कालदिशोरतिरिक्तत्वं समर्थयन्ति। उक्तव्यवहारसम्पादनाय कालदिशोः सत्त्वमावश्यकम् तच्चेश्वरात्मकत्वेऽपि सम्भवति। अतः दीधितिकारो न हीश्वरादतिरिक्तां सत्तां कालदिशोः स्वीकरोति उक्तव्यवहारसम्पदनाय।

अत्रेदं तत्त्वम्-पूर्वोक्तयुक्त्या कालदिशोः सत्तायामेवं प्रमाणमस्ति नातिरिक्तसद्भावे किञ्चित् प्रमाणमस्ति। यतो हि तत्तद्व्यवहारोपपत्तये कालदिशोः सत्त्वमावश्यकं न त्वतिरिक्तसत्त्वम्।

एवमेव पूर्वं या युक्तिः प्रदर्शिताऽऽकाशसाधनाय साऽपि न हीश्वरातिरिक्तत्वं शब्दाश्रयस्य साधयति। यथा क्षित्यादेः कृतिजन्यत्वसिद्धौ तादृशकृत्याश्रयतया परमेश्वरस्य सिद्धिर्भवति तथैव दिक्पिण्डसंयोगाश्रयतया, कालपिण्डसंयोगाश्रयतया, शब्दसमवायिकारणतया च तस्यैव परमेश्वरस्य सिद्धिर्भवति। मन्यामहे यद्दीधितिकृताऽऽकाशकालदिशामीश्वरात्मकत्वं समुचितमेवाङ्गीक्रियते।

ईश्वरे यत् संख्यापरिमाणपृथक्त्वसंयोगविभागाख्याः सामान्याः गुणाः स्वीक्रियन्ते तत्रापि रघुनाथस्य विप्रतिपत्तिरस्ति। नहीश्वरे परिमाणपृथक्त्वसंयोगविभागवत्त्वमङ्गीकरोति रघुनाथः। ईश्वरस्य परिमाणवत्त्वं प्रमाणाभावान्न स्वीक्रियते। द्रव्यत्वञ्च न हि परिमाणवत्त्वस्य साधकमस्ति।[४२] अत्र पदार्थतत्त्वनिरूपणस्य टीकाकारो रघुदेवन्यायालङ्कारः स्पष्टीकरोति यत् "अहं सुखी महान्" इत्यादिमानसप्रत्यक्षसद्भावाज्जीवात्मनः परिमाणवंत्त्वं प्रत्यक्षसिद्धम्। नहीश्वरे परिमाणवत्त्वसद्भावे प्रत्यक्षं प्रमाणम्, नानुमानं वा। यदि च जीवात्मनोऽपि परिणामवत्त्वं प्रत्यक्षसिद्धं नास्ति तर्हि जीवात्मनोऽपि परिमाणवत्त्वमप्रामाणिकमेव।[४३] यदि च द्रव्यत्वेन हेतुना परमेश्वरस्य परिमाणवत्त्वं साध्यते तर्हि नैतदपि शक्यम् अनुकूलतर्कविरहात्। अपि चेश्वरस्य द्रव्यत्वेऽपि नास्ति किञ्चित् प्रमाणम्। अत एव ईश्वरे संयोगविभागयोरपि

सत्त्वं नाङ्गीक्रियते। पृथक्त्वस्य तु रघुनाथो गुणत्वमेव खण्डयति भेदेनैव पृथग्-व्यवहारसम्भवात्[४४] पदार्थतत्त्वनिरूपणस्य टीकाग्रन्थानां पर्यालोचनेन ज्ञायते यद्रघुनाथ शिरोमणिः परमेश्वरे द्रव्यत्वमङ्गीकरोति। तथा हि पदार्थतत्वनिरूपणस्य व्याख्याकारो रघुदेव न्यायालङ्कारः लिखति-

"विभुत्वञ्च मूर्तेतरद्रव्यत्वं न तु परममहत्परिमाणवत्त्वम्। ईश्वरात्मनि तस्य निराकरिष्यमाणत्वेन विभुत्वाभावापत्तेः।[४५]

अतः प्रतीयते यद्रघुनाथः परमेश्वरे द्रव्यत्वं स्वीकरोति। वस्तुतः परमेश्वरस्य शब्दसमवायिकारणत्वे स्वीकृते सति रघुनाथमते द्रव्यत्वमीश्वरस्यावश्यमेव कल्पनीयं भवति। कार्यसमवायिकारणतावच्छेदकत्वात् द्रव्यत्वे स्वीकृते संयोगस्य विभागस्य च सत्ता स्वीकार्या भवति, संयोगविभागयोः सामान्यगुणत्वात् द्रव्यमात्रवृत्तित्वात्। एकत्वसंख्या च परमेश्वरे स्वीक्रियते एव। यद्यपि रघुनाथः संख्यायाः गुणत्वं न स्वीकरोति पदार्थान्तरत्वं च स्वीकरोति।

नैयायिकाः सुखकारणीभूतादृष्टाभावात् परमेश्वरे सुखसत्त्वं न स्वीकुर्वन्ति। सुखमात्रस्यैवादृष्टजन्यत्वव्याप्तेः अदृष्टाभावात् सुखाभावं प्रतिपद्यन्ते। परन्तु रघुनाथशिरोमणिः परमेश्वरे नित्यसुखस्य सत्तां स्वीकरोति। अत एव चिन्तामणीयानुमिति खण्डस्य दीधितिग्रन्थस्य मङ्गलाचरणे-

**"ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते।**
**अखण्डानन्दबोधाय पूर्णाय परमात्मने॥**

इत्यनेन "अखण्डानन्दबोधाय" इति पदेन नित्यसुखनित्यज्ञानवन्तमीश्वरं प्रतिपादयति। अत्र "अखण्डानन्दबोधाय" इत्येन नित्यज्ञाननित्यसुखवत्त्वमीश्वरस्य व्यज्यते। यद्यपि टीकाकारैः गदाधरभट्टाचार्यैरस्य न्यायदर्शनाभिमत एवार्थो विहितः। रघुनाथोऽपि न हि स्पष्टतः पदार्थतत्त्वनिरूपणे प्रतिपादयत्येतत्। परन्तु जगदीश-ग्रन्थावलोकनेव प्रतीयते यत् नित्यसुखज्ञानवत्त्वमीश्वरस्य दीधितिकारोऽङ्गीकरोति। तथाहि ग्रन्थेऽत्र गदाधरो वक्ति यत् अखण्डपदस्य नित्यार्थकत्वं स्वीकृत्य "नित्य-सुखज्ञानवते" इत्यर्थः "नित्यसुखज्ञानात्मकाय" इत्यर्थो वा नहि नैयायिकानां शोभते, आत्मनि नित्यसुखस्य, ज्ञानसुखाभेदस्य च नैयायिकैरस्वीकारात्। अतः "अखण्डो दुःखासम्भिन्नो आनन्दो यस्मात् सोऽखण्डानन्दः एवम्भूत उपासनारूपो बोधो यस्य" इति पूर्वोक्तं पदं व्याख्येयम्। अथवा, ग्रन्थकारः (रघुनाथः) नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमतं परिष्करोति, तदभिप्रायेणायं ग्रन्थः। तथा

चात्र कल्पे अखण्डस्य =नित्यस्य आनन्दस्य बोधः = साक्षात्कारो यस्मादिति व्युत्पत्त्या भगवत एतादृशमुक्तिप्रयोजकत्वं प्रतिपादितं भवति। उपासनाविषयतयाऽस्य मुक्तिप्रयोकत्वम् तस्मै इत्यर्थः अत्र बोध्यते।[४६] अत्र ग्रन्थे व्याख्यानावसरे जगदीशः स्पष्टत एव परमेश्वरे नित्यसुखनित्यज्ञानवत्त्वमीश्वरस्य प्रतिपादयति। स च "अखण्डौ = नित्यौ आनन्दबोधौ यस्य तस्मै" इति व्युत्पत्तिं प्रदर्श्य नित्यसुख-नित्यज्ञानाश्रयायेत्यर्थं करोति आक्षिपति चात्र यत् सुखत्वावच्छेदेन पुण्यजनकताऽस्ति अर्थात् सुखत्वावच्छिन्नं प्रति पुण्यस्य कारणताऽस्ति। ईश्वरे पुण्याभावात् कुतः सुखस्य सत्त्वं स्वीकर्तुं शक्यम्। सुखमात्रस्यैव पुण्यजन्यत्वात् कुतः नित्यसुखस्य संभावनापि? तत्र समादधाति यत्-श्रुतिवाक्येभ्यः नित्यसुखसिद्धौ सत्याम् सुखत्वावान्तरजातेः जन्यसुखत्वस्यैव पुण्यजन्यतावच्छेदकत्वम् तथाहि जन्यं सुखं प्रत्येव पुण्यजनकत्वमस्ति।[४७] अत्र मन्ये यज्जगदीशोक्तमेव रघुनाथाभिमतं स्फोरयति। वस्तुतः यादृशः शब्दप्रयोगो रघुनाथेन कृतः तेन जगदीशेन प्रतिपादित एवार्थो बोध्यते इति मन्यामहे वयम्। गदाधरोऽपि न नैयायिकेन एतादृशोऽर्थः कर्तुं शक्यत इति कृत्वा प्रथमं जगदीशमतमेव खण्डयति। यदि गदाधरकृत एवार्थः प्रतीयेत तर्हि नैवं प्रथमं खण्डनं श्रेयस्करम्। प्रथमतः खण्डनेन प्रतिभाति यद्गदाधरोऽपि मनुते यदत्र जगदीशेन प्रतिपादित एवार्थो बुध्यते प्रथमया दृष्ट्या। बलमस्ति जगदीशप्रतिपादने। अतोऽहं मन्ये यद्दीधितिकारो नित्यसुखसत्त्वमीश्वरेऽङ्गीकरोति। रामरुद्र्यामपि दिनकरभट्टोपदर्शितनव्यनैयायिकमतनिरूपणावसरे "यथा चेश्वरे सुखसम्भवस्तथाऽग्रे व्यक्तीभविष्यति" इति दिनकरीग्रन्थं व्याकुर्वन् रामरुद्रभट्टाचार्यः "नित्यं विनमानन्दं ब्रह्म" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्यादिभिः श्रुतिभिरीश्वरे नित्यसुखसिद्धिर्भवतीति प्रतिपादयति।[४८] अतः सिद्धं भवति यन्नव्यनैया-यिकैरीश्वरे नित्यसुखवत्त्वमङ्गीक्रियते। न हि कस्यचिदन्यस्य नव्यनैयायिकस्यैतादृशो ग्रन्थ उपलभ्यते यत्र तेन नित्यसुखवत्त्वमीश्वरे स्वीकृतं स्यात्। अपि च दिनकर्यां पूर्वोक्तस्थले परमेश्वरे परिमाणस्य सत्ता नास्तीत्यादिकः दीधितिकृतः सिद्धान्त एव "नव्यास्तु" इति ग्रन्थेन प्रतिपादितः। अतः सिद्धान्ततो रघुनाथः परमेश्वरे नित्यसुखसत्तां स्वीकरोति। न्यायदर्शनानुसारन्तु तत्र श्रुतिवाक्येषु "आनन्द" पदस्य दुःखाभावार्थे प्रयोगः क्रियते यथा च भाराद्यपगमे सुखी संवृत्तोऽहमिति प्रतीतिर्भवति। तथा चैषा प्रतीतिर्लाक्षणिकी न तु वास्तविकी।[४९] इति रीत्या दीधितिकारो रघुनाथ ईश्वरस्वरूपं निर्वक्ति।

## ईश्वरस्य सत्त्वे प्रमाणं किम्?

प्रश्नेऽस्मिन् बहून्युत्तराणि प्रस्तूयन्ते दार्शनिकैः। अन्यैः कैश्चित् प्रतिपाद्यते यत्

शास्त्रस्यैव प्रामाण्यमस्ति परेश्वरास्तित्वसमर्थनाय। अत्र न्यायदर्शनं नवीनां सरणिमुपस्थापयति अनुमानस्य च परमेश्वरास्तित्वे प्रमाणतयोल्लेखं करोति। तत्रेश्वरसाधकान्यनेकान्यनुमानानि प्रस्तूययन्ते। गौतमेन न्यायसूत्रे-"ईश्वरः कारणम् पुरुषकर्माफल्यदर्शनात्"[५०] इति सूत्रेणेश्वरसाधकमनुमानमेव प्रदर्श्यते। भाष्यकारो वात्स्यायनश्च-

"पुरुषोऽयं समीहमानो नावश्यं समीहाफलं प्राप्नोति तेनानुमीयते पराधीनं पुरुषस्य कर्मफलाराधनमिति यदधीनं स ईश्वरः"[५१]

इत्यनेनाग्रिमसूत्रद्वयव्याख्यानेन च पुरुषकर्मणोऽपि कार्यं प्रति कारणत्वं प्रतिपादयति। मन्यामहे यदेतदेवानुमानमुद्योतकरो विशदयति, न्यायकुसुमाञ्जला-वदृष्टाधिष्ठातृतयेश्वरसाधकानुमानरूपेण चोदयनः स्पष्टीकरोति। तच्चाग्रे प्रति- पादयामः।

न्यायवार्तिककार उद्योतकर ईश्वरसाधनाय स्पष्टतोऽनेकान्यनुमानानि प्रस्तौति-

(१) प्रधानपरमाण्वदृष्टानि प्राक् प्रवृत्तेः बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्तेऽचेतनत्वात् वास्यादिवत्। यथा अचेतनम् वास्यादि बुद्धिमता तक्ष्णाऽधिष्ठितमेव प्रवर्ततेऽ-चेतनत्वात् स्वयमेव न तस्य प्रवृत्तिर्भवति। अचेतनस्य प्रधानस्य (सांख्यदर्शना-भिमतायाः प्रकृतेः), परमाणूनाम्, अदृष्टस्य च प्रवृत्तिर्न चेतनमधिष्ठातारं विना सम्भवति, अतः केनचिदधिष्ठात्रा भाव्यम्, यश्चाधिष्ठाता स एवेश्वरः। रीत्या चानया प्रधानपरमाण्वदृष्टानामधिष्ठायकतयेश्रसिद्धिर्भवति। यदि चाधिष्ठातारं विना प्रधानपरमाण्वदृष्टानां प्रवृत्तिर्भवतीति स्वीक्रियते तदा सततमेव प्रवृत्तैरेभिर्भाव्यम्।[५२] न हि सततं प्रवर्तन्ते प्रधानपरमाण्वदृष्टानि। अतोऽवश्यं चेतनेन केनचिदधिष्ठायकेन भवितव्यम्। अत्रायमाशय उद्योतकरस्य यत् यद्यचेतनं चेतनानधिष्ठितं प्रवर्तते चेत् तदा कदाचित् प्रवृत्तिः कदाचिच्च निवृत्तिर्नैव सम्भवति भवति च कदाचित् प्रधानपरमाण्वदृष्टानां प्रवृत्तिः कदाचिच्च निवृत्तिः। अत एतेषामधिष्ठाता कश्चिदस्ति।

(२) अग्रे चोद्योतकरः अदृष्टाधिष्ठायकत्वेनेश्वरसाधनायैकमपरमप्यनुमानं प्रस्तौति धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वात् वास्यादिवत् अत्र करणत्वेन हेतुना धर्माधर्मयोः (अदृष्टस्य।)अधिष्ठातारमीश्वरं साधयति।[५४]

(३) महाभूतानामधिष्ठातृतयापि परमेश्वरं साधयति न्यायवार्तिककारः। तत्रानुमानद्वयं

समुपस्थाप्यते महाभूतानामधिष्ठायकत्वसाधनाय। (क) वाय्वन्तानि भूतानि बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु प्रवर्तन्तेऽचेतनत्वा-द्वास्यादिवत्[५५] (ख) महाभूतादिकं व्यक्तं बुद्धिमत्कारणाधिष्ठितं सुखदुःखादिनिमित्तं भवति रूपादिमत्त्वात् तुर्यादिवत्।[५६] एतेनानुमानद्वयेन महाभूताधिष्ठायकतयाऽपि परमेश्वरं साधयति न्यायवार्तिककारः।

न्यायवार्तिकस्य तात्पर्यटीकाकाराः वाचस्पतिमिश्रा अपि अत्रानुमानमेकं प्रस्तुन्वन्ति। यद्विवादाध्यासिताः तनुतरुमहीधरादयः उपादानाभिज्ञचेतनकर्तृकाः उत्पत्तिमत्त्वात्, अचेतनोपादानत्वाद्वा। यदुत्पत्तिमदचेतनोपादानं वा भवति तत्सर्व-मुपादानाभिज्ञपूर्वकं भवति यथा प्रासादादि। तथा च विवादाध्यासिताः तनुत रुमहीधरादयोऽपि विद्यन्तेऽर्थात् उत्पत्तिमन्तः अचेतनोपादानवन्तश्च विद्यन्ते। अत एतेषामपि उपादानाभिज्ञपूर्वकत्वं सिद्धं भवति।[५७] अत्र वाचस्पतिमिश्रः स्पष्टयति यल्लोके त्रिविधाः भावाः भवन्ति केचन प्रसिद्धचेतनकर्तृकाः यथा प्रासाद, अट्टालिका, गोपुर, तोरणादयः। केचन च प्रसिद्धतद्विपर्ययाः यथा परमाण्वाकाशादयः केचन च संदिग्धचेतनकर्तृकाः यथा तनुतरुमहीधरादयः। तेषु संदिग्धचेतनकर्तृकेषु तनुतरुमहीधरेषु चेतनकर्तृकत्वं साध्यते। एतेषां चेतनकर्तृकत्वे सिद्धे सति यच्चेतनकर्तृकत्वं तनुतरुमहीधरादीनां स चेतन एवेश्वर इति भवतीश्वरसिद्धिः। इदमेवानुमानं नैयायिकैरर्वाचीनैः क्षित्यादिकं सकर्तृकं कार्यत्वादित्यादिविधया प्रस्तूयते।

उदयनाचार्यो न्यायकुसुमाञ्जलौ परमेश्वरसाधकान्यनेकान्यनुमानानि प्रस्तौति। ग्रन्थोऽयं परमेश्वरसिद्धौ प्रमाणानामेवोपस्थापकः। अत्र प्रथमे स्तबकेऽदृष्टं साधयित्वा तदधिष्ठातृतया परमेश्वरस्य साधनं क्रियते। अनुमानमिदं न्यायवार्तिकेऽपि प्रदत्तमस्ति। अयमत्र विस्तरतः साधयति यत् परलोकार्थिनां यागादौ प्रवृत्तिर्भवति, सेयं प्रवृत्तिर्नैव व्यर्था भवितुमर्हति, नैव च दुःखमात्रफला भवितुं शक्नोति, तस्याः यागादौ प्रवृत्तेश्च न हि किञ्चिद्दृष्टं फल प्रतीयते। यदि वदेद्भवान् यदयं विप्रलम्भ एव लोकानां तर्हि नैतदपि शक्यम् यतोहि को नाम एवं लोकोत्तरो यः केवलं परप्रतारणार्थमेव नानाविधक्लेशहेतुभूतैः कर्मभिरात्मानमवसादयेत्। अतो यागादौ परलोकार्थिनां प्रवृत्तेः साफल्यमावश्यकम्।[५८] यागादौ प्रवृत्तेः साफल्यस्वीकारे न हि त्वरितमेव फलप्रदायकत्वमङ्गीकर्तुं शक्यते। पूर्वमेव ध्वस्तञ्च कर्म कर्मातिशयं विना न हि फलप्रदानसामर्थ्यं धारयति।[५९] अतः कश्चिद्व्यापारोऽवश्यमभ्युपेयः स च व्यापार एवापूर्वपदेन अदृष्टपदेन वोद्घुष्यते। तदधिष्ठातृतया चेश्वरसिद्धिर्भवति। तत्रायं क्रमः धर्माधर्मात्मकालौकिकपरलोकसाधने यो विप्रतिपन्नस्तं प्रति प्रथमं

धर्माधर्मात्मकालौकिकपरलोकसाधनस्य साधनम्। सिद्धे चादृष्टे (धर्माधर्मात्मके) अचेतनस्य कारणस्य चेतनाधिष्ठानेनैव कार्यजनकत्वात्तदधिष्ठायकतयेश्वरसिद्धिः।[६०]

तत्साधकप्रमाणाभावादिति विप्रतिपत्तिं समादधानः श्रीमदुदयनाचार्योऽष्टौ हेतूननुमानाय प्रदर्शयति। ते च हेतव इमे सन्ति कार्यत्वम्, आयोजनम्, धृत्यादिः, पदम्, प्रत्ययः, श्रुतिः, वाक्यम्, संख्याविशेषश्च। एतैरष्टभिर्हेतुभिः परमेश्वरः साध्यते।[६१] एतैः हेतुभिः अनुमानानि चैवं भवन्ति।

(१) क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्। अनुमानमिदं क्षित्यादेः सकर्तृकत्वं साधयति सः कर्तैवेश्वरः। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमेव कर्तृत्वम्। अस्मदादीनाञ्चैतादृशं कर्तृत्वं नैव सम्भवति। अतोऽवगम्यते यत् क्षित्यादेः कर्ताऽस्मदादिभिर्विलक्षणः स एव चेश्वरः इति भवतीश्वरसिद्धिः।

(२) सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वादस्मदादिशरीरक्रियावत्। आयोजनपदार्थश्च कर्मैव। एतादृशेनानुमानेन द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकस्य कर्मणः चेतनप्रयत्नपूर्वकत्वे सिद्धे यत्प्रयत्नपूर्वकं तत्कर्म स एवेश्वर इतीश्वरसिद्धिर्भवति।

(३) धृत्यादिरित्यत्रादिपदेन विनाशो बोध्यते। तथा चात्रानुमानद्वयं बोध्यते तथाहि ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत्। ब्रह्माण्डस्य धृतिः सिद्धैव। धृतिपदार्थश्च गुरुत्ववतां पतनाभावः। विनाशहेतुकञ्चानुमानमिदम्–ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत्। अत्र यत्प्रयत्नवदधिष्ठितं ब्रह्माण्डादि, यत्प्रयत्नवद्विनाश्यञ्च स एवेश्वरः इति भवतीश्वरसिद्धिः।

(४) पदं नाम व्यवहारः। तथाहि पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। सर्गादौ च पटादिसम्प्रदायप्रवर्तकत्वं न हि जीवात्मनां सम्भवति तदानीं जीवात्मनां शरीराद्यभावात्। स च पटादिसम्प्रदायव्यवहारप्रवर्तकः स्वतन्त्रः पुरुषः परमेश्वरः इति परमेश्वरसिद्धिः।

(५) प्रत्ययपदार्थः प्रामाण्यम्। प्रामाण्यञ्च कारणगुणाधीनं भवति, अप्रामाण्यञ्च कारणदोषाधीनं भवति। वेदानामपि प्रामाण्यं कारणगुणजन्यं भविष्यति। शब्दजनितप्रमात्मकज्ञानस्य कारणीभूतो गुणोऽस्ति वक्तरि पुरुषे विद्यमानं वाक्यार्थविषयकं यथार्थज्ञानम्। अनयैव रीत्या लोके शब्दस्य प्रामाण्यं दृश्यते। वेदात्मकानां शब्दानामपि प्रामाण्यस्यैषैव रीतिरादर्त्तव्या यतो हि यावदयं विश्वासो न भवति यद्वेदवक्तुः वेदार्थस्य यथार्थं ज्ञानमस्ति तावत्

वेदानां प्रामाण्यस्य सम्भावनाऽपि नास्ति। तथा च वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् इत्यनुमानेन वेदजन्यज्ञानेऽपि विद्यमानं प्रामाण्यं कारणगुणजन्यमित्यनुमीयते। सर्वज्ञं पुरुषं परित्यज्य न हि कस्मिंश्चित् साधारणे मनुष्ये वेदार्थविषयकज्ञानस्य विश्वासो कर्तुं शक्यते। वेदरूपशब्दप्रामाण्योपयुक्तो यथार्थज्ञानात्मको गुणो यस्मिन्पुरुषेऽस्ति स पुरुषः परमेश्वर एवेति परमेश्वरसिद्धिः।

(६) श्रुतिर्नाम वेदः। तथा च वेदः पौरुषेयः वेदत्वात् आयुर्वेदवत् अनुमानेनानेन वेदस्य पौरुषेयत्वं साध्यते। पौरुषेयत्वञ्च पुरुषप्रणीतत्वम् यत्पुरुषप्रणीतत्वं वेदानां स पुरुष एवेश्वर इतीश्वरसिद्धिः।

(७) सर्वाण्यपि वाक्यानि पुरुषनिर्मितानि भवन्ति वेदानामपि वाक्यरूपत्वम्। अतो वेदानां पुरुषनिर्मितत्वं भाव्यम्। तथा चानुमानप्रयोगः वेदः पौरुषेयः वाक्यत्वात् भारतादिवत् इति। नह्यस्मदादीनां वेदरचयितृत्वमतो वेदानां रचयिता पुरुष एव परमेश्वर इति परमेश्वरसिद्धिः।

(८) जन्यपरिमाणं त्रिविधं भवति परिमाणजन्यं, प्रचयजन्यं संख्याजन्यञ्च। ६२ तथाहि घटादीनां परिमाणं कपालपरिमाणजन्यं भवति, तूलकादीनां परिमाणं शिथिलावयवसंयोगात्मकेन प्रचयेन जन्यते। द्व्यणुकपरिमाणं प्रचयजन्यं नास्ति, परिमाणजन्यमपि नास्ति यतोहि द्व्यणुकपरिमाणं परमाणुपरिमाणजन्यमेव भवितुमर्हति। परन्तु यदि परमाणुपरिमाणजन्यं स्यात्तदा द्व्यणुकपरिमाणं अणुतरं स्यात् परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्। ६३ अतो द्व्यणुकपरिमाणस्य संख्याजन्यत्वं सिद्ध्यति। तथाहि अनुमानप्रयोगः– द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात्। यन्नैवं तन्नैवमिति व्यतिरेको दृष्टान्तः। संख्याजन्यत्वे च सिद्धे संख्यायाः (द्वित्वस्य) अपेक्षाबुद्धिजन्यत्वात् यस्येयमपेक्षाबुद्धिः स एवेश्वरः इतीश्वरसिद्धिः। एतेष्वनुमानेषु प्रथमं द्वितीयं तृतीयमष्टमञ्चानुमानं जगन्निर्मातृतयैवेश्वरं साधयति। चतुर्थेन सम्प्रदायप्रवर्तकतयेश्वरः साध्यते। पञ्चमेन, षष्ठेन, सप्तमेन चानुमानेन वेदजनकत्वेनेश्वरस्य सिद्धिर्भवति। अदृष्टाधिष्ठायकतया चेश्वरसिद्धिः प्रथममेवोक्ता। मुख्यतो नैयायिकाः त्रिभिः प्रकारैरीश्वरं साधयन्ति (१) जगन्निर्मातृतया (२) अदृष्टाधिष्ठातृतया (३) वेदप्रणेतृतया च। एतान्येवानुमानानि परवर्तिभिः परिष्कृतानि गङ्गेशादिभिः।

दीधितिकृतस्त्वीश्वरसाधनायैकामद्भुतां सरणिमाश्रयन्ते। तेषां कथनमस्ति सहस्रतन्तुकस्य पटस्यैकस्य तन्तोः विगमे जाते सति सहस्रतन्तुकः पटः नश्यति

परन्तु एकोनसहस्रतन्तुकपटस्यानुभवो भवति। यथा सहस्रतन्तुकस्य पटस्य कश्चित् कर्ता भवति तथैव एकोनसहस्रतन्तुकेनापि पटेन सकर्तृकेण भाव्यम्। कुविन्दस्तु नहि तस्य पटस्य कर्ता, तेन तु सहस्रतन्तुकः पटो निर्मितः स तु नष्टः। अत एकोनसहस्रतन्तुकस्य पटस्य कश्चिदन्यः कर्ताऽभ्युपेयः। तथा ह्यनुमानप्रयोगः-एकतन्तु-विगमाद् एकोनसहस्रतन्तुकः पटः सकर्तृकः कार्यत्वादन्यपटवत् कर्तरि च सिद्धेऽन्यस्य कस्यचित् कर्तृत्वं स्वीकार्यम्, न ह्यस्मदादीनां कर्तृत्वं तत्र समुपलभ्यते। यश्च तस्य पटस्य कर्ता स एवेश्वरः।[६४]

यद्यपि भगवतः सत्तायां वेदा एव परमप्रमाणभूताः "विश्वतश्चक्षुरुत" "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादिभिः श्रुतिभिरीश्वरस्य सत्ता स्पष्टतः साध्यते। परन्तु वेदानां प्रामाण्यमीश्वरप्रणीतत्वादेव, परमेश्वरासिद्धौ कुतो वेदानां प्रामाण्यं सिद्धं भवेत्। अतः प्रथमतोऽनुमानेनेश्वरः प्रसाध्यते नैयायिकैः। अनन्तरञ्च श्रुतयोऽपि तस्मिन् परमेश्वरे प्रमाणीभूताः भवन्ति।

पूर्वोक्ताभिरनुमाभिः परमेश्वरस्य विश्वकर्तृत्वे सिद्धे सति सर्वज्ञत्वादिकमपि तस्यासिद्धं भवति उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वस्यैव कर्तृत्वात्। अनन्तानामुपादानानां परमाणूनां परिज्ञानाय च सर्वज्ञत्वमस्यावश्यकं भवति। ज्ञाने सत्यपि न हि चिकीर्षां विना कुलालो घटं कर्तुं शक्नोति तथैव विश्वकर्तृत्वसम्पादनाय अनन्तोपादानविषयिणी चिकीर्षाऽपि परमेश्वरेऽवश्यं स्वीकार्या तथा च सर्वविषयिणी-च्छापि स्वीक्रियते। ज्ञानेच्छाभ्यां सत्त्वेऽपि न हि कृतिं विना घटोत्पत्तिः सम्भाव्यते दृष्टानुरूपञ्चात्र कल्पयितव्यम्। तथा चेश्वरे कृतिसत्त्वमावश्यकम्। अनन्तोपादान-विषयकत्वाच्च कृतेरपि सर्वविषयत्वमावश्यकम्। ईश्वरस्य द्रव्यत्वाच्च संख्यादि-सामान्यगुणानां पञ्चानामप्यङ्गीकारोऽस्मिन्। आत्मकल्पत्वाच्च विभुत्वं सिद्धं भवति।

## ईश्वरोऽयं शरीरी वाऽशरीरी वा?

अत्र सञ्जायते शङ्केयं यत् दृष्टानुरूपमेव कर्तृत्वं सम्भवति फलतो विश्वकर्तृत्वमीश्वरे तदैव सम्भाव्यते यदा परमेश्वरे ज्ञानेच्छाकृतीनां समवस्थितिः स्यात्। एवं तर्कयित्वा परमेश्वरस्य सर्वज्ञत्वादिकं कल्पयति नैयायिकः। तत्रास्य तर्कोऽस्ति न हि सम्भवति विश्वकर्तृत्वमसर्वज्ञस्य।[६५] तथैव घटादिकर्ता व्यापारवानसर्वज्ञः शरीरी क्लेशादिभिश्च सहितः दृश्यते दृष्टानुरूपमेव कल्पनीयं भवति वेदस्य संसारस्यापि कर्ता तादृश एव स्यात्, न ह्यशरीरस्य कर्तृत्वं कुत्रचिद् दृश्यतेऽत ईश्वरस्यापि शरीरमभ्युपेयम्। तत्रेश्वरस्य प्रत्यक्षाविषयत्वात् सन्देहो जायते किमस्य शरीरं नित्यमनित्यं वेति? नहि लोके कस्यचिदपि शरीरं नित्यं दृश्यते।[६७] अपि चानुमानेन "ईश्वरशरीरं

उत्पत्तिमद् देहत्वात् चैत्रेदेहवत्" अनेनानित्यत्वं सिद्धं भवति।[६८] अनित्यत्वे स्वीकृते च प्रश्नो भवति यदयमीश्वरः स्वयमेव स्वशरीरं निर्मिमीतेऽन्यो वा कश्चित्? यदि स्वयमेव निर्मिमीते इति पक्षस्तदा साहसमात्रमिदम् निर्युक्तिकत्वाच्चाश्रद्धेयम्। यदि चान्यः कश्चिदीश्वरस्य शरीरं निर्मिमीते तर्हि परमेश्वरानन्त्यमापतति।[६९] क्रमशः तत्तदीश्वरशरीरनिर्माणार्थमीश्वरान्तरस्याभ्युपगन्तव्यत्वात्।

अत्र च नैयायिकः समादधाति-सांसारिकानां जीवानां न हि साक्षात्कारणत्वं सम्भवति। अतः घटादिकं प्रति कुलालादेः सशरीरस्यैव कारणता। परन्तु न हि शरीरी कुलालोऽपि ज्ञानेच्छाकृतिसमवधानं विना घटादिकं जनयितुं योग्यतामावहति अतः कृत्यादिकस्यैव कारणता सर्वत्राभ्युपेया न तु शरीरस्यान्यथासिद्धत्वात्। तथा च कृत्यादिकस्य क्वचित् साक्षात्कारणतायाः बाधात् शरीरद्वारा कृत्यादिकस्य कारणत्वं स्वीक्रियते यथा घटादौ कुलालादिनिष्ठस्य कृत्यादेः, ईश्वरस्य तु शक्तत्वात् सर्वविषयकत्वाच्च साक्षादपि परमेश्वरकृत्यादेः कारणत्वं सम्भवति। अतः परमेश्वरस्य शरीरकल्पनमनावश्यकमप्रामाणिकञ्च।[७०]

अपि च, भोगायतनस्यैव चेष्टेन्द्रियाश्रयस्य शरीरत्वं स्वीक्रियते। नास्ति परमेश्वरस्य कश्चिद्भोगः सुखदुःखादिकारणीभूतादृष्टाभावात्। यदि च परमेश्वरस्य कश्चिद्भोगो भवेत्तदा भोगायतनं शरीरमस्य स्वीकार्यम् परन्तु परमेश्वरस्य नहि कश्चिद्भोगोऽस्ति।[७१] अतो नाङ्गीकरणीयं परमेश्वरस्य शरीरम्। अन्यदपि, चेतनाधिष्ठितं शरीरं मल, मूत्र, भ्रम, प्रमाद, विप्रलिप्सा, करणापाटवादिभिर्दोषैः कामक्रोधादिभिश्च सम्बन्धितमवश्यं भवति। परमेश्वरशरीरेऽप्येतेषामङ्गीकार आवश्यको भविष्यति। एतैः दोषैः विरहितस्य शरीरस्य सत्त्वे नास्ति किञ्चित् प्रमाणम्। ईश्वरीयशरीरस्यै-तादृशदोषदुष्टस्य स्वीकारे तस्येश्वरत्वं खण्डितं भवति।[७२] अपि चेश्वरशरीराङ्गीकारे प्रश्नो भवति किमिदमीश्वरीयं शरीरं निरवयवं सावयवं वा? यदि निरवयवमिति पक्षस्तदा तस्य भोगायतनत्वचेष्टाश्रयत्वविरहात् शरीरत्वं न सम्भवति। भोगायतनस्य चेष्टाश्रयस्यैव शरीरत्वाङ्गीकारात्, यदि चेश्वरशरीरं सावयवं तदाऽनित्यत्वप्रसङ्गात् तस्य कर्ता कः इति प्रश्नो भवति।[७३] अत ईश्वरस्य शरीरं नाङ्गीक्रियते नैयायिकैः।

उदयनाचार्यास्तु परमाणूनामेवेश्वरशरीरत्वं स्वीकुर्वन्ति। परन्तु परमाणूनामी-श्वरशरीरत्वं केवलं साक्षाच्चेतनाधिष्ठितत्वादेव।[७४] न हि परमाणूनां भोगायतनत्वं विद्यते नवेन्द्रियाश्रयत्वमस्ति। नानापरमाणूनां शरीरत्वकल्पनापेक्षया कुतो नैकस्या तिरिक्तस्य शरीरस्य स्वीकारः अस्यापि समाधानं दीयते यत् चेष्टात्वेन कार्यं प्रति कारणत्वं स्वीक्रियते एकस्य महतः नित्यस्य शरीरस्य स्वीकारे पाषाणादिषु महतः

शरीरस्य प्रवेशासम्भवः। ततश्च पाषाणान्तर्वर्तिभेकशरीरस्योत्पादकत्वमीश्वरस्य शरीरद्वारा न सम्भवति। अणुशरीरे स्वीकृते तस्यैकदेशस्यैकस्मिन्नेव काले परस्परं दूरं संस्थितयोः देशयोः जायमानानि कार्याणि प्रतीश्वरीयशरीरस्य तत्रासत्त्वात्कारणत्वं न स्यात्।[७५] अतः परमाणूनामेवेश्वरशरीरत्वं स्वीकार्यम। सिद्धान्ततस्तु क्रियात्वेनैव कार्यं प्रति कारणत्वम् तथा चेश्वरशरीराङ्गीकारो नैव क्रियतेऽन्यैः नैयायिकैः।

## ईश्वरस्य जगन्निर्मापयतः प्रयोजनम्

सर्वोऽपि किञ्चित् प्रयोजनमधिकृत्यैव प्रवर्तते। जगन्निर्मापयता परमेश्वरेणापि प्रयोजनेन भवितव्यम्। किं चास्य जगन्निर्मापयतः प्रयोजनम्? लोके हि येऽपि कर्तारो भवन्ति ते समे किञ्चित् प्रयोजनं समाश्रित्यैव प्रवर्तन्ते। यदिदं हास्यामि, इदं प्राप्स्यामि वा, परमेश्वरस्य तु न हि किञ्चिद्धेयमस्ति दुःखकारणस्यैव हेयत्वात् परमेश्वरस्य च दुःखाभावात्, न हि किञ्चिदुपादेयमस्ति सुखकारणस्योपादेयत्वात् परमेश्वरस्य च सुखाभावात् वशित्वादस्य।[७६] लोके सुखप्राप्तिदुःखपरिहारार्थैव प्रवृत्तिर्दृश्यते परमेश्वरेण तु सर्वोऽप्यानन्दोऽवाप्तो न हि किञ्चित् प्राप्तव्यमस्ति रागादिरहितोऽप्ययं न तावत् बुद्ध्यते किमर्थं सृजति जगदिदम्?[७७] तत्रानेकानि समाधानानि प्रदीयन्ते दार्शनिकैः-

> **"भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।**
> **देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा।।"**[७८]

न्यायवार्तिककारोऽत्रानेकान् विचारान् समुपस्थापयति तत्र क्रीडार्थं सृजति भगवान् जगदिदमिति प्रथमो विचारः। परन्तु तर्कबुद्ध्या विचारणे मतमिदं नैव समीचीनतां भजते। यतो हि क्रीडा उद्वेजितानां रत्यर्थिनां जनानां मनोरञ्जनाय भवति परन्तु परेश्वरो नोद्वेजितः, न च रत्यर्थी दुःखरहितत्वात्। अतः क्रीडार्थं सृजतीति समाधानं नैव रोचते।[७९] जगतो वैश्वरूप्य ख्यापनमेव प्रयोजनम्। नैतदपि साधु, यतोहि किञ्चिद्धानाय किञ्चिदुपादानाय वा प्रवृत्तिर्भवति जगतो वैश्वरूप्यख्यापनेन न हि किञ्चिद्धीयते, न वा किञ्चिदुपादीयते। अतौ नैष पक्षोऽपि साधु।[८०] एवं विचार्योद्योतकरः सिद्धान्तयति यदस्य स्वभाव एवैषः, स्वाभाव्यादेव सर्गे प्रवर्तते परमेश्वरः।[८१]

तात्पर्यटीकाकारो वाचस्पतिमिश्रः करुणया जगत्सृजतीश्वर इति मनुते। करुणया सर्गे स्वीकृते प्रथमं पूर्वपक्षविधया दोषान् दर्शयति यत् यद्युच्यते करुणया सृजति भगवान् तर्हि सुखिनमेव सृजेन्न दुःखिनम्। यद्युच्यते जीवात्मनां धर्माधर्मसहकारेण

सृजति भगवान्, अतो निर्माणवैचित्र्यं दृश्यते; कश्चित् सुखी, कश्चिच्च सुखीति। नैतदपि साधु, परमेश्वरानधिष्ठितस्यैवादृष्टस्य सुखदुःखप्रदाने सामर्थ्यं कारुणिकश्चेदयमीश्वरस्तर्हि न तदधिष्ठानं कुर्यात्। अतो नास्य करुणया प्रवृत्तिः।[८२] अनन्तरञ्च सिद्धान्तयति यदं परमेश्वरो वस्तुतः करुणयैव प्रवर्तते। कारुणिकोऽप्ययमात्मान्तरैरतिशयितमहिमाऽपि सन् वस्तूनां सामर्थ्यमन्यथयितुं न पारयति।[८३] यद्यप्यस्य स्वभावः परानुग्रहः परन्तु वस्तुस्वभावानुरोधेन कर्मविपाकानुरूपं जगद्वैचित्र्यमयं विदधाति। दृष्कृते पुंसां प्रवृत्तिं नैव विहन्ति।[८४] अतः कारुण्येन प्रवृत्तोऽपि विचित्रं जगदिदं रचयतीश्वरः। उदयनाचार्यः न्यायकुसुमाञ्जलौ-

**"कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्।**
**हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति॥"**[८५]

इति लिखति। प्रतिभात्येतेन यदुदयनाचार्यः क्रीडार्थमिमां सृष्टिं मनुते। परन्त्वात्मतत्वविवेके ऊहां करोति यदयमीश्वरः स्वार्थं प्रवर्तते चेत्तदाऽस्यानीश्वरत्वमापन्नं भवति परमेश्वरे जिहापयिषायाः आप्तुमिच्छायाश्चाभावात् न स्वार्थं प्रवृत्तिः युज्यते। स्वार्थं प्रवृत्तौ जिहापयिषायाः आप्तुमिच्छायाः वा सत्त्वमावश्यकम्। तथा स्वीकारे चानीश्वरत्वमापद्यते। यदि चायं परार्थं प्रवर्तते इति पक्षस्तदाऽदुखमेव जगत् निर्मापयेत्। यदि चैवमेव प्रवर्ततेऽर्थात् न वा स्वार्थं न वा परार्थं तर्हि कीदृशमस्य चैतन्यं यदयं प्रयोजनं विनैव प्रवर्तते। न हि कस्यचिदपि चेतनस्य कस्मिंश्चिदपि कार्ये प्रयोजनं विना प्रवृत्तिर्भवति। तथाचाचैतन्यमस्य प्राप्तं भवति।[८६] अनन्तरञ्चात्र सिद्धान्तयति यदयं परमेश्वरः करुणयैव जगत् सर्जने प्रवर्तते। सृष्टेर्दुःखमयत्वात् कारुण्यस्यापवादो नैव कर्तुं शक्यते। जनको बालकं सत्कर्मणि नियोजनाय ताडयति, अध्यापकश्च शिष्यमध्यापयन् दण्डयति, चिकित्सकश्च रोगिणः शल्यक्रियां करोति। एतैश्च दुःखं विधीयते। किं दुःखसृजनात् जनकाध्यापकचिकित्सकानां कारुण्यं हीयते? एते यद्दुःखं सृजन्ति तत् करुणयैव सृजन्ति नैतेषां कश्चिद्द्वेषो भवति। अतः जनकाध्यापकचिकित्सकादिषु व्यभिचारात् दुःखमयसृष्ट्या कारुण्यं नास्तीश्वरस्यैवं खण्डनं नैव युज्यते।[८७] यथा जनकः हितबुद्ध्यैव यदयं मदीयो बालः सत्कर्मणि प्रयुक्तः सन् सुखमाप्स्यतीति, शिक्षकोऽपि हितबुद्ध्यैव यदयं छात्रो विद्वान् भवेत् चिकित्सकश्च हितबुद्ध्यैव यदयं नीरोगो भवेत् इति दुखं सृजति, तथैवेश्वरोऽपि जीनानां हितुद्ध्या यदिमे जीवा पूर्वकृतशुभाशुभकर्मफलोपभोगेनादृष्टक्षयद्वारा तत्त्वज्ञानमवाप्यापवर्गपुरद्वारप्रवेशं प्राप्नुवन्तु इति दुःखमयमपि जगत् सृजति। इति कारण्यादेव सृजति भगवान् जगदिदम्। न्यायकुसुमाञ्जलौ

"कारं कार" मित्यत्र क्रीडति इत्यनेन परिश्रमं विनैव जगदिदं सृजति भगवानित्येव द्योत्यते।

न्यायमञ्जरीकाराणां जयन्तभट्टानामप्येष एवाभिप्रायोऽस्ति। एष आशयश्च तैः विस्तरेण प्रश्नोत्तरमुखेन प्रतिपाद्यते। करुणया सृजति जगदिदमीश्वर इत्यस्मिन् सिद्धान्ते जयन्तभट्टः प्रश्नं करोति यत् सर्गादौ प्रलयावस्थायां जीवात्मनां दुःखोनाननुविद्धतया मुक्तात्मसादृश्यात् करुणास्पदत्वं नास्ति।[८८] अतः करुणया जगतः सृजनं नोचितं प्रतिभाति। करुणया च जगतः सृजने दुःखानुविद्धस्य जगतः सृजनं नोचतम्।[८९] उत्तरमुखेन च समादधाति यत् स्वभाव एवैष ईश्वरस्य यत् कदाचित् सृजति कदाचिच्च संहरति। अथवा करुणयैवेश्वरः सर्गसंहारावारभते।[९०] करुणास्पदत्वं कुतो भवेत् सर्गादौ प्रलयावस्थायां जीवात्मनां मुक्तात्मसादृश्यात्? अस्य चेदं समाधानम्-यदयं संसारोऽनादिः शुभाशुभसंस्कारैरनुविद्धाश्च जीवात्मानोऽपवर्गमलभमानाः सर्गादावपि करुणास्पदा एव। अपवर्गप्राप्तयेऽनुपभुक्तानां कर्मणां प्रक्षय आवश्यकः स च न कर्मफलोपभोगं विना सम्भवति। भोगश्च न हि शरीरादिसर्गं विनाऽतो दयालुरेष भगवान् सर्गमारभते। उपभोगप्रबन्धेन च परिश्रान्तानां जीवानां मध्ये मध्ये विश्रामाय च प्रलयमारभते। सर्वमपि कृपयैतत् करोति। नास्तीश्वरस्य कश्चित् स्वार्थः। अतः कारुण्यात् सर्गप्रलयौ परमेश्वर आरभत इत्युचितमेव।[९१]

अत्र भासर्वज्ञस्य मतमपि स्पृहणीयं विद्यते। भासर्वज्ञेन त्रयः पक्षाः उपस्थाप्यन्ते (१) स्वभावत एव सृजति (२) करुणया वा (३) विश्वसृष्टिरेव वा स्वार्थः परमेश्वरस्य। स्वभावतः सृजति करुणया वा सृजति एतयोः पक्षयोः भासर्वज्ञः पूर्वोक्तं प्रपञ्चजातमेव वर्णयति किन्तु विश्वसृष्टिरेव स्वार्थ इत्यत्र विशेषः। अयमाशयो भासर्वज्ञस्य-यद्ययमीश्वरः स्वार्थमपि विश्वसृजने प्रवर्तत इति स्वीक्रियते तर्हि नात्रापि कश्चन दोषः। स्वार्थश्च परमेश्वरस्य विश्वसृष्टिरेव। जगदुत्पत्तेः कथं प्रयोजनत्वम्? अत्रोत्तरं दातुमिच्छन् प्रश्नमिमं करोति सुखप्राप्तिदुःखपरिहारयोः कथं प्रयोजनत्वम्? यद्युच्यते सुखप्राप्तिदुःखपरिहारार्थं पुरुषस्य प्रवर्तमानत्वात् इष्टत्वाच्च तयोः प्रयोजनत्वं तर्हि भगवतोऽपि जगदुपत्त्यर्थं प्रवर्तमानत्वात् इष्टत्वाच्च कथं न स्यात् प्रयोजनत्वम्?[९२] यदि प्रश्नः क्रियते किमर्थं जगदुत्पादनमीश्वरस्येष्टम्? तदापि प्रश्नो भवति सुखं पुरुषस्य किमर्थमिष्टम्? नास्यापि प्रश्नस्योत्तरं दातुं शक्यतेऽतो यमर्थमधिकृत्य प्रवर्तते तत्तस्येष्टत्वात् प्रयोजनमित्येव स्वीकार्यम्। जगदुत्पत्त्यर्थं परमेश्वरस्य प्रवर्तमानत्वात् तस्यापि प्रयोजनत्वं सम्भवति।[९३] इदानीं प्रश्नो भवति यद्ययमीश्वरः

स्वार्थं प्रवर्तते तदाऽनाप्तकामत्वादनीश्वरत्वमापद्यते? तदोत्तरयति भासर्वज्ञो यत् यस्य यादृशमभिप्रेतं न सिद्ध्यति स अनाप्तकाम इत्युच्यते। परमेश्वरस्य तु यदभिप्रेतं भवति तत् सर्वदैव सिद्धं भवत्यतो नानाप्तकामत्वशङ्काऽपि।[९४]

एवं रीत्यात्र चत्वारि मतानि समुपस्थितानि भवन्ति (१) क्रीडार्थं सृष्टिः (२) स्वाभाव्यात् (३) करुणया (४) जगदुत्पत्त्यात्मकं स्वार्थमधिकृत्य वा। अत्रैतेषु विकल्पेषु करुणया जगदिदं सृजति परमेश्वर इत्येव साधु मन्यामहे। क्रीडायां सृजनं खण्डितमेवोद्योतकरादिभिः। स्वाभाव्यात् जगत्सृजनाङ्गीकारेऽपि नैव सप्रयोजनत्वं लब्धं भवति। उदयनः स्वाभाव्यात् प्रवृत्तिरिति मतमेव मनसि निधाय "एवमेव प्रवत्तावचैतन्यम्"[९५] इति वक्ति। स्वभावतः प्रवृत्तिर्नैव चेतनस्य युज्यते। भासर्वज्ञमतं यच्च जगदुत्पत्तेरेव प्रयोजनत्वं प्रतिपादितं न तदपि साधुतामर्हति। यतो हि कस्या अपि स्वार्थं प्रवृत्तेः एकं मुख्यं प्रयोजनं भवति, अपरञ्च गौणमिति मुख्यं प्रयोजनं सुखप्राप्तिदुःखपरिहारावेव गौणं प्रयोजनञ्च सुखप्राप्त्युपायाः, दुःखपरिहारोपायाश्च भवन्ति।[९६] अतो यदीश्वरः स्वार्थं प्रवर्तते तर्हि तस्यापि प्रवृत्तेः सुखप्राप्तिदुःखपरिहारावेव प्रयोजनीभवितुं शक्नुतः। तच्च नैव सम्भवति परमेश्वरस्य सुखदुःखाभावात्। अपि चैवं कस्यचिदपि कार्यस्य निष्फलता (निष्प्रयोजनता) न स्यात् यः यमर्थमधिकृत्य प्रवर्तते तत्तस्येष्टत्वात् प्रयोजनं भविष्यति। अतः करुणयैव प्रवर्तते ईश्वरः सर्गे इदमेवाङ्गीकार्यम्।

**निष्कर्षः**

न्यायदर्शनाभिमतोऽयमीश्वरो जीवात्मसजातीयः नित्यज्ञान, नित्येच्छा, नित्य-कृतिविशिष्टः संख्यापरिमाणपृथक्त्वसंयोगविभागाख्यैः पञ्चसामान्यगुणैश्च विशिष्टः। जीवात्मसजातीयतयाऽस्य विभुत्वं स्वीक्रियते। ईश्वरस्य जीवात्मसाजात्येन परवर्तिभिर्नैयायिकैरात्मनो द्वैविध्यं प्रदर्श्यते।[९७] तस्मिन्नीश्वरे संख्या त्वेकत्वात्मिका। आत्मत्वादीश्वरस्य परिमाणं परममहदाख्यम्। पृथक्त्वमप्येकमेव। अस्य ज्ञानं नित्यमेकं प्रत्यक्षात्मकं सर्वविषयकञ्च। वस्तुतः परमेश्वरीयज्ञानं प्रत्यक्षानुमित्युपमितिशाब्देभ्यो विलक्षणमेव तथाहि प्रत्यक्षात्मकं ज्ञानमिन्द्रियार्थसन्निकर्षजन्यम् भवति, अनुमित्यात्मकं ज्ञानं व्याप्तिज्ञानजन्यं भवति, उपमितिः सादृश्यज्ञानजन्या भवति, शाब्दबोधश्च पदज्ञानजन्यो भवति ईश्वरीयज्ञानस्य चाजन्यत्वादेभ्यो वैलक्षण्यम्। तस्य च नित्यत्वात् न हि केनचिदपि जन्यत्वमस्ति। परन्तु ज्ञानाकरणकत्वात्मकप्रत्यक्षसाधर्म्यादीश्वरी-यज्ञानस्य लाक्षणिकः प्रत्यक्षत्वव्यवहारो भवति।[९८] प्रत्यक्षात्मकं ज्ञानं प्रति न हि कस्यचिदपि ज्ञानान्तरस्य करणता सभवति किन्त्विन्द्रियार्थसन्निकर्षस्य करणता

भवति। तथैव परमेश्वरीये ज्ञानेऽपि ज्ञानस्य करणता न सम्भवति। एतदेव प्रत्यक्षसाधर्म्यं परमेश्वरीये ज्ञाने। ईश्वरस्य चक्षुराद्यभवात् न हि वास्तविकं प्रत्यक्षत्वं तदीयज्ञानस्य सम्भवति।[११] अयमीश्वरोऽशरीरी, जगतः सर्जकः। जीवकृतं धर्माधर्मात्मकं कर्माय-मीश्वरोऽधितिष्ठति। वेदांश्च प्रतिकल्पमयं रचयति।

## पादटिप्पणी

१. गद्य० न्या० कुसु०, पृ० ११
२. न्या० कु०, पृ० १७
३. ईश्वरः कारणम् पुरुषकर्माफल्यदर्शनात् (४/१/१९) न, पुरुषकर्माभावेऽपि फलानिष्पत्तेः (४/१/२०) तत्कारितत्वादहेतुः (४/१/२१) न्यायसूत्र
४. गार्वेः द फिलासफी आफ एंशियन्ट इन्डिया, पृ० २३, उद्धृत भारतीयदर्शन (राधाकृष्णन्), पृ० १६४
५. ओरिजनल संस्कृत टैक्ट्स खण्ड ३, पृ० १३३ उद्धृत तत्रैव
६. न्या० सू० १/१/१
७. तदेव १/१/२
८. तदेव १/१/१०
९. तदेव २/१/६८
१०. निरीश्वरवाद, याकूब मसीह, पृ० ५४-५८
११. सा० त० कौ०, पृ० १७६
१२. न्या० सू० २/१/५७
१३. न्या० भा० खद्योत व्याख्या, पृ० ६८०
१४. गुणविशिष्टमात्मान्तरमीश्वरः। तस्यात्मकल्पात् कल्पान्तरानुपपत्तिः। अधर्ममिथ्याज्ञान-प्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधि-फलमष्टविधैश्वर्यम्। सङ्कल्पानुविधायी चास्य धर्मः। प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्तयति, एकञ्च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमी-श्वरस्य स्वकृतकर्मफलं वेदितव्यम्। आप्तकल्पश्चायं यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम्, न वात्मकल्पादन्यः कल्पः सम्भवति न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम्। आगमाच्च खलु द्रष्टा, बोद्धा सर्वज्ञाता इति।
न्या० भा० ४/१/२१
१५. बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्यत उपपादयितुम्। न्या० भा० ४/१/२१

१६. यत् तदीश्वरस्यैश्वर्यं किं तन्नित्यमनित्यमिति? यद्यनित्यं तस्य कारणं वाच्यं यस्य चानित्यमैश्वर्यं तस्य कारणभेदो भवत्यणिमादेः, एवमन्येषामपीत्यनेनानीश्वरः प्रसज्यत इति। न्या०वा० ता० टी० (न्या० द०), पृ० ९५०

१७. तदेव

१८. तत ईश्वरस्यैश्वर्यं स्वकृतकर्मफलं वेदितव्यमित्युक्तं भाष्यमिति भावः। न्या०वा०ता०टी०, पृ० ९५०

१९. सुखं तु जगतामेव काम्यं धर्मेण जायते।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्।। कारिकावली १४५ का०

२०. न चेश्वरे धर्मोऽस्तीत्यचोद्यमेतत्। न्या० वा०, पृ० ९५०

२१. अभ्युपेत्येश्वरधर्ममेतदुक्तं भाष्यकृता। परमार्थतस्तु नेश्वरस्य धर्मसद्भावे प्रमाणमस्ति। न्या० वा०, ता० टी०, पृ० ९५१

२२. यथा बुद्धिमत्तायामीश्वरस्य प्रमाणसद्भावो न चैवं धर्मादिनित्यत्वे प्रमाणमस्ति, न चाप्रामाणिकं प्रतिपत्तुं शक्यते। न्या० वा०, पृ० ९५१

२३. अथ बुद्धिमत्तयेश्वरस्य शरीरयोगमपि प्रतिपद्यते? तेनापि प्रतिपद्यमानेन शरीरादयो नित्या अनित्या वाऽवश्यमेषितव्याः यद्यनित्या धर्माधर्मसद्भावोऽभ्युपेयः तदभ्युपगमे च तत्तन्त्रत्वादीश्वरो नेश्वरः स्यात्। अथ नित्यान् शरीरादीन् कल्पयसि एवमपि दृष्टविपरीतं कल्पितं भवति, दृष्टविपर्ययं च प्रतिपद्यमानेन बुद्धेर्नित्यत्वं प्रतिपत्तव्यम्। न्या० वा०, पृ० ९५१-९५२

२४. अथास्य बुद्धिनित्यत्वे किं प्रमाणम्? नन्विदमेव बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति। बुद्धिमत्तायामेतत् साधनं सा पुनर्नित्येति कुतः? प्रत्यर्थनियमासम्भवात् ये खलु प्रत्यर्थनिताः बुद्धिभेदास्ते शरीरादिकारणसन्निधाने सति भवन्ति न त्विमे प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात् यथा स्थावरभेदस्यानेकस्य युगपदुत्पाद इति। न्या० वा०, पृ० ९५१

२५. सा च बुद्धिः सर्वार्थाऽतीतानागतवर्तमानविषया प्रत्यक्षा। न्या० वा०, पृ० ९५२

२६. ज्ञाननित्यत्वाच्च न संस्कारः नित्यं विज्ञानमीश्वरस्येत न तत्र संस्कारो विद्यते इति।

२७. तत्र हि नित्या बुद्धिः संख्यादयश्च सामान्यगुणाः षड्गुणा आकाशवदीश्वरे इति।
न्या० वा०, पृ० ९५१

२८. संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणाः। तदेव

२९. ते च गुणाः संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एवेति वार्तिकम्। तत्र तात्पर्यम्-बुद्धिवदिच्छाप्रयत्नावप्यस्य नित्यौ तत्कर्तृत्वसाधनान्तर्गतौ मन्तव्यौ। ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात् कर्तृत्वस्य। खद्योत, पृ० ६८३

३०. न्या० क०, पृ० १४२

३१. अथ किमयं बद्धो मुक्त इति? न बद्धो दुःखाभावादेव, अबद्धत्वान्न मुक्त इति बन्धनवान् मुच्यत इति। न च भगवति बन्धनमस्ति इति अतो न मुक्त इति।
न्या० वा०, पृ० ९५२

३२. न दुःखमधर्मस्याभावात्। अत एव न वैराग्यमिति-दुःखाभावान्न विरज्यत इति। अत एव न द्वेषो दुःखाभावादिति। इच्छा तु विद्यतेऽक्लिष्टा व्याहता सर्वार्थेषु यथा बुद्धिरिति। तदेव

३३. दिक्कालौ नेश्वरादतिरिच्येते मानाभावात्। तत्तन्निमित्तविशेषसमवधानवशादीश्वरादेव तत्तत्कार्यविशेषाणामुपपत्तेः। परेषामेकैकस्माद्दिगादेरिव विलक्षणानां प्राच्यादि-व्यवहाराणाम्। प० त० नि०, पृ० ३

३४. शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वम्।

प० त० नि०, पृ० ५

३५. अस्मदादेश्च शब्दसमवायिकारणत्वे अहं सुखादिमानितिवदहं शब्दवानिति प्रतीत्यापत्तेः। तदेव

३६. शब्दस्तज्जन्यस्तददृष्टजन्यत्वात् सुखादिवदिति पुनरप्रयोजकम्। अदृष्टस्य शब्द-जनकत्वेऽपि तदाश्रयस्य जनकत्वे मानाभावात्। प० त० नि०, पृ० ५

३७. श्रोत्रमपि कर्णशष्कुल्यवच्छिन्न ईश्वर एव। यथा परेषां तथाविधमाकाशम्।-तदेव।

३८. परापरत्वबुद्धिं प्रति परत्वापरत्वे निमित्ते तत्र दिक्पिण्डसंयोगस्तत्र दिगिति क्रमेण परम्परया दिशस्तद्बुद्धौ निमित्तत्वं बोध्यम्। दिनकरी, पृ० २०२

३९. ज्येष्ठे परत्वप्रत्ययः कनिष्ठेऽपरत्वप्रत्ययः स च परत्वापरत्वगुणविशेषाधीनः परत्वापरत्वे च सासमवायिकारणके भावकार्यत्वात्, असमवायिकारणं च तयोः कालपिण्डसंयोग एवेति परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया कालसिद्धिरिति भावः।

दिनकरी, पृ० १९८-१९९

४०. कारिकावली मुक्तावली ४४ कारिका

४१. तदेव १७ कारिका

४२. ईश्वरस्य परिमाणवत्त्वे मानाभावः, द्रव्यत्वस्य त्रुटित्वादेरिव परिमाणस्यासाधकत्वात्। प० त० नि०, पृ० १२

४३. जीवात्मनो महत्त्वं प्रत्यक्षसिद्धमित्याशयः। तदनभ्युपगमे तदपि तद्गतिकमेवेति बोध्यम्। प० त० नि०, रघुदेव न्या० टीका, पृ० ८४

४४. अत्र नव्याः ईश्वरस्य परिमाणवत्त्वे प्रमाणाभावः, न च द्रव्यत्वेन तदनुमानमिति वाच्यम्। अप्रयोजकत्वात्, ईश्वरे द्रव्यत्वसत्त्वे मानाभावाच्च। अत एव तत्र संयोग-विभागयोः सत्त्वेऽपि मानाभावः, पृथक्त्वस्य च गुणत्वमेव निरस्तम्।

दिनकरी, पृ० १४०

४५. प० त० नि०, रघुदेवन्यायालङ्कार टीका, पृ० १

४६. अत्र नित्यसुखज्ञानवते इति नित्यसुखज्ञानात्मकायेति व्याख्यानं वैदान्तिकानामेव शोभते न तु नैयायिकानाम् तैर्नित्यसुखस्यात्मनि ज्ञानसुखाभेदस्य चानभ्युपगमादतस्तन्मते अखण्डो दुःखासम्भिन्नो आनन्दो यस्मात् सोऽखण्डानन्दः एवंभूत उपासनारूपो बोधो

यस्येति व्याख्येयम्। अथवा ग्रन्थकृता नित्यसुखाभिव्यक्तिर्मुक्तिरिति मतस्य परिष्कृतत्वात्तदवलम्ब्यैवैतदभिहितम्। तथा चाखण्डस्य नित्यस्य आनन्दस्य बोधः साक्षात्कारो यस्मादिति व्युत्पत्त्या भगवत उपासनाविषयताया मुक्तिप्रयोजकत्वमेवाखण्डेत्यादिना प्रतिपादितम्। अनुमितिगादाधरी, पृ० ३

४७. अखण्डौ नित्यौ आनन्दबोधौ यस्य तस्मै। न च सुखत्वावच्छेदेन पुण्यजनकतया नित्यसुखासम्भवः। श्रुतिवाक्येभ्यो नित्यसुखसिद्धौ सुखत्वावान्तरजातेरेव पुण्यजनकतावच्छेदकत्वसम्भवात्। जागदीशी, अनु० प्र०, पृ० २

४८. नित्यं विज्ञानमानन्दं ब्रह्मेति आनन्दं ब्राह्मणो विद्वान्न बिभेति कुतश्चनेत्यादिश्रुतिभिरीश्वरे नित्यसुखसिद्धेरिति भावः। रामरुद्री, पृ० १४१

४९. आनन्दमिति दुःखाभावेऽप्युपचर्यते भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्।
न्या० सि० मु० ४९ कारिका।

५०. न्या० सू० ४/१/१९

५१. न्या० सू० ४/१/१९ भाष्य

५२. प्रधानपरमाणुकर्माणि प्राक्प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्तेऽचेतनत्वात् वास्यादिवदिति-यथा वास्यादि बुद्धिमता तक्ष्णाऽधिष्ठितमचेतनत्वात् प्रवर्तते, तथा प्रधानपरमाणुकर्माणि अचेतनानि प्रवर्तन्ते तस्मात्तान्यपि बुद्धिमत्कारणाधिष्ठितानीति। न्या० वा०, पृ० ९४५

५३. परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम्। तदेव, पृ० ९४६

५४. धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वात् वास्यादिवत्। तदेव, पृ० ९४७

५५. बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु महाभूतानि वाय्वन्तानि प्रवर्तन्तेऽचेतनत्वाद्वास्यादिवत्। न्या० वा०, पृ० ९५७

५६. बुद्धिमत्कारणाधिष्ठितं महाभूतादि व्यक्तं सुखदुःखादिनिमित्तं भवति तुर्यादिवत्।
न्या० वा०, पृ० ९४७

५७. तथा च विवादाध्यासितास्तनुतरुमहीधरादयः उपादानाभिज्ञकर्तृका उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा, यदुत्पत्तिमदचेतनोपादानकं वा तत्सर्वमुपादानाभिज्ञपूर्वकं यथा प्रासादादि तथा च विवादाध्यासितास्तनुतरुमहीधरादयः, तस्मात्तथेति।
ता० टी०, पृ० ९५३

५८. विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा।
दृष्टलाभफला नाऽपि विप्रलम्भोऽपि नेदृशः।। न्या० कु०, का० ८ (प्र० स्त०)

५९. चिरध्वस्तं फलायालं न कर्मातिशयं विना।। तदेव, ९ (प्र० स्त०)

६०. धर्माधर्मात्मकालौकिकपरलोकसाधनं प्रति विप्रतिपन्नं प्रति तत्साधनं सिद्धे च तस्मिन् तदधिष्ठातृतया ईश्वरसिद्धिः अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात्। न्या० कु०, हरि० प्र० स्त०, पृ० २६

६१. कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वजिदव्ययः।। न्या० कु०, प्र० स्त० का० १

६२. संख्यातः परिमाणाच्च प्रचयादपि जायते।
अनित्यम् --------------।। कारिकावली का० १११

६३. परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्। न्या०सि०मु० २५का०

६४. दीधितिकृतस्तु सहस्रतन्तुकपटे एकतन्तुविगमेन नष्टे एकोनसहस्रतन्तुक पटस्यानुभूयमानत्वेन तस्य सहस्रतन्तुकपटभिन्नत्वेन तत्र कुविकस्य कर्तृत्वासम्भवात् ईश्वर एव कर्ता सिद्ध्यतीत्याहुः। न्या० सि० त०, पृ० २९-३०

६५. न चासर्वज्ञस्य विश्वकर्तृत्वं सम्भवति। आ० त० वि०, नारायणीटीका, पृ० ३७७

६६. व्यापारवानसर्वज्ञः शरीरी क्लेशसंकुलः।
घटस्य यादृशः कर्ता तादृगेव भवेद्ध्रुवः।।
अशरीरस्य कर्तृत्वं दृश्यते न हि कस्यचित्।। न्या० म०, पृ० १७६

६७. अथ नित्यान् शरीरादीन् कल्पयसि एवमपि दृष्टविपरीतं कल्पितं भवति।
न्या० वा०, पृ० ९५१

६८. देहोऽप्युत्पत्तिमानस्य देहत्वाच्चैत्रदेहवत्।। न्या० म०, पृ० १७६

६९. स्वयं निजशरीरस्य निर्माणमिति साहसम्।
कर्त्रन्तरकृते तस्मिन्नीश्वरानन्त्यमापतेत्।। न्या० म०, पृ० १७६

७०. कृत्यादिकं विना शरीरस्य जनकत्वासम्भवात् कृत्यादिकमेव सर्वत्र कारणम्, न तु शरीरमपि गौरवात्। तथा च तस्य क्वचित् साक्षात्कारणत्वबाधेन शरीरद्वारा कल्प्यते, ईश्वरस्य तु शक्तत्वात् सर्वविषयकत्वाच्च स्वत एव जनकत्वसम्भवेन शरीरकल्पनमप्रामाणिकमेव। न्या० सि० त०, पृ० २९

७१. यदि हीश्वरस्य भोगो भवेत् तदा भोगायतनतया शरीरमिष्येत। न वास्य भोगोऽस्ति। न्या० अलं०, पृ० १३८

७२. एवञ्च शरीरस्वीकारे ईश्वरस्य सर्वदोषप्रसक्तावीश्वरत्वं भज्येत।
न्या० सि० त०, पृ० २९

७३. तदेव।

७४. तथा हि साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वं यत् प्रसज्यते? यदि साक्षात् प्रयत्नवदधिष्ठेयत्वं तदिष्यत एव। न च ततोऽन्यत् प्रसञ्जकमपि। गद्य० न्या० कु०, पृ० ६१३

७५. न च नानापरमाणूनां शरीरत्वकल्पने गौरवात् लाघवेन तस्यातिरिक्तत्वसिद्धिरिति वाच्यम्, तच्छरीरस्य महत्त्वेऽभुग्नस्य तस्य पाषाणादौ प्रवेशासम्भवेन पाषाणान्तर्वर्ति भेकशरीरोत्पादकतानुपपत्तेः। अणुत्वे व दूरस्थकार्योत्पादकत्वानुपपत्तेरित्यलं पल्लवैरिति। दिनकरी, पृ० ३७

७६. लोके हि ये कर्तारो भवन्ति ते किञ्चिदुद्दिश्य प्रवर्तन्ते इदमाप्स्यामि, इदं हास्यामि वेति न पुनरीश्वरस्य हेयमस्ति दुःखाभावात्, नोपादेयं वशित्वात्।
न्या० वा०, पृ० ९४९

७७. अवाप्तसर्वानन्दस्य रागादिरहितात्मनः।
जगदारम्भमाणस्य न विद्मः किं प्रयोजनम्।। न्या० मं०, पृ० १७६

७८. मा० का० १/९

७९. नन्वेतदयुक्तम् क्रीडा हि नाम रत्यर्थं भवति क्रीडया रतिमविन्दताम्, न च रत्यर्थी भगवान् दुःखाभावादिति दुःखिनश्च सुखोपभोगार्थं क्रीडन्ति। न्या० वा०, पृ० ९४९

८०. न हि विभूतिख्यापनेन कश्चिदतिशयोलभ्यते न चास्याख्यापनेन किञ्चिद्धीयत इति। तदेव।

८१. किमर्थं तर्हि करोति? स्वाभाव्यात् प्रवर्तत इत्यदुष्टम्। तदेव, पृ० ९४९-५०

८२. ता० टी०, पृ० ९४४-९४५

८३. कारुणिकोऽप्ययमात्मान्तरातिशयितमहिमापि न वस्तूनां सामर्थ्यमन्यथाकर्तुं पारयति। ता० टी०, पृ० ९४५

८४. चेतनोऽप्ययं परानुग्रहस्वभावोऽपि वस्तुस्वभावमनुरुध्यमानः कर्माशयानुरोधेन जगद्वैचित्र्यं विधत्ते। न चावश्यं दुष्कृते पुंसां प्रवृत्तिं विहन्ति। तदेव, पृ० ९५०

८५. न्या० कु० २/१०

८६. स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गात्, परार्थं प्रवृत्तावदुःखमयसर्गप्रसङ्गात्।
एवमेव प्रवृत्तावचैतन्यम्। आ० त० वि०, पृ० ४०८,

८७. न च दुःखसृष्ट्या कारुण्यापवादः, जनकाध्यापकचिकित्सकादिषु व्यभिचारात्।
तदेव, पृ० ४०९

८८. सर्गात्पूर्वं हि निःशेषक्लेशसंस्पर्शहेतवः।
नास्य मुक्ता इवात्मानो भवन्ति करुणास्पदम्।। न्या० म०, पृ० १७६

८९. करुणामृतसंसिक्तहृदयो वा जगत्सृजन्।
कथं सृजति दुर्वारदुःखप्राग्भारदारुणम्।। तदेव

९०. स्वभाव एवैष भगवतो यत् कदाचित् सृजति कदाचिच्च संहरति विश्वमिति। ----------
अथवाऽनुकम्पयैव सर्गसंहारावारभतामीश्वरः।
न्या० म०, पृ० १८६

९१. नन्वत्र चोदितमनुपपन्नं तु अनादित्वात्संसारस्य शुभशुभसंस्कारानुविद्धा एवात्मानस्ते च धर्माधर्मनिद्राऽसंवृतत्वादपवर्गपुरद्वारप्रवेशमलभमानाः कथं नानुकम्प्याः? अनुपभुक्त-फलानां कर्मणां न प्रक्षयः सर्गमन्तरेण च तत्फलभोगाय नरकादिसृष्टिमारभते दयालुरेष भगवान्, उपभोगप्रबन्धेन परिश्रान्तानामन्तराऽन्तरा विश्रान्तये जन्तूनां भुवनोपसंहारमपि करोति। सर्वमेतत् कृपानिबन्धनमेव। न्या० म०, पृ० १८६

९२. अथवा स्वार्थमेव प्रवर्तते। किं तद्भगवतः प्रयोजनमिति चेत्? जगदुत्पत्तिरेव। कथमिति चेत्? सुखप्राप्तिदुःखाभावावपि कथं प्रयोजनमिति? यदि तदर्थं पुरुषस्य प्रवृत्तत्वादिष्टत्वाच्च, तदा भगवतोऽपि जगदुत्पत्त्यर्थं प्रवृत्तत्वादिष्टत्वाच्च तदेव प्रयोजनम्। न्या० भू०, पृ० ४५९

९३. किमर्थं तदिष्टमिति चेत्? सुखं किमर्थं पुरुषस्येष्टमिति, यत्किञ्चिदेतत् तस्माद्यो यमर्थमधिकृत्य प्रवर्तते तत्तस्येष्टत्वात् प्रयोजनमिति। तदेव

९४. न च स्वार्थं प्रवर्तमानस्यानाप्तकामत्वादनीश्वरत्वं प्रसज्यते, यस्य हि यथाऽभिप्रेतं न सिद्ध्यति सोऽनाप्तकाम इत्युच्यते। भगवतस्तु तत्तथैव सिद्ध्यतीति कथमनाप्तत्वम्। तदेव।

९५. आ० त० वि०, पृ० ४०८

९६. अत्र च निरुपाधीच्छाविषयत्वात् सुखादुःखाभावयोर्मुख्यं प्रयोजनत्वम्। तदुपायस्य तु तदिच्छाधीनेच्छाविषयत्वाद्गौणं प्रयोजनत्वमिति। विश्वनाथवृत्ति, न्या० सू० १/१/२४

९७. न्या०सार, पृ० ४४७; न्या० सि० त०, पृ० ३०

९८. प्रत्यक्षसाधर्म्याच्च तज्ज्ञानं, प्रत्यक्षमुच्यते न पुनरिन्द्रियार्थसन्निकर्षोत्पन्नत्वात्। न्या० म०, पृ० १८४

९९. चक्षुषा विना कथं पश्यतीति व्यवहार इति चेत्? उपचारात्। न्या० भू०, पृ० ४६३

## द्वितीयोऽध्यायः (भाग ख)

# वैशेषिकाभिमतेश्वरस्वरूपनिर्वचनम्

वैशेषिकदर्शनस्य विषये नैकेषां विदुषां मतं विद्यते यत् प्राचीनकालीनं वैशेषिकदर्शनमनीश्वरवादि। अनन्तरञ्च समानतन्त्रस्य न्यायदर्शनस्य प्रभावेण वैशेषिकदर्शनेऽपि परमेश्वरवादः संप्रवृत्तः। महापण्डितराहुलसांकृत्यायनमहोदयाः अपि स्वकीये दर्शनदिग्दर्शननामके ग्रन्थे वैशेषिकदर्शनस्य परिगणनमनीश्वर-वादिदर्शनेष्वेव कुर्वन्ति।[१] मतमिदं समालोच्यतेऽस्माभिः-यद्यपि वैशेषिकदर्शने नास्तीश्वरस्य नामतो निर्देशः "संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्"[२] सूत्रस्यास्य व्याख्यानावसर उपस्कारकृता शङ्करमिश्रेणेश्वरविषये संज्ञायाः[३] कर्मणश्च[४] लिङ्गत्वं प्रतिपाद्यते। "बुद्धिपूर्वा वाक्यकृतिर्वेदे"[५] "स वा अस्मद्बुद्ध्यन्यो लिङ्गमृषेः"[६] "सामयिकः शब्दादर्थप्रत्ययः"[७] इत्यादिवैशेषिकसूत्राणामपीश्वरविषये सङ्केतप्रदत्वमङ्गी-क्रियते परवर्त्तिभिः कैश्चिद् व्याख्यातृभिः। परन्तु नैतदपि साधु प्रतीयते सांख्यकारिकाया युक्तिदीपिकाख्यटीकायामुच्यते "आचार्येण तु नोक्तं तेन सूत्रकारमते नास्तीश्वरः। लिङ्गादिति चेत्, स्यान्मतम्, संज्ञाकर्मत्वमस्मद्विशिष्टानां लिङ्गम्। प्रत्यक्षपूर्वकत्वाद्वा संज्ञाकर्मणः इत्येतस्माल्लिङ्गादीश्वरपरिग्रह आचार्यस्य सिद्ध इति। तदप्यसिद्धम्। कस्मात्? अभिप्रेतासिद्धेः"[८]

अग्रे च प्रतिपाद्यते यदनेन लिङ्गेनास्मदादिभ्यो विशिष्टशक्तेः कस्यचिदस्तित्वं सिद्धं भवति, न पुनरीश्वरः सिद्ध्यति। पुनश्च यदीश्वरस्य सत्त्वेऽपि सूत्रकारः ईश्वरं नोपदिशति तर्हि तस्यात्राकौशलमेवोपदर्शितं भवति। यदि परमाणूनां प्रवृत्तिनिवृत्ती ईश्वरपरतन्त्रे स्याताम् तर्हि सूत्रकारः प्रथमं तदेवोपदिशेत्। नैवोपदिशति सूत्रकारोऽतः अकुशलः सूत्रकारः इत्यापद्यते, एतच्च नास्तीष्टम्। ईश्वरस्यासङ्कीर्तनेन चैतदपि प्रतीयते यत्सूत्रकारमते नास्त्येवेश्वरः। यदि वेश्वरः सूत्रकारमते स्यात् तर्हि स अवश्यमेव तस्य नाम गृह्णीयात्, ईश्वरनामग्रहणे च बध्वा इव श्वसुरस्य नामग्रहणे दोषस्तु नास्त्येव। अतः काणादानामीश्वरोऽस्तीति मतं पाशुपतोपज्ञम् इति स्वीकरणीयम्।[९] अतः ईश्वरस्वीकरणं न्यायदर्शनप्रभावेण सञ्जातमिति।

परन्तु मतमिदं नैव रोचते यदि विचार्यते। भारतवर्षे परिपाटी आसीदेषा यत् कस्यचिदपि दर्शनस्य सिद्धान्ताः व्याख्यानग्रन्थैरेव ज्ञायन्ते। सूत्रेषु ईश्वरस्य नामतः उल्लेखाभावेन वैशेषिकदर्शनं मूलतः अनीश्वरवादि इति नैव स्वीकर्त्तुं शक्यते। सूत्रकारस्य लक्ष्यमासीत् मोक्षाधिगमार्थं येषां पदार्थानां तत्त्वज्ञानमपेक्षितं तेषां पदार्थानां प्रतिपादनम्। अतः ईश्वरस्य चर्चा नैव कृता सूत्रकृता परन्तु केवलमेतावता वैशेषिकदर्शनमनीश्वरवादि इति स्वीकरणं नैव साधु प्रतीयते। परवर्तिभिः व्याख्याकृद्भिः "तद्वचनादाम्नायस्य प्रामाण्यम्"[१०] इति सूत्रस्य व्याख्याने तत् पदेनेश्वरस्यैव परामर्शः क्रियते। प्रथमसूत्रेण धर्मविषयिणी एव प्रतिज्ञा कृता सूत्रकृता, अतः द्वितीयसूत्रे तत् पदेन धर्मस्यैव परामर्श उचितः तत् पदस्योपस्थितपरामर्शकत्वात् इति प्रश्नः उपस्कारे शङ्करमिश्रेणैवं समाधीयते यत् यथा "तदप्रामाण्यमनृतव्याघातपुनरुक्त-दोषेभ्यः"[११] इति गौतमीयसूत्रे तत् पदेनानुपस्थितस्यापि वेदस्य परामर्शः क्रियते तथैवात्रापि तत् पदं प्रसिद्धसिद्धतयेश्वरमेव परामृशति। तथा च तेनेश्वरेण वचनादेवेश्वरोक्ताम्नायस्य प्रामाण्यम्[१२] यद्यपि उपस्कारे तत्रैव "यद्वा" इति कृत्वा तत् पदेन धर्मस्यापि परामर्शः कर्तुं शक्यत इति उक्तम्। जयनारायणतर्कपञ्चाननेन तु तत् पदस्येश्वरवाचकत्वमप्यस्तीत्यपि स्वीक्रियते।[१३] अन्यैरपि वैशेषिक-दर्शनानुसारिभिः विद्वद्भिरीश्वरस्य स्वीकरणं स्पष्टत एव क्रियते। उपस्कारकृतः शङ्करमिश्रास्तु कणादोऽपि भगवन्तमङ्गीकरोति स्पष्टमेतदुद्घोषयन्ति।[१४] द्रव्यनिरूपणावसरे चेश्वरसुवर्णयोः द्रव्येष्वेवान्तर्भावः इति प्रतिपादयति।[१५] चन्द्रानन्दः वैशेषिकसूत्रवृत्तौ भुवनादीनां कर्तृत्वेनेश्वरं साधयति।[१६] शङ्करमिश्रः कणादरहस्य-नाम्निग्रन्थे आत्मनिरूपणावसरे तस्य द्वैविध्यं प्रतिपादयति क्षेत्रज्ञः (जीवात्मा) सर्वज्ञः (परमात्मा) चेति। प्रमाणं चेश्वरे दर्शयति क्षितिः सकर्तृका कार्यत्वादिति अनुमानम्।[१७] उपस्कारे च "प्रत्यक्षपूर्वकत्वात् संज्ञाकर्मणः २/१/१९ सूत्रस्य व्याख्यानावसरे संज्ञा च कर्म चेति समाहारद्वन्द्वात् संज्ञाकर्तुः जगत्कर्तुश्चाभेदं सूचयति।[१८] न्यायमञ्जरीग्रन्थे जयन्तभट्टेनोल्लिख्यते-"यथाऽस्माकमीश्वरेच्छाप्रेरित-परमाणुनिर्मितानि पृथिव्यादीनि, समानतन्त्रे कणव्रतमते तथैव सिद्धानि।" प्रशस्तपादाचार्यः पदार्थधर्मसङ्ग्रहनामके प्रशस्पादभाष्यापरनामधेये ग्रन्थे मङ्गलमाचरन् कारणभूतेश्वरं प्रणमति[१९] सृष्टिसंहारप्रक्रियायामीश्वरं विवेचयति च।[२०] अन्येष्वपि प्रकरणग्रन्थेषु मुक्तावली, तर्कसङ्ग्रहादिषु भगवतः स्वीकरणं स्पष्टत उपलभ्यते। अत अस्माकमेष निष्कर्षः यत् प्राचीनकालीनमपि वैशेषिकदर्शनमीश्वरवादि आसीदिति।

### ईश्वरसद्भावे प्रमाणम्-

ईश्वरसद्भावे वैशेषिकदर्शनानुसारेणानुमानस्यागमस्य च प्रामाण्यम्।[२१] अनुमानञ्च

क्षित्यङ्कुरादिकमपि कार्यम् अतः तेनापि सकर्तृकेण भाव्यम्। न च क्षित्यङ्कुरादिकर्तृत्वं जीवात्मनाम् सम्भवति अतः यस्य क्षित्यङ्कुरादिकर्तृत्वम् स एवेश्वरः।[२२] एतदनुमानमीश्वरसिद्धौ प्रबलमनुमानम्। एतदेवानुमानं शब्दभेदेन किञ्चिदर्थभेदेन च अन्येष्वपि वैशेषिकग्रन्थेषु समुपस्थाप्यते। "न्यायकन्दल्याम्" "महाभूतचतुष्टय-मुपलब्धिमत्पूर्वकम् कार्यत्वात् यत्कार्यम् तदुपलब्धिमत्पूर्वकम् यथा घटः कार्यञ्च महाभूतचतुष्टयं तस्मादेतदप्युपलब्धिमत्पूर्वकम्"[२३] इति उल्लिख्यिते श्रीधरभट्टेन। कार्यत्वञ्च महाभूतचतुष्टये सावयवत्वेन हेतुना साध्यते। प्रशस्तपादाचार्यैः परिमाणनिरूपणावसरे द्व्यणुकपरिमाणं प्रति परमाणुगतसंख्यायाः कारणत्वं प्रतिपाद्यते। सा संख्या च ईश्वरबुद्धिजन्या इति च स्फुटीकुर्वद्भिः उदयनाचार्येण प्रोक्तस्य संख्याविशेषादिति भगवत्साधकस्य हेतोः संकेतः कृतः।[२४] सिद्धान्तमुक्तावल्याः व्याख्यायां दिनकर्यां श्रीमदुदयनाचार्योक्ताः सर्वेऽपि हेतवोऽत्रापि भगवत्साधकतयोपन्यस्यन्ते।[२५] मानमनोहरनामके ग्रन्थे अनेकान्यन्यान्यपि अनुमानानि भगवत्साधकतया प्रस्तूयन्ते[२६] तानि चेमानि सन्ति "विवादाध्यसितं कर्म प्रयत्नाधारजं कर्मत्वात् यत् कर्म तत् प्रयत्नाधारजं यथा सम्प्रतिपन्नं कर्म तथा विवादाध्यसितं कर्म" इति प्रयत्नाधारस्य सिद्धिः स एवेश्वरः। एवमेव "विवादाध्यसितं मूर्तं प्रयत्नाधार परमाणुव्यक्तिरिक्तत्वे सति मूर्तत्वात्" "गन्धः प्रयत्नजः गन्धत्वात् घटवत् तद्गतगन्धवच्च" "विवादाध्यसिते पृथ्व्युदके प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात् करतलामलकवत्" (अनुमानमिदं ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृत- काष्ठवत् इत्युदयनाचार्योक्तानुमानेन साम्यमाधत्ते) "विवादाध्यसितं नित्यविशेषगुणाधारजं कार्यत्वात् आप्यद्व्यणुकवत्। यश्च नित्यविशेषगुणाधारः स एवेश्वरः" बौद्धं प्रतीश्वरसाधनाय तत्रानुमानं प्रस्तूयते-"विवादाध्यसितो विकल्पः तदतिरिक्ते प्रमा प्रमात्वात् निर्विकल्पकप्रमावत्" इति। "एतज्ज्ञानम् एतदुत्पादकानित्यव्यतिरिक्तज्ञान- जन्यं कार्यत्वात् सम्प्रतिपन्नवत्" अनित्यव्यतिरिक्तज्ञानसिद्धौ यः तज्ज्ञानस्याश्रयः स एवेश्वरः इति सिद्ध्यति। एवमन्या अपि युक्तयः भगवति सम्भवन्ति।

ईश्वरसद्भावे वेदानामपि प्रामाण्यम् विद्यते तथाहि "द्यावाभूमी जनयन् देव एकः" "विश्वस्य कर्ता भुवनस्य गोप्ता"[२७] "ईश्वरमुपासीत्" "यः सर्वज्ञः स सर्ववित्" "यस्य ज्ञानमयं तपः" "सोऽकामयत"[२८] इत्यादयः ईश्वरसद्भावे प्रमाणभूताः।

## ईश्वरः स्रष्टा

ईश्वरोऽयं जगतोऽस्य स्रष्टा, निमित्तकारणम्।[२९] कार्यम् प्रति त्रीणि कारणानि अपेक्ष्यन्ते। समवायिकारणम्, असमवायिकारणम्, निमित्तकारणञ्चेति। जगतोऽस्य

परमाणवः समवायिकारणभूताः, परमाणूनां संयोगोऽसमवायिकारणम्, ईश्वरश्चास्य जगतः निमित्तम् अयमधिष्ठाता परमाणूनाम् अन्यथा सर्ग एव न स्यात् अचेतनानाम् चेतनमधिष्ठातारमन्तरेण प्रवृत्तेरसम्भवात्।[३०]

## आत्मकल्पः

अयमीश्वरः आत्मैव। कुत इति चेत्? अत्र समाधीयते बुद्धिगुणत्वात्।[३१] जीवा इवायमपि विभुः (परमहत्परिमाणवान्), एकत्वसंख्याश्रयः, पृथक्त्वसंयोग-विभागाख्यसामान्यगुणाश्रयश्च। जीवात्मकल्पत्वन्तु, बुद्धिगुणत्वादेव। द्रव्यविभागे ज्ञानवत्त्वेनैव विभजनात् अयमीश्वरः आत्मैव।[३२] ज्ञानञ्चास्य नित्यम् सर्वविषयकञ्च। इच्छाप्यस्य सर्वविषयिणी नित्या च। प्रयत्नोऽप्यस्यैतादृगेव। एवमसावीश्वरः संख्यापरिमाणपृथक्त्वसंयोगविभागैः पञ्चभिः सामान्यगुणैर्विशिष्टः बुद्धीच्छाप्रयत्नैः त्रिभिः विशेषगुणैश्च विशिष्टः इति स्वीक्रियते वैशेषिकदर्शने।[३३] अत्रापीश्वरबुद्धेः ईश्वरीयेच्छायाः ईश्वरीयप्रयत्नस्य च यन्नित्यत्वमङ्गीक्रियते तत् सर्वमपि न्यायदर्शनानुसारि एव। यथा न्यायदर्शने क्षित्यादिकर्तृत्वसम्पत्तये भगवतो ज्ञानस्य, इच्छायाः, प्रयत्नस्य च नित्यत्वमङ्गीक्रियते उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वस्यैव कर्तृत्वात् तथैवात्रापि भगवतो ज्ञानेच्छाप्रयत्नानां नित्यत्वमङ्गीक्रियते।[३४]

## सुखादुःखादिभिरसंस्पृष्टः नित्यमुक्तः

अयमीश्वरः सर्वज्ञः, सर्वज्ञत्वाच्चास्य न कुत्रचिदपि वस्तुनि विशेषस्याग्रहः। विशेषस्याग्रहे एव मिथ्याज्ञानं सञ्जायते, विशेषस्य अग्रहाभावात् नास्य मिथ्याज्ञानम्, मिथ्याज्ञानाभावाच्च न मिथ्याज्ञानमूलकौ रागद्वेषावस्य जायेते। रागद्वेषाभावाच्च नास्येश्वरस्य रागद्वेषमूलिका प्रवृत्तिः, प्रवृत्तिरूपकारणाभावान्नेश्वरस्य प्रवृत्तिसाध्यौ धर्माधर्मौ, धर्माधर्मयोरभावाच्च नास्य सुखम् नास्य दुःखं वा।[३५] सुखदुःखयोः क्रमशः धर्माधर्मप्रभूतत्वात्। नित्यसुखस्य सत्ता तु वैशेषिकदर्शने नैव स्वीक्रियते।

अयमीश्वरः आत्मकल्पः अतः प्रश्नोऽयं समुदेति यदयं बद्धो वा मुक्तो वा? अस्योत्तरमेवं दीयते यत् बन्धनकारणानां क्लेशादीनामभावात् अयम् बद्धः नास्ति। तर्हि मुक्तः भविष्यति? इत्यपि न, मुक्तिर्नाम बन्धविच्छेदः। अयं मुक्तः इति स्वीक्रियमाणे कदाचित् पूर्वकालेऽयं बन्धने आसीदिति स्वीकृतं भवति। अतोऽयमीश्वरः नित्यमुक्त इति स्वीक्रियते।[३६]

## वेदानामुपदेशकः

अयमीश्वरः वेदानामुपदेशकः, जीवात्मनाम् पितृवत् आप्तकल्पः। जीवानां

कल्याणाय सर्गकाले वेदान् रचयति।[३७] वेदाः नैवापौरुषेयाः भवितुं शक्नुवन्ति वाक्यरूपत्वात्। "वेदाः पौरुषेयाः वेदत्वात् आयुर्वेदवत्" "वेदः पौरुषेयो वाक्यत्वात् भारतादिवत्" "वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्" "वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्" इत्यादिभिः अनुमाभिः वेदस्य पौरुषेयत्वं साध्यते। यत्पुरुषप्रणीतो वेदः स एवेश्वरः।

## कर्मफलप्रदाता

वैशेषिकदर्शने ईश्वरः शुभाशुभकर्मणां फलं प्रददाति। शुभेन अशुभेन च कर्मणाऽदृष्टमुत्पद्यते। तदनुसारञ्चायमीश्वरः जीवेभ्यः फलं प्रददाति। अदृष्टञ्च स्वत एव फलदाने नैव सामर्थ्यमावहति अचेतनस्य चेतनाधिष्ठानेनैव फलप्रदायकत्वात्। ईश्वरेच्छयानुगृहीतमदृष्टम् कर्मणां फलप्रदाने सामर्थ्यं धारयति।[३८]

## अशरीरी

शरीरस्यापि कर्मजन्यतया भगवतस्तु कर्मणोऽभावात् ईश्वरस्य शरीरमपि नास्ति। भोगायतनस्यैव शरीरसंज्ञा भवति भोगाभावादेवास्य शरीरं नास्ति। न्यायदर्शनानुसारं यथा शरीरं नाङ्गीक्रियत ईश्वरस्य तथैव वैशेषिकदर्शनेऽपि।

## जगतस्सृजनस्य प्रयोजनम्

प्रलयकाले धर्माधर्मसंस्कारानुविद्धान् जीवात्मनः मोक्षमलभमानान् दृष्ट्वैष भगवान् करुणापरवशः धर्माधर्मसंस्कारक्षयार्थं सुखदुःखपरिपूर्ण जगदिदं सृजति। जगत्सृजनस्य प्रयोजनम् गौणमस्ति भोगः जीवात्मनाम्।[३९] परमं प्रयोजनमस्ति जीवात्मभिर्मोक्षलाभः। दुःखबहुलेन जगता उद्वेजिताः जीवात्मानः परमं पुरुषार्थं मोक्षमधिगन्तुं प्रयासं विधास्यन्ति इति भगवान् करुणयैव सृजतीदं जगत्।[४०]

## निष्कर्षः

एवं विवेचनेन स्पष्टीभवतीदं यदीश्वरस्य स्वरूपविषये वैशेषिकदर्शनम् न्यायदर्शनेन साकम् सम्पूर्णम् साम्यमाधत्ते। अत एव षड्दर्शनसमुच्चये हरिभद्रसूरिणा प्रोच्यते

**"देवताविषये भेदो नास्ति नैयायिकैः समम्"**

अतः अस्मिन् शोधप्रबन्धे न्यायपदेन न्यायदर्शनस्य समानतन्त्रं वैशेषिकदर्शनमपि परिगृहीतमस्ति।

## पादटिप्पणी

१. द० दि०, पृ० ५७९

२. वै० सू० २/१/१८

३. ---- एवं व घटपटादिसंज्ञानिवेशनमपि ईश्वरसंकेताधीनमेव यः शब्दो यत्रेश्वरेण संकेतितः स तत्र साधुः यथा या काचिदोषधिर्नकुलद्रंष्ट्राग्रस्पृष्टा सा सर्वाऽपि सर्पविषं हन्तीत्येतादृशी संज्ञा अस्मदादिविशिष्टानां लिङ्गमनुमापकं याऽपि मैत्रादिसंज्ञा पित्रा पुत्रे क्रियते साऽपि "द्वादशेऽहनि पिता नाम कुर्यात्" इत्यादिविधिना नूनमीश्वरप्रयुक्तैव तथा च सिद्धं संज्ञाया ईश्वरलिङ्गत्वम्। उपस्कार, पृ० ९४

४. एवं कर्माऽपि कार्यमपीश्वरे लिङ्गं तथाहि क्षित्यंकुरादिकं सकर्तृकं कार्यत्वात् घटवदिति। उपस्कार, पृ० ९४

५. वै० सू० ६/१/१

६. तदेव ६/१/२

७. तदेव ७/२/२०

८. सां० का० युक्तिदीपिका, पृ० ९९-१००

९. तदेव, पृ० १००

१०. वै० सू० १/१/२

११. न्या० सू० २/१/५७

१२. तदित्यनुपक्रान्तमपि प्रसिद्धसिद्धतयेश्वरं परामृशति यथा "तदप्रामाण्यमनृतव्याघात-पुनरुक्तदोषेभ्यः" इति गौतमीयसूत्रे तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते। तथा व तद्वचनात्तेनेश्वरेण प्रणयनाद्वेदस्य प्रामाण्यम्। उपस्कारः, पृ० ८

१३. यद्वा ईश्वरवाचकमेव तत् पदम् "ऊं तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः" इति वचनात्" --- उपस्कारविवृतिः, पृ० ९

१४. यदि तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं शास्त्रमुच्यते, तदा धर्मविशेष ईश्वरनियोगप्रसादरूपो वक्तव्यः। श्रूयते हीश्वरनियोगप्रसादादधिगम्य कणादो महर्षिः शास्त्रं प्रणीतवानिति। उपस्कारः, पृ० १८

१५. सुवर्णादीनामीश्वरस्य वात्रैवान्तर्भावात् तदेव, पृ० १९

१६. ईश्वरश्च साधितः तदनुभुवनादीनां कार्यतया घटादिवत् बुद्धिमत्पूर्वकत्वात्। वैशेषिक-सूत्रवृत्तिः पृ० २

१७. सोऽयं द्विविधः-क्षेत्रज्ञः सर्वज्ञश्चेति द्वितीयं न मृष्यामह इति चेन्न, क्षितिः सकर्तृका कार्यत्वात् यत् यत् कार्यम् तत्तत् सकर्तृकं यथा घटः, सकर्तृकत्वव्याप्यकार्यवती चेयम्, तस्मात् सकर्तृका इत्यस्मदादिविलक्षणकर्तृभूतेश्वरसिद्धिः।

कणादरहस्यम्, पृ० ३९

१८. अत्रापि संज्ञा च कर्म चेति समाहारद्वन्द्वादेकवद्भावः संज्ञाकर्तुः जगत्कर्तुश्चाभेद सूचनार्थः। उपस्कारः, पृ० ९३

१९. प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः।। प्र० पा० भा०, मङ्गलाचरणम्।

२०. प्रशस्तपादभाष्यम् सृष्टिसंहारप्रक्रिया

२१. किं पुनरीश्वरसद्भावे प्रमाणम्? आगमस्तावदनुमानञ्च। न्या० क०, पृ० १३३

२२. ----- यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृतयेश्वरसिद्धिः। न्यायसिद्धान्तमुक्तावली। पृ० २३-२४।

२३. द्रष्टव्य न्यायकन्दली, पृ० १३३

२४. तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुके बहुत्वसंख्या, तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति।। ------ द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते। प्र० पा० भा०, पृ० ३२२-३२९

२५. दिनकरी, पृ० ३९-४०

२६. मा० म०, पृ० २-७

२७. "द्यावाभूमी जनयन् देव एकः" "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसंधेयाः। न्या० सि० मु०, पृ० ३२

२८. दिनकरी, पृ० ३९

२९. संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः।
न्या० सि० मु०, पृ० २२

३०. ----- तेभ्यः परः सर्वार्थदर्शिसहजज्ञानमयः कर्तृस्वभावः कोऽप्यधिष्ठाता कल्पनीयः, चेतनमधिष्ठातारमन्तरेणाचेतनानां प्रवृत्त्यभावात्। न्यायकन्दली, पृ० १४१

३१. ईश्वरोऽपि बुद्धिगुणत्वादात्मैव। तदेव, पृ० २६

३२. ईश्वरेऽपि सा जातिः (सुखादुःखादिसमवायिकारणतावच्छेदकात्मत्वजातिः) नास्त्येव प्रमाणाभावात्। न च दशमद्रव्यत्वापत्तिः ज्ञानवत्त्वेन विभजनादित्याहुः।
न्या० सि० मु०, पृ० २०७

३३. संख्यादिपञ्चकं बुद्धिरिच्छा यत्नोऽपि चेश्वरे।। कारिकावली ३४

३४. नित्यज्ञानेच्छाकृतिमानेवेश्वरः सकर्तृकत्वानुमानेन साधनीयः। रामरुद्री, पृ० २७

३५. तदेवं कार्यविशेषेण सिद्धस्य कर्तृविशेषस्य सर्वज्ञत्वान्न कुत्रचिद्वस्तुनि विशेषानुपलम्भः। अतो न तन्निबन्धनं मिथ्याज्ञानम्, मिथ्याज्ञानाभावे च न तन्मूलौ रागद्वेषौ, तयोरभावान्न तत्पूर्विका प्रवृत्तिः, प्रवृत्त्यभावे च न तत्साध्यौ धर्माधर्मौ, तयोरभावात् तज्जयोरपि सुखदुःखयोरभावः। न्या० क०, पृ० १४२

३६. स किं बद्धो मुक्तो वा? न तावत् बद्धः बन्धनसमाज्ञातस्य बन्धहेतोः क्लेशादेरसम्भवात्। मुक्तोऽपि न भवति बन्धविच्छेदपर्यायत्वान्मुक्तेः। नित्यमुक्तस्तु स्यात्------।

न्या० क०, पृ० १४२

३७. द्र० कारिकावली कारिका १५० सि० मु० व्याख्या

श्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्यात् ----" दिनकरी, पृ० २३

३८. धर्मोऽपि तावन्न निःश्रेयसं करोति यावदीश्वरेच्छया नानुगृह्यते। न्यायकन्दली, पृ० १९

३९. ततः पुनः प्राणिनां भोगभूतये----। सृष्टिप्रक्रिया, प्र० पा० भा०

४०. न चैवं सति करुणाविरोधः, दुःखोत्पादस्य वैराग्यजननद्वारेण परमपुरुषार्थहेतुत्वात्। न्या० क०, पृ० १३२

## तृतीयोऽध्यायः (भाग क)

# चार्वाकदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनम्

भारतीयपरम्परानुसारेण चार्वाकबौद्धजैनदर्शनानि नास्तिकपदेनोल्लिख्यन्ते। "नास्तिको वेदनिन्दकः" इति परिभाषया वेदानां प्रामाण्यास्वीकारेण चार्वाकबौद्धजैनाः त्रयोऽपि नास्तिकाः उच्यन्ते। यद्यप्येतेषु बौद्धजैनदर्शनयोः मतमास्तिकविचारधारया साम्यमाधत्ते आस्तिकैर्जननमरणपरम्पराङ्गीक्रियते बौद्धजैनाभ्यामपि जननमरण-परम्पराऽङ्गीक्रियते। परन्तु वेदप्रामाण्यस्यास्वीकारेण बौद्धजैनयोरपि नास्तिकत्वप्रवादः। एतैस्त्रिभिरपि दर्शनैः न्यायाभिमतेश्वरस्य खण्डनाय कटिबद्धता प्रदर्शिता। चार्वाकस्य परमनास्तिकतया प्रथमं तावत्तमनुसृत्यैवालोच्यते न्यायाभिमतेश्वरः।

### चार्वाकदर्शनीयेश्वरस्वरूपम्

चार्वाकदर्शनानुसारं पृथिवीजलतेजोवायवः एवैतानि चत्वारि तत्त्वानि सन्ति।[१] एभिरेव जडतत्त्वैः सृष्टिरुपजायते जडेभ्यः कथं चैतन्यमुत्पत्तुमर्हति? प्रश्नोऽयमेवं समाधीयते चार्वाकदर्शने। यथा गुडेन मद्यं निर्मीयते यद्यपि सा मादकताशक्तिर्नहि विद्यते गुडे तथैव यद्यपि पृथिव्यादिचतुष्टयेषु कुत्रचिदपि चैतन्यं नास्ति तथापि यथोचितमेभिर्देहादिरूपेण परिणतैश्चैतन्यमुपजायते।[२] एतैः आत्मा क इति प्रश्ने शरीर एवात्मा इन्द्रियाण्येवात्मा, मन एवात्मा, प्राण एवात्मा एवमनेकान्युत्तराणि समुपस्थाप्यन्ते[३] न हि कथञ्चिदपि न्यायदर्शनाभिमतः शरीरादिभिन्न आत्मा स्वीक्रियते। ईश्वरः कः? इति प्रश्ने लौकिको राजैवेश्वर इति समाधीयते।[४]

### न्यायाभिमतचार्वाकाभिमतयोरीश्वरयोः स्वरूपभेदः

न्यायदर्शनं यादृशमीश्वरस्वरूपं निर्वक्ति चार्वाकदर्शनानुसारं न हि तादृशः परमेश्वरः कथंचिदपि साधयितुं शक्यः। यतो हि न्यायाभिमत ईश्वरः आत्मविशेष एव, सोऽयमात्मा शरीरादिभिर्व्यतिरिक्तः। चार्वाकदर्शने शरीरादिव्यतिरिक्तस्यात्मनो नास्ति विद्यमानता। शरीरादिसंघातस्यैवात्मत्वमत्र एतादृश-आत्मकल्पशरीरादिसंघात-विशेषो राजैवात्रेश्वरः। स च शरीरादिसंघातात्मकत्वेन अनित्यः। शरीरादिव्यतिरिक्त-

स्यात्मनोऽसत्त्वं कुतः चार्वाकदर्शन इत्यवगन्तुं प्रथमं चार्वाकदर्शनानुसारं प्रमाणानि कानि? इति विचारणीयम्।

## चार्वाकदर्शने प्रमाणानां संख्या

चार्वाकदर्शने प्रत्यक्षमेवैकं सम्पूर्णतया प्रमाणभूतं स्वीक्रियते। सर्वदर्शन-सङ्ग्रहादावित्येव समुपस्थाप्यते।[५] अत्रैषःप्रवादो यत् चार्वाकैः प्रत्यक्षातिरिक्तस्या-नुमानस्योपमानस्य शब्दस्य वा कस्यचिदपि प्रामाण्यं नैवाङ्गीक्रियते, परन्तु वस्तुतः नास्त्येवम्। चार्वाकैरनुमानस्यापि प्रामाण्यमिष्यते। किन्तु न हि सर्वस्याप्यनुमानस्य प्रामाण्यमिष्यते। एतैरनुमानं द्विधा विभज्यते उत्पन्नप्रतीतिकमुत्पाद्यप्रतीतिकञ्चेति। उत्पन्नप्रतीतिकस्याऽनुमानस्य चार्वाकैरपि प्रामाण्यमिष्यते यथा धूमादिहेतुना वह्न्यनुमानस्य उत्पन्नप्रतीतिकतयाऽस्ति प्रामाण्यम्। उत्पाद्यप्रतीतिकस्यानुमानस्य प्रामाण्यं नास्ति यथा परमेश्वरपरलोकादिविषयकाणामनुगानानां प्रमाण्यं नास्ति।[६] एषामनुमाना-नामुत्पाद्यप्रतीतिकत्वं व्यवस्थापयद्भिश्चार्वाकैरुच्यते यत् यावत् विटैः तार्किकैश्चेतः कुटिलितं न भवति तावदृजूनां जनानां परलोकाद्यनुमानविषयिण्यनुमानधीः नोपजायतेऽतः[७] उत्पाद्यप्रतीतिकत्वादेषामनुमानां नास्ति प्रामाण्यम्। सारांशत एतदायाति यद्येषामनुमानानां प्रत्यक्षमूलकत्वं तेषामेव प्रामाण्यं चार्वाकमते।[८] अत्रायं चार्वाक-सिद्धान्तः-प्रत्यक्षमेव केवलं प्रमात्मकज्ञानं प्रति कारणं भवति, अनुमानादिकन्तु न हि प्रमात्मकनिश्चयं प्रति कारणं भवति। योग्यस्यानुपलब्ध्या योग्योपाधीनाम-भावनिश्चये सत्यपि अयोग्योपाधीनां सत्त्वस्यासत्त्वस्य वाऽनिश्चयात्। तच्छङ्कया च व्यभिचारसंशयः,? व्यभिचारसंशयाद् व्याप्तिसंशयः, व्याप्तिसंशयाच्च न हि निश्चयात्मिकाऽनुमितिप्रमा सम्भवति यतो हि शतशः सहचरितयोरपि व्यभिचारो-पलब्धिर्भवति एवं ज्ञायते यदनुमानेन केवलं साध्यस्य सम्भावनैव प्रतीयते न तु निश्चयो भवति। अनन्तरञ्च साध्यस्य प्रत्यक्षत उपलब्ध्या प्रामाण्याभिमानं भवति। एवं प्रत्यक्षतो वारंवारमनुमित्यनन्तरं तद्विषयस्योपलब्ध्याऽनुमितेः प्रामाण्यं सिद्धं भवति। इति ज्ञायते यदनुमितेरपि प्रामाण्यं प्रत्यक्षमूलकतयैवायाति अतोऽनुमितेः प्रमात्मत्वं तदैव सम्भाव्यते यदा सा प्रत्यक्षोत्पन्नप्रतीतिका स्यात्। याऽनुमितिः प्रत्यक्षोत्पन्नप्रतीतिका न भवति सा तु केवलं सम्भावनामात्रमेव, प्रत्यक्षस्य प्रमाजनकतया तन्मूलकतयाऽस्या अनुमितेरपि प्रामाण्येनानुमितेरपि प्रत्यक्षान्तर्गततयैव प्रामाण्यम्। अत एव प्रत्यक्षमेवैकं प्रामाणमिति चार्वाकाः इति प्रवादः श्रुतिपथमायाति।

## चार्वाकदर्शनानुसारमात्मा

आभ्यां प्रत्यक्षप्रत्यक्षमूलकानुमानाभ्यां प्रमाणाभ्यां शरीरादिभिन्नस्यात्मनोऽस्तित्वं

सिद्धं न भवति। नैयायिकाः स्वशरीरे योग्यविशेषगुणसहितस्यात्मनः प्रत्यक्षं मानसं भवतीति स्वीकुर्वन्ति। यथा यदात्मनि सुखं वा दुःखं वा ज्ञानं वाऽन्यो वा कश्चिद् योग्यगुणो विद्यमानो भवति तदा "अहं सुखी" "अहं दुःखी" "अहं ज्ञानवान्" इति मानसः प्रत्यक्षः सञ्जायते। परशरीरे च प्रवृत्त्यादिहेतुनाऽऽत्माऽनुमीयते। यथा रथे प्रवर्तमाने दृष्टे सारथिरनुमीयते तथैव परशरीरे प्रवर्त्तमाने दृष्टे प्रवृत्त्यादिहेतुभिरात्माऽनुमीयते।[९] किन्त्वेष आत्मा शरीरादिभिन्नः इति नैयायिकाः। शरीरादिसंघातात्मक एवैष आत्मेति चार्वाकाः। आत्मनः शरीरादिसंघातात्मकत्वे प्रमाणम् प्रत्यक्षमेव। अत्र च भवति प्रत्यक्षं "अहं गौरः" "अहं श्यामः" "अहं स्थूलः" इति। गौरत्वश्यामत्वस्थूलत्वादिकञ्च शरीर एव सम्भाव्यते न तु शरीरादिसंघातभिन्न आत्मनि। सुखित्वादिप्रतीतिरपि शरीर एव भवति प्रत्यक्षबलादेतदप्यङ्गीकर्तव्यम्।[१०] "अहं गौरः" "अहं स्थूलः" इति प्रतीत्योः नैव किञ्चिदन्तरम्। यथा गौरत्वादिप्रतीतिः शरीरविषयिण्येव स्वीक्रियते तथैव सुखित्वादिप्रतीतिरपि शारीरविषयिण्येव स्वीकरणीया। अत्र विनिगमकमपि विद्यते। सुखदुःखादयः शरीरिकीमवस्थां परिवर्तयन्ति अन्यस्य गुणो नहि गुणिनं विकर्तुं प्रभवति, एतत्त्वनुभूयत एव यत् सुखाद्यवसरे शरीरं प्रभावितं भवति यच्च नयनविकारेण, मुखमुद्रायाः सौम्यतया, रोमहर्षादिना च प्रकटीभवति।[११] एवं शरीरादिसंघातस्यैवात्मत्वस्वीकारेण शरीरादिसंघातस्य भूतप्रकृतिकयाऽऽत्मनोऽपि भूतप्रकृतिकत्वं सिद्धं भवति।

चार्वाकमते चत्वारि भूतानि पृथिव्यप्तेजोवायुवाख्यानि। एतेषां यथोचित रासायनिकपरिमाणानां संयोगेनैव देहेन्द्रियादीनां निर्माणं भवति। यथा किण्वादीनां यथोचितरासायनिकपरिमाणानां संयोगेन मदिरायां मादकताशक्तिरुत्पद्यते तथैव चात्रापि चैतन्यमुपजायते। यथा च ताम्बूलपूगीफलचूर्णानां संयोगाद्राग उपजायते तथैव यद्यपि पृथव्यप्तेजोवायुषु कुत्रचिदपि नास्ति चैतन्यम्, तथापि तेषां रासायनिकपरिमाणानां संयोगेन चैतन्यमुपजायते।[१२] मदीयमिदं कलेवरमत्यादि प्रतीत्याऽपि न हि शरीरादिभिन्न आत्मा सिद्ध्यति, सैषा प्रतीतिः राहोः शिरो मात्रत्वेऽपि "राहोः शिरः" इति प्रतीतिवत् काल्पनिकी।[१३] एवं चार्वाकः शरीरादिसंघातभिन्नस्यात्मनोऽस्तित्वं नैव स्वीकरोति।

## चार्वाकन्यायमतयोरन्तरम्

अत्र नैयायिकचार्वाकयोरत्यन्तं विरोधः। नैयायिकाः वैशेषिकाश्च शरीरादिसंघात-भिन्नमात्मानं साधयितुमत्यन्तं प्रयतन्ते, चार्वाकाश्च शरीरादिसंघातात्मकमात्मानं साधयितुं प्रयतन्ते। तत्र द्रक्ष्यामो वयमुभयोः दर्शनयोः प्रक्षप्रतिपक्षौ। न्यायदर्शनेऽनुमानेन

प्रमाणेनात्मा साध्यते। यद्यपि "अहं सुखी" "अहं दुःखी" इत्यादिकं प्रत्यक्षमप्यात्मसिद्धौ प्रमाणमस्ति किन्तु न तत्प्रत्यक्षं शरीरादिसंघातभिन्नत्वमात्मनः साधयितुं सामर्थ्यं दधाति यतो हि सर्वेऽपि प्राणिनः प्रवृत्तिनिवृत्तिशीलाः। सैषा प्रवृत्तिरवश्यमेवात्मानं विज्ञाय स्वहितप्राप्तये भवतीति स्वीकरणीयम्। एष आत्मा तादृश एव स्वीकरणीयः यादृशमात्मानं सर्वेऽपि प्राणिनोऽवजानन्तु। अतः स्वीकरणीयमिदं यत् शरीरादिसंघातातिरिक्तः नैव कश्चिदात्मपदार्थो विद्यते। "शरीरमिदं न विनश्येत्" इति विचारेण सर्वोऽपि लोको भयभीत इव दृश्यतेऽतः शरीरमिदं सर्वेभ्योऽपि वस्तुयोऽधिकं प्रेयः इति तु लोकानुभवसिद्धः। यस्मै चान्यानि वस्तून्यपेक्ष्यन्ते तदेवात्मा। पश्यामो वयं यत् शरीरमेवैतादृशं विद्यते यस्मै चान्यानि वस्तून्यपेक्ष्यन्ते। अतः शरीरादिसंघात एवात्मा स्वीकरणीयः। "अहं गौरः" "अहं कृष्णः" इत्यादीनां प्रतीतीनां यथा शरीरविषयत्वं तथैवाहं जानामि, अहमिच्छामि। अहं चेष्टे, अहं सुखी, अहं दुःखीत्यादीनामपि प्रतीतीनां शरीरविषयत्वमेव स्वीकर्तव्यम्। यतो हि यथा "अहं गौरः" "अहं कृष्णः" इत्यादिप्रतीतयः शरीरादिसंघातस्यैवाऽहंपदवाच्य- मात्मत्वं स्वीकृत्य सम्भवन्ति शरीर एव गौरत्वकृष्णत्वादीनां विद्यमानत्वात् तथैव शरीर एव ज्ञानेच्छाकृत्यादीनां विद्यमानत्वात् अत्रापि शरीरमेवाहंपदवाच्यमङ्गीकर्त्तव्यम्। यद्यपि नैयायिकाः शरीरावच्छेदेनात्मनि ज्ञानेच्छाकृत्यादीनां सत्त्वं प्रतिपादयन्ति परन्तु शरीरावच्छेदेनात्मनि ज्ञानेच्छाकृत्यादीनां सत्त्वस्वीकारापेक्षया शरीर एव ज्ञानेच्छाकृत्यादीनां सत्त्वस्वीकारो युक्तिसङ्गतः।

अत्र चार्वाकमते काचन विप्रतिपत्तयो दार्शनिकैः प्रदीयन्ते ताः समुपस्थाप्य समाधीयन्ते (१) प्रथमं तावत् मृतशरीरे व्यभिचारमुद्भावयन्ति यद्यदि शरीरस्यैव चैतन्यमस्ति तर्हि मृतशरीरस्यापि शरीरत्वं त्वक्षतमेव। अतो यथा जीविते शरीरे ज्ञानेच्छाकृत्यादीनां सत्त्वमनुभूयते तथैव मृतशरीरेऽपि ज्ञानेच्छाकृत्यादीनां सत्त्वमनुभूयेत, नानुभूयतेऽतः शरीरादिसंघातस्य चैतन्यं नैवाङ्गीकरणीयम्।[१४] किन्तु नैवं वक्तुं शक्यते। चार्वाकदर्शनानुसारं पृथिव्यप्तेजोवायूनां यथोचितरासायनिकपरिमाणानां संयोगेन शरीरे चैतन्यमुपजायते स्थापितमेतत् पूर्वमेव। मृतशरीरे तेजोवाय्वोः न हि तादृशः संयोगो विद्यमानो भवति, अत एव मृतशरीरे जीवितशरीर इव प्राणवायुः उष्णः स्पर्शश्च नोपलभ्येते।[१५] अतः जीविते शरीरे मृते च समानता नास्ति इति ज्ञानेच्छाकृत्यादीनामुपलब्धिः कथं न भवतीति प्रश्नो नैवोत्थापयितुं शक्यते। (२) चार्वाकमतेऽपरा विप्रतिपत्तिरियमुपस्थाप्यते दार्शनिकैर्यद्यदि शरीरस्यैवात्मत्वं तदा बाल्ये विलोकितस्य वार्द्धक्ये स्मरणं नैव सम्भवति।[१६] शरीरस्य क्षणं क्षणं

परिवर्तनशीलत्वात् बाल्यकालीनवार्द्धक्यकालीनशरीरयोरत्यन्तं भिन्नत्वात्। अवयवोपचयापचयाभ्याम्भ्यां शरीरस्य प्रतिक्षणमुत्पादविनाशशालित्वात् शरीरं भिन्नं भिन्नं विद्यत इति सिद्ध्यति। शरीरस्य च भिन्नत्वेन स्मरणं नैव सम्भवति, एवं प्रत्यभिज्ञापि नैव सम्भवति यतो हि नियमो विद्यते नान्येन दृष्टमन्यः स्मरति। एवं नैव भवति यद् चैत्रेण दृष्टं वस्तु मैत्रः स्मरेत्। किन्त्वत्र चार्वाकमतेऽनुभूतं त्वन्येन बाल्यशरीरेण स्मर्यते च पौगण्डशरीरेण। इदं च स्मरणं जायत इति प्रामाणिकोऽनुभवः। अतः शरीरादिभिन्न एवात्मा स्वीकर्तव्यः। एषाऽऽपत्तिरपि चार्वाकेन वारयितुं शक्यते। यद्यपि शरीरे परिवर्तनं भवति किन्तु नैतादृशं परिवर्तनं भवति यत् कश्चिदेतत् वक्तुं समर्थो भवेत् यदिदं शरीरमेवान्यदिति। स्फुटचैतन्याः भौतिका रेणवोऽनुभवकालत आरभ्य स्मरणकालं यावत् प्रवहन्ति। शरीरं सम्पूर्णतया परिवर्त्तितं न भवति अनुभवितृशरीरस्य विद्यमानतया च स्मरणे न हि किञ्चिद्बाधकमस्ति। यथा किञ्चिद्भवनं परिष्कृतं चेद्भिन्नं न भवति तथैव बाल्यशरीरात् पौगण्डशरीरं भिन्नं न भवति। अत एव यत्र शरीरे बाल्ये तिललक्षणादिकमुपलभ्यते तत्रैव पौगण्डेऽपि तिललक्षणादिकं समुपलभ्यते। अतः शरीरस्याभिन्नतया बाल्ये विलोकितस्य वार्द्धक्ये स्मरणं समुपपद्यते। (३) एवमप्याक्षिप्यते चार्वाको यद्यदि शरीरमेवात्मा तदा जन्मान्तरस्य चार्वाकमते सत्ता नास्ति। सति चैवं जातमात्रस्य बालस्य स्तन्यपाने प्रवृत्तिः कथं सञ्जायते? प्रवृत्तिं प्रतीष्टसाधनताज्ञानं कारणं भवति तदानीञ्चैतज्जन्मानु-भूतमिष्टसाधनताज्ञानं नास्ति, जन्मान्तरस्य च चार्वाकमतेऽसत्त्वात् जन्मान्तरानुभूत-मपीष्टसाधनताज्ञानं नैव सम्भाव्यते। अतः चार्वाकमते जातमात्रस्य बालस्य स्तन्यपाने प्रवृत्तिर्नोपपद्यते। न्यायमते तु शरीरातिरिक्तस्यात्मनः सत्त्वात् पूर्वजन्मानुभूतस्येष्टसाधनता-ज्ञानस्य स्मरणात् तत्र प्रवृत्तिः सम्भवति।[१७] अत्र चार्वाको वक्ति यन्नात्र प्रमाणम्। यथा नान्यत् पूर्वजन्मानुभूतं स्मर्यते तथैव नैतदपि पूर्वजन्माभावात् यथा जनकादीनां प्रेरणया पठनादौ प्रवृत्तिर्भवति न तु नैयायिकोक्तेष्टसाधनताज्ञानात् तथैव स्तन्यपानादावपि जनकादीनां प्रेरणयैव प्रवृत्तिर्भवति नात्रापीष्टसाधनताज्ञानस्य कारणत्वम्।

## ईश्वरोऽपि शरीरादिसंघातात्मकोऽनित्यश्च

अनेन दिशा चार्वाकसिद्धान्तानुसारं शरीरादिसंघातस्यैवात्मत्वं स्वीकर्तव्यम्। न हि शरीरादिसंघातादतिरिक्तः कश्चिदात्माऽस्ति तर्हि परमेश्वरोऽपि शरीरादि-संघातात्मकोऽनित्य एव भविष्यति स च लोकव्यवहारसिद्धो राजैव। न्यायदर्शनाभिमत ईश्वरस्तु शरीरादिसंघातादतिरिक्तः शरीररहितो नित्यश्च।

## चार्वाकीय ईश्वरोऽसर्वज्ञः जगतोऽकर्ता

चार्वाको वक्ति यल्लोकव्यवहारसिद्धाद्राज्ञोऽतिरिक्तो नास्ति कश्चिदीश्वरः। तदाऽयमीश्वरो न्यायदर्शनानुसारं नैव सर्वज्ञानवान् सम्भवति, राज्ञोऽपि शरीरादि-संघातात्मकत्वेनास्माकमिवाल्पज्ञानवत्त्वात्। सर्वविषयिणीच्छाऽपि नेदृश ईश्वरे। सर्वविषयिणी कृतिरपि नात एव। न्यायदर्शने परमेश्वरस्य स्रष्टृत्वेनोपादानविषयकापरोक्ष-ज्ञानाय सर्वज्ञत्वमावश्यकम्। उपादानविषयकापरोक्षज्ञानाभावे चास्य स्रष्टृत्वमेव नैव सम्भवति। अत्र च दर्शने न हीश्वरस्य लोकव्यवहारसिद्धस्य राज्ञः स्रष्टृत्वमतो न हि तत्सम्पत्तये सर्वज्ञत्वस्वीकारस्यौचित्यम्। चार्वाकीयः परमेश्वरो राजैव। स चास्माकमिवाल्पज्ञः कथमस्य महतः सर्गस्य कर्ता भवेत्? उपादानगोचरापरोक्षज्ञान-चिकीर्षाकृतिमत एव कर्तृत्वस्वीकारात्। राज्ञस्तु सर्गोपादानविषयकं नास्त्यपरोक्षज्ञानम्, नास्ति चिकीर्षा, नास्तिक च तादृशी कृतिः।

## न्यायाभिमतस्येश्वरस्य चार्वाकदर्शनेऽस्तित्वाभावः

नैयायिकैरीश्वरसत्त्वव्यवस्थापनार्थमनेकाः युक्तयः प्रदीयन्ते तासु चैतासां तिसृणां प्राधान्यम्। प्रथमायुक्तिरस्ति-अस्य च महतः सर्गस्य कश्चित् कर्ताऽऽवश्यकः। कार्यमात्रस्य कर्तृजन्यत्वनियमात् कार्यत्वेन हेतुना सर्गस्यापि कर्तृजन्यत्वं साध्यते स कर्तैव परमेश्वरः। द्वितीया युक्तिरस्ति जीवादीनां सुखदुःखादीन् प्रति कारणीभूतस्यादृष्टस्य कश्चिदधिष्ठाता स्वीकार्योऽचेतनस्य चेतनमधिष्ठातारं विना जनकत्वाभावात्। सोऽधिष्ठाता परमेश्वरः तृतीया युक्तिरस्ति-वेदानामपि वाक्यसमूहत्वात् कश्चित् कर्ताऽवश्यमेव स्वीकार्यः स च वेदकर्ता परमेश्वरः। आस्वपि प्रथमा प्रबलतमा, द्वितीया प्रथमातो युक्तितोऽल्पतरा, तृतीया च तस्मादपि न्यूना।

## चार्वाकदर्शने न हि जगत्कर्तृतयेश्वरसिद्धिः

नैयायिकाः क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत् इत्यनुमानेन क्षित्यङ्कुरादि-कस्य सकर्तृकत्वं प्रसाध्यानन्तरञ्च क्षित्यादिकर्तृत्वस्यास्मदादिषु सम्भावनैव नास्ति। यत्र च क्षित्यादिकर्तृत्वं सम्भाव्यते स एवेश्वर इति कृत्वेश्वरं साधयन्ति। अत्र च कार्यत्वं हेतुत्वेनोपस्थाप्यते। "यत् यत् कार्यम् तत् तत् सकर्तृकम्" इयं व्याप्तिः। किन्त्विदमनुमानं चार्वाको नैव प्रमाणभूतत्वेनाङ्गीकरोति यतो ह्ययस्यानुमानस्य न हि प्रत्यक्षमूलकत्वं विद्यते। अस्मिन्ननुमाने "यत् यत् कार्यं तत् तत् सकर्तृकम्" अस्याः व्याप्तेः प्रत्यक्षतः ग्रहणमावश्यकम्। अपि चोत्पन्नप्रतीतिकत्वमावश्यकम्। तच्च नास्याः व्याप्तेः। प्रत्यक्षतस्त्वस्याः व्याप्तेः ग्रहणं नैव सम्भाव्यते यतोहि कण्टकतैक्ष्ण्यादिषु कार्यत्वन्त्वस्ति, प्रत्यक्षत उपलभ्यते कार्यत्वं परन्तु न हि सकर्तृकत्वं तत्र प्रत्यक्षतः

सिद्धं भवति। तत्र तु कृतिजन्यत्वाभाव एव प्रतीयते प्रत्यक्षतः।[१८] अतः कण्टकतैक्ष्ण्यादिषु कार्यत्वस्य हेतोः विद्यमानत्वेऽपि सकर्तृकत्वस्य साध्यस्य सत्त्वं नैव प्रत्यक्षतः गृह्यतेऽतो व्यभिचारः स्फुटः। व्यभिचारिणा च हेतुना कुतः साध्यस्यानुमानं कर्तुं शक्यम्? अतो न क्षित्यादिकर्तृतया परमेश्वरोऽलौकिकः साधयितुं शक्यते। भूतेभ्य एव प्राणिसर्गः सञ्जायते, नास्ति कस्यचित् स्रष्टुरपेक्षा सर्गार्थम्। भूतचतुष्टयात्मिका जडा प्रकृतिरेव स्वभावतः सृजति। सर्गस्वभावैषा प्रकृतिः।

अत्र नैयायिकानां प्रश्नो भवति यल्लोके कश्चिदपि जडः पदार्थः स्वत एव कार्यसम्पादने सक्षमो नैव भवति। चेतनाधिष्ठित एव जडः पदार्थः कार्यसम्पादनसामर्थ्यं धत्ते।[१९] पृथिवीजलतेजोवायवः भूतपदवाच्याः जडाः कथङ्कारं स्वतः सर्गं सम्पादयिष्यन्ति? अतः भूतचतुष्टयानां प्रेरकोऽधिष्ठाताऽवश्यमेव कश्चिच्चेतनोऽपेक्षितः। चार्वाकैरुच्यते यदस्मिन्नियम एव नास्ति मानम्। कण्टकतैक्ष्ण्यादिकं कञ्चिच्चेतनम-धिष्ठातारं विनैव जडेन सञ्जायते। यद् यद् वस्तु यादृशमुपलभ्यते तादृशमेव तद्वस्तु स्वीकार्यम्। किञ्चिद्वस्तुजातं चेतनाधिष्ठितेन जडेन सम्पद्यते, किञ्चिच्चेतनानधिष्ठितेन, जलेनाग्निःशमतामेति, तेजसा च जलं शुष्यति, विभिन्नानि भूतानि एकीभूय जगन्निर्मापयन्ति। गर्भगतस्य भ्रूणस्य हस्तपादोदरादीनामवयवानां निर्माणं स्वाभाविकम्। तत्र चैतन्ययोगोऽपि स्वाभाविकः। कण्टकतैक्ष्ण्यस्य पशुपक्षिणां वैचित्र्यस्य च कः सर्जकः सर्वमेतन्निसर्गादेव सम्पन्नम्।[२०] अग्नेरुष्णत्वं स्वभावः, जलस्य शीतलता, वायोः स्पर्शवत्त्वम् सर्वमेतत् केन चित्रितम्? न हि केनाप्यतः स्वाभाविकमेवैतत् सम्पन्नं सर्वम्।[२१]

अत्रैष प्रश्न उदेति यत् स्वभावाद्भवतीत्यस्य क आशयः? किं स्वयमेव स्वस्य कारणमिति, अथवा कारणं विनैवोत्पद्यते? अत्र प्रथमः पक्षो नैव सम्भवति, स्वस्य स्वयमेव कारणत्वे आत्माश्रयः प्रसक्तो भवति। द्वितीयस्यापि पक्षस्य सम्भावना नास्ति यतो हि यदि निमित्तं विना कार्यं सञ्जायते तदा घटस्य समुत्पत्तिर्घटस्य विनाशश्चोभयमप्येकदैव स्याताम्, उभयस्यापि निमित्तनिरपेक्षत्वात्।[२२] परन्तु घटस्य समुत्पत्तिविनाशौ नैव युगपज्जायेतेऽतः स्वभावादुत्पद्यत इति सिद्धान्तो नैव साधुतामावहति।

श्रीमदुदयनाचार्येणापि चार्वाकदर्शनीयस्य स्वभाववादस्य विषये स्पष्टमुच्यते यत्-यदुच्यते स्वाभाववादिना "अकस्माद् भवति" इति। क आशयोऽस्य? किम् "कस्माद् भवति" इत्यनेन हेतुनिषेधः क्रियते? उत उत्पत्तिः निषिध्यते? अथवा स्वातिरिक्तहेतुः निषिध्यते? अथवाऽलीकहेतुजन्यत्वं विधीयते? उत स्वभावजन्यत्वं

विधीयते? अत्र नास्ति कस्यचिदपि पक्षस्य सम्भवः अवधेर्नियतत्वाद्-कार्यस्य कादाचित्कत्वात्।[२३]

अयमाशयः-यदि स्वभाववादिना हेतुर्निषिध्यते तर्हि न तत् सम्भवति यतो हि कारणनाशेनैव कार्यनाशः सञ्जायते। घटोत्पत्तेः कारणस्यैव प्रथमे पक्षे-स्वीकारान्न कदापि घटस्य नाशः प्राप्तो भवति अतो घटादेः कादाचित्कत्वं नैव सम्भवति, कारणस्याभावेन कस्य नाशात् कार्यस्य घटादेः नाशः स्यात्। यदि च घटादिकार्याणां नाशार्थं कारणनाशस्यावश्यकता नास्तीत्युच्यते तदा घटोत्पत्तिघटविनाशावुभावपि निर्निमित्ताविति प्राप्तम्। उभयोश्च निमित्तहीनत्वे घटादीनामुत्पत्तिनाशावेकदैव स्याताम्। यदि च स्वभाववादिना चार्वाकेणोत्पत्तिर्निषिध्यते तदाऽपि घटादीनां नियतावधिकत्वं न स्यात्, कादाचित्कत्वं न स्यात् अनुत्पन्नस्य भावस्य विनाशादर्शनात्। यदि स्वभाववादिना स्वातिरिक्तस्य हेतोर्निषेधः क्रियतेऽर्थात् स्वत एव स्वस्योत्पत्तिः स्वीक्रियते तदाऽपि कादाचित्कत्वं व्याहतं भवति, आत्माश्रयश्चापरो दोषः। अलीकहेतुजन्यत्वस्वीकारे स्वभावजन्यत्वस्वीकारे वा नियतावधिकत्वं कार्यस्य नैव सम्भवति। एषु त्रिष्वपि पक्षेषु वस्तुकारणीभूतस्य स्वस्य, अलीकपदार्थस्य, स्वभावस्य च नाशासम्भवात् नियतावधिकत्वं दुरुपपाद्यम्। अतः स्वभाववादस्याश्रयणं नैव कर्तुं शक्यते।

परन्तु मन्येऽहं चार्वाकीयस्वभाववादस्य नायमाशयो यत् कारणमेव कस्यचित् कार्यस्य नास्ति, न वोत्पत्तिनिषेध एव क्रियते। सांख्यानां प्रकृतिपरिणामवादेन साम्यमाधत्त एष स्वभाववादस्य सिद्धान्तः। हिरियन्नामहोदयः सांख्यदर्शनीयप्रकृति-परिणामवादः स्वभाववादेन सदृशोऽपि सन् प्रयोजनेन प्रवर्तमानतया भिद्यत इति प्रतिपादयति।[२४] षड्दर्शनसमुच्चयटीकायां गुणरत्नो यथा स्वभाववादसिद्धान्तं प्रतिपादयति। तेनैषा धारणा पुष्टतां प्राप्नोति तत्र प्रतिपाद्यते-"स्वभाववादिनो ह्येवमाहुः। इह वस्तुनः स्वत एव परिणतिः स्वभावः। सर्वे भावाः स्वभाववशादुपजायन्ते। तथाहि-मृदःकुम्भो भवति न पटादिः। तन्तुभ्योऽपि पट उपजायते न घटादिः। एतच्च प्रतिनियतं भवनं न तथा स्वभावतामन्तरेण घटासंटङ्कमाटीकते। तस्मात् सकलमिदं स्वभावकृतमवसेयम्।"[२५] अत्र या युक्तिः प्रदत्ता सैव युक्तिः "शक्तस्य शक्यकरणात्" इति पङ्क्त्या सांख्यदर्शनेऽपि प्रतिपाद्यते।[२६] रीत्या चानया स्पष्टमेव प्रतीयते यदयं स्वभाववादः सांख्यदर्शनीयप्रकृतिपरिणामवादेन साम्यं धारयति। येषां दृष्टान्तानां चार्वाकैः प्रदर्शनं क्रियते-किण्वादिभ्यो मदशक्तिः, ताम्बूलपूग-चूर्णानां योगाद्रागः। तत्र स्फुटमेतदेव प्रतीयते यदुपादानकारणस्य तु स्वीकारः

चार्वाकैः क्रियत एव। उपादानकारणादन्यस्य निमित्तकारणस्यैव स्वीकारो नैव क्रियते अत्र दृष्टान्तेषु किण्वादेः मदशक्तेरुपादानकारणत्वं स्फुटमवगम्यते एवं ताम्बूलपूगचूर्णानाप्युपादानकारणत्वं स्फुटमवगम्यते। सांख्यदर्शने प्रकृतिरेवोपादानकारणम् यथा दुग्धमेव दधिरूपेण परिणमते तथैव प्रकृतिरेव "महत्" रूपेण परिणमते, महच्चाहङ्काररूपेण, अहङ्कारश्च पञ्चतन्मात्रेषु एकादशस्विन्द्रियेषु, पञ्चतन्मात्राणि च पञ्चमहाभूतेषु परिणमन्ते। २७ तथैव चार्वाकदर्शने पृथिव्यप्तेजोवायवाख्यानि चत्वारि तत्त्वान्येव परिणमन्ते चेतनावस्थां च प्राप्नुवन्ति। ताम्बूलपूगचूर्णानां योगाद्रागोत्पत्तिर्यथा स्वाभाविकी तथैव पृथिव्यप्तेजोवायुभ्यः चैतन्योत्पत्तिः सर्गोत्पत्तिश्च स्वाभाविकी। एषश्चार्वाकदर्शनीयः परिणामवाद एव स्वभाववादपदेन व्यपदिश्यते। सांख्यदर्शनीय-परिणामवादादत्र चार्वाकदर्शनीयपरिणामवादे (स्वभाववादे) अन्तरमेतावेदव यत् सांख्यदर्शने प्रकृतिः प्रयोजनमुद्दिश्य प्रवर्ततेऽत्र च भूतचतुष्टयात्मिका प्रकृतिः प्रयोजनमनुदिदश्य प्रवर्तते। अपरञ्चान्तरमेतदस्ति यत् सांख्यदर्शने जडायाः प्रकृतेः सञ्जातः सर्गोऽपि जड एव भवति, चार्वाकदर्शनानुसारन्तु पृथिव्यप्तेजोवायु-समष्ट्यात्मिकायाः प्रकृतेः सञ्जातः सर्गो जडोऽपि भवति, चेतनोऽपि भवति। वस्तुतः चार्वाकदर्शने नास्ति काचिद्विभाजनरेखा यदिदं चेतनं यदिदमचेतनम्। सर्वमपि भूतजातमवस्थावशात् "जड" इत्युच्यतेऽवस्थावशाच्चेतन इति।

अत्र चार्वाकेन प्रष्टुं शक्यते यज्जडात् चेतनोत्पत्तिः कथं सम्भवति? परन्तु चार्वाकस्यात्र नास्ति काचिद्विप्रतिपत्तिः। जड एव पदार्थः चेतनोऽपि सञ्जायते यथा हरितवर्णस्य ताम्बूलस्य, श्वेतवर्णस्य चूर्णस्य, कपिशवर्णस्य पूगस्य च कस्यचिदपि स्वात्मनि नास्ति रक्तता परन्तु समेषामेतेषां योगाद्रक्तताया उत्पत्तिर्भवति नास्त्यत्राश्चर्यं किञ्चित्, तथैव पृथिव्यादीनां चतुर्णां भूतानां योगाच्चैतन्यमपि जायते जडेप्यस्फुटं चैतन्यं विद्यत एवावस्थावशाच्च स्फुटीभवति।

"अकस्मादेव भवति" अस्यायमेवाभिप्रायोऽस्ति यत्किञ्चिन्निमित्तकारणमु-पादानकारणातिरिक्तं न हि भवति किञ्चित् कार्यम् प्रति। केवलेनोपादानकारणेनैव निर्वाहसम्भवात् भूतचतुष्टयात्मिका प्रकृतिः सर्गस्योपादानकारणीभूता विद्यते चार्वाकदर्शनानुसारतः। तत्र नास्ति किञ्चिन्निमित्तकारणम्। २८ किमर्थं चैषा भूतचतुष्टयात्मिका प्रकृतिः सृजत्येतज्जगत्? अत्रोच्यते-स्वभाव एवैष प्रकृतेः नहि विद्यते किञ्चित् प्रयोजनम् प्रकृतेरचेतनत्वात्। इदमेवोत्तरं प्रदीयते चार्वाकेन यत् पृथिव्यादीनि चत्वारि भूतानि स्वभावत एव सर्गं विदधति, प्रवृत्तिस्वभावकानि चत्वारि भूतानि। अतः पृथिव्यप्तेजोवायुभ्य एव भूतेभ्यः सर्गसम्भवे काऽऽवश्यकता

कर्तुरीश्वरस्य? चित्रविचित्रस्वभावा भूतचतुष्टयात्मिका प्रकृतिरेव चित्रविचित्रस्वरूपात्मकं जगदिदं सृजति।

अत्र चार्वाकेणान्यदपि शक्यत आक्षिप्तुम्। यदि परमेश्वरो जगतः कर्ता चेत् तदाऽस्य शरीरित्वमावश्यकम् भवति। यतो हि लोके यस्य कार्यस्य कस्यचिदपि कर्ता समुपलभ्यते स सर्वोऽपि शरीरवानेवोपलभ्यते। नैयायिकोऽशरीरिणमीश्वरं क्षित्यादिकर्तृतयाङ्गीकरोति। अत्र चार्वाको वक्तुं शक्नोति यत् यथाऽशरीरिणमीश्वरं भवान् क्षित्यादिकर्तृतया स्वीकुर्वन् दृष्टमतिक्रामति तथैवास्माभिरपि जडस्य कर्तृत्वं स्वीकर्तुं शक्यत उभयत्रापि दृष्टातिक्रमः सम एव। चार्वाकमते तु दृष्टातिक्रमोऽपि नास्ति चार्वाकसिद्धान्तानुसारेण। अपि चेतनस्य प्रवृत्तिः प्रयोजनानुसारिणी भवति। न हि न्यायाभिमतस्येश्वरस्य किञ्चित् प्रयोजनं सम्भवति सर्गे। स्वार्थं प्रवृत्तिरिति पक्षे परमेश्वरत्वं हास्यतीश्वरः। जीवानां स्वार्थमेव प्रवृत्तिर्भवति परमेश्वरोऽपि स्वार्थं प्रवर्तमानः जीवकोटावायाति। परार्थं प्रवर्तमानः कुतः दुःखबहुलमेतज्जगत् सृजति? यदि च परमेश्वरस्य स्वभाव एव सर्जनम् तर्हि किं कृतं भूतचतुष्टयात्मिकया प्रकृत्या? तयैवेदं जगत् सृज्यते, तस्या अपि जगत्सर्गः स्वभाव इति कथं नैव स्वीक्रियते। अतः जगत्कर्तृतया नैव परमेश्वरः सिद्ध्यति।

### अदृष्टाधिष्ठाताऽपि नेश्वरः

संसारे कश्चित् सुखी, कशिचद्दुःखी, कश्चिद् धनी, कश्चिच्च निर्धनः, कश्चित् स्वस्थः, कश्चिच्चास्वस्थः दृश्यतेऽत्र किं कारणम्? नैयायिकोऽदृष्टमेवास्य वैचित्र्यस्य कारणतया प्रतिपादयति। स्वकृतकर्मफलानुबन्धेन सर्वोऽपि लोकः सुखं वा दुखं वा प्राप्नोति, स्वर्गं नरकं वा भुङ्क्ते, सुन्दरमसुन्दरं वा शरीरमाप्नोति। तस्यादृष्टस्याधिष्ठाता परमेश्वरोऽस्त्यचेतनस्य चेतनाधिष्ठानेनैव कार्योत्पादकत्वात्।[२९] अतः सर्वेश्वरो वैषम्यनैर्घृण्यदोषौ नैवाप्नोति। किन्तु चार्वाकदर्शनानुसारं नानयाऽपि रीत्या परमेश्वरः साधयितुं शक्यते। यतो हि यद्यदृष्टस्य सत्तास्यात्तदा कदाचित्तदधिष्ठातृतया परमेश्वरः साधयितुं शक्येत। अदृष्टस्य तु सत्त्वमेवासिद्धम् प्रत्यक्षाविषयत्वात्। शरीरादि- संघातात्मकस्यैवात्मपदार्थत्वात्तस्य च विनाशस्य प्रत्यक्षसिद्धत्वात् न हि परलोकादीनामप्यस्तित्वम्।[३०] लोके यद्वैषम्यं दृश्यते न तत्रादृष्टस्य काचिदावश्यकता। स्वभावत एवोत्पद्यते तत्। यथा च पशुपक्षिणां विचित्रतायां न किञ्चित् कारणं स्वभाव एवैषः। तथैव विचित्रा सृष्टिरपि भूतचतुष्टयात्मिकया प्रकृत्यैव सञ्जायते न हि तत्रादृष्टापेक्षा। भूतेभ्यः यथा कर्मनिरपेक्षेभ्यः (अदृष्टनिरपेक्षेभ्यः) सिकतागैरिकाश्मखण्डप्रभृतयः सञ्जायन्ते तथैवादृष्टनिरपेक्षेभ्यो

भूतेभ्य एव शरीराद्यात्मकः सर्गोऽपि सञ्जायते।[३१] अदृष्टस्यापेक्षैव नास्ति तर्हि कुतस्तदधिष्ठातृतया परमेश्वरः सिद्ध्येत्।

## वेदकर्तृतयाऽपि नेश्वरसिद्धिः

वाक्यसमूहत्वात् वेदानामपि नैयायिकाः पौरुषेयत्वं स्वीकुर्वन्ति। यत्पुरुषप्रणीतत्वं वेदानां स पुरुष एवेश्वरः। वेदस्य गभीरार्थतयाऽलौकिकपदार्थविषयकतया च तस्य कर्तृत्वं न ह्यस्मदादीनां सम्भाव्यतेऽतः सर्वज्ञः ईश्वरस्तत्कर्ता नैयायिकानामयं सिद्धान्तः। किन्तु चार्वाकदर्शनानुसारं नास्ति वेदानां प्रामाण्यम्। यद्यपि चार्वाको वेदानां पौरुषेयत्वं स्वीकरोति। परन्तु प्रामाण्यमस्ति न वा वेदानाम्? अत्र प्रश्ने सम्यगर्थवत्त्वमपि वेदानां नाङ्गीकरोति, स वक्ति यदनृतव्याघातपुनरुक्तदोषेभ्यो दुष्टतया न वेदानां प्रामाण्यम्। वेदे श्रूयते "पुत्रकामः पुत्रेष्ट्या यजेत" परन्तु पुत्रेष्टिकरणाभावेऽपि लोके पुत्रजन्म दृश्यते। अतोऽनृतत्वं वेदवाक्यस्य, अदृष्टार्थकस्यापि "अग्निहोत्रं जुहुयात् स्वर्गकामः'" इत्यादिकस्याप्यनृतत्वं स्फुटं, दृष्टार्थस्यानृतत्वदर्शनात्। एवं विहितस्य व्याघातोऽपि दोषः यथा "उदिते होतव्यम्" "अनुदिते होतव्यम्" "समयाध्युषिते होतव्यम्" विधीयैवमुच्यतेऽनन्तरम्-"श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति" "शबलोऽस्याहुतिमभ्यवहरति य अनुदिते जुहोति" "श्यावशबलावस्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति" अत्र पूर्वपरवाक्यानां परस्परं व्याघातः। व्याघाताच्च ज्ञायते यदन्यतरं मिथ्येति। पुनरुक्तदोषोऽपि बहुलं वेदे "त्रिःप्रथमामन्वाह त्रिरुत्तमाम्" इति पुनरुक्तदोष आपद्यते। पुनरुक्तञ्च प्रमत्तकथनं भवति। एवं दोषैः दुष्टतया सिद्ध्यति न हि वेदाः प्रमाणभूताः।[३२] एवं व्यभिचारापराधवशादपि पुत्रोत्पत्तिर्दृश्यते न तत्र पुत्रेष्टियागः कारणम्।[३३] मन्त्राणां पदक्रमो नियतो भवति यदि पदक्रमः परिवर्त्यते तदाऽर्थहीनाः भवन्ति मन्त्राः।[३४] अचेतनेऽर्थबन्धोऽपि विद्यते। यथा "ओषधे त्रायस्वैनम्" (तै०सं० १/१/१) मन्त्रो दर्भविषयकः, "त्वधिते मैनं हिंसीः" (तै०सं० १/१/१) मन्त्रो क्षुरविषयकः" श्रृणोतु ग्रावाणः" (तै०सं० १/३/१३) मन्त्रः पाषाणविषयकः। एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत् सम्बोधनं श्रूयते, तच्चासम्भवि।[३५] केचन "सृण्येव जर्फरी तुर्फरी" त्यादि मन्त्राः निरर्थकाः श्रूयन्ते।[३६] नैतेषामर्थः परिज्ञायन्ते। एवमेतैः बहुभिः दोषैः कुतो वेदानां प्रामाण्यं शक्यमङ्गीकर्तुम्। एतादृशदोषदुष्टस्य वाक्यसमूहस्य धूर्तप्रलापत्वमेव सम्भवति[३७] न हि कथंचिदपि प्रामाण्यम्। अतः चार्वाको वक्ति यद्वेदानां प्रणेतारो भण्डधूर्तनिशाचरा एव।[३८] सत्येवमप्रमाणभूतस्य वेदस्य सर्गार्थं काऽऽवश्यकता परमेश्वरस्य।

**निष्कर्ष:**

विवेचनेनानेनैतत् स्पष्टीभवति यच्चार्वाकदर्शनानुसारं न्यायाभिमतः परमेश्वरः शश शृङ्ग इवालीकः। न वा न्यायाभिमतस्यात्मनः स्वीकरणं युक्तमस्ति येन तत्कल्पः परमेश्वरः स्वीक्रियेत। यादृशमात्मनः स्वरूपमङ्गीक्रियते तत्कल्पश्चेदीश्वरस्तर्हि लोकव्यवहारसिद्धो राजैव स परमेश्वरः। क्षित्यादिभ्यश्चतुर्भ्यो भूतेभ्यः स्वभावत एव सर्गसम्भवात् न हि तत्कर्तृभूतः, अदृष्टस्य च स्वीकाराभावात् न हि तदधिष्ठातृभूतः वेदानाञ्च धूर्तप्रलापरूपतया न हि तत्कर्तृभूतः परमेश्वरः इति न्यायाभिमत ईश्वरोऽसिद्ध एव।

## पादटिप्पणी

१. पृथिव्यापस्तेजोवायवस्तत्त्वानि। बा० सू० २

२. तेभ्यश्चैतन्यम्। किण्वादिभ्यो मदशक्तिवत्। बा० सू० ३,४

३. तत्र देहाकारपरिणतानि भूतान्येन त्वं पदार्थ इति चार्वाकाः। चक्षुरादीनि प्रत्येक मित्यपरे। मिलितानीत्यन्ये। मन इत्येके। प्राण इत्यपदे। सि० बि० पृ० १०६-१०७

४. लोकसिद्धो राजा परमेश्वरः।। स० द० सं० १-५२

५. स० द० सं०, चार्वाकदर्शनम्

६. सुशिक्षिततराः प्राहुः द्विविधमनुमानं किञ्चिदुत्पन्नप्रतीति किञ्चिदुत्पाद्यप्रतीति ईश्वराद्यनुमानन्तूत्पाद्यप्रतीति।
तत्र धूमानुमानादेः प्रामाण्यं केन नेष्यते।
अतो हि साध्यं बुद्‌ध्यन्ते तार्किकैरक्षता अपि।।
मत्त्वात्मेश्वरसर्वज्ञपरलोकादिगोचरम्।
अनुमानं न तस्येष्टं प्रामाण्यं तत्त्वदर्शिभिः।।
न्या० म०, पृ० ११३

७. ऋजूनां जायते तस्मान्न तावदनुमेयधीः।
यावत्कुटिलितं चेतो न तेषां विटतार्किकैः।। न्या० म०, पृ० ११३

८. इदमन्नं क्षुन्निवर्तकम् अन्नत्वात् ह्यस्तनान्नवदित्यनुमानं च तत्रैवान्तर्भवति प्रत्यक्षमूलत्वाविशेषात्। स० म० सं०, पृ० १५

९. धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः।
प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।।
अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः।। कारिकावली ४९-५० कारिका

१०. अहं स्थूलः कृशोऽस्मीतिसामानाधिकरण्यतः।
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।। स० द० सं० १/६३-६४

११. न ह्यन्यगुणो गुणिनं विकर्तुमुत्सहते। विक्रियते हि शरीरं नानाविकारमुखप्रसादरोमहर्षादिभिः। प्र० पं०, पृ० १४७

१२. जडभूतविकारेषु चैतन्यं यत्तु दृश्यते।
ताम्बूलपूगचूर्णानां योगाद्राग इवोत्थितः।। स० सि० सं० चार्वाकदर्शनम्

१३. मम पाणिभुजो वेति भिन्नत्वादुपपद्यते।
शरीरं तु ममेत्येषा कल्पना राहुमूर्धवत्।। न्या० म० प्रमेयप्रकारणम्, पृ० ५

१४. शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः। कारिकावली ४८ कारिका

१५. नैष दोषश्चतुर्णां हि भूतानां संहतिस्तनुः।
ततो वायावतिक्रान्ते चैतन्यमपि नश्यति।। वृ० आ० उ० भा० वा० १२८
ननु शरीरचैतन्ये मृत शरीरेऽपि तत् स्यात् तस्य वायुगुणत्वात्। मरणेन शरीरं विगुणमिति निर्विवादम्, प्र० पं०, पृ० १४७

१६. शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थविरे स्मरणानुपपत्तेः शरीराणामवयवोपवयापचयैरुत्पादविनाशशालित्वात्। न्या० सि० मु० ४८ का० व्याख्या।

१७. एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्, तदानीमिष्टसाधनत्वानुभावकाभावात् मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः। तदेव

१८. अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्" न्या० सू० ४/१/२२

१९. अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात्। न्या०कु०प्र०स्त० हरिदासी, पृ० २६

२०. अद्भिर्हुताशः शममभ्युपेति तेजांसि चापो गमयन्ति शेषम्।
भिन्नानि भूतानि शरीरसंस्थान्यैक्यं च गत्वा जगदुद्वहन्ति।।
यत्पाणिपादोदरपृष्ठमूर्ध्नां निवर्तते गर्भगतस्य भावः।
तदात्मनस्तस्य च तेन योगः स्वाभाविकं तत्कथयन्ति तज्ज्ञाः।।
कः कण्टकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां च।
स्वभावतः सर्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः।।
बु० च० ९/५०-५२

२१. अग्निरुष्णः जलं शीतं शीतस्पर्शस्तथानिलः।
केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः।। स० सि० सं० चा० द०

२२. सर्वं कार्यं स्वभावादेवोत्पद्यत इति बार्हस्पत्यो मन्यते। स प्रतिवक्तव्यः किं स्वयमेव स्वस्य निमित्तमित्यर्थः? किं वा निर्निमित्तमुत्पद्यत इति? नाद्यः आत्माश्रयत्वात्। द्वितीये घटस्य भावाभावौ युगपत्स्याताम्, क्रमकारिनिमित्तनिरपेक्षत्वात्। वि०प्र०सं०, पृ० ६९४

२३. हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः।। न्या० कु० प्र० स्त० का० ५

२४. पृ० २७९ भा० द० की रूपरेखा

२५. पृ० १३ षड्दर्शनसमुच्चय गुणरत्न टीका

२६. सां० का० ९

२७. सां० का० २२

२८. अनिमित्ता शरीराद्युत्पत्तिः कस्मात्? कण्टकतैक्ष्ण्यादिदर्शनात्। कण्टकस्य तैक्ष्ण्यं पर्वतधातूनां चित्रता, ग्राव्णां श्लक्ष्णता, निर्निमित्तं च उपादानवच्च दृष्टं तथा शरीरादिसर्गोऽपीति। न्या० भा० ४/१/२२ सूत्र

२९. धर्माधर्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नं प्रति तत्साधनं, सिद्धे च तस्मिन् तदधिष्ठातृतयेश्वरसिद्धिः, अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात्। न्या० कु० हरिदासी, पृ० २६

३०. परलोकिनोऽभावात् परलोकाभावः। बा० सू०

३१. भूतेभ्यो मूर्त्युपादानवत्तदुपादानम्। न्या० सू० ३/२/६१

३२. न्या० सू० २/१/५७

३३. अपराधकर्तुश्च पुत्रदर्शनात्। मी० सू० १/२/१३

३४. वाक्यनियमात्। तदेव १/२/३२

३५. अचेतनेऽर्थबन्धात्। तदेव १/२/३५

३६. अविज्ञेयात्। तदेव १/२/३८

३७. धूर्तप्रलापस्त्रयी।। बा० सू०

३८. त्रयो वेदस्य कर्तारः भण्डधूर्तनिशाचराः।
जर्फरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम्।। स० द० सं० चा० द०

तृतीयोऽध्यायः (भाग ख)

# बौद्धदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनम्

भारतीयपरम्परानुसारेण नास्तिकदर्शनेषु बौद्धदर्शनस्याप्रतिमं स्थानं विद्यते। अस्य दर्शनस्य नास्तिकत्वं वेदप्रामाण्यास्वीकारेणैव। यद्यपि दर्शनेऽस्मिन् अस्ति कर्म, अस्ति कर्मफलम्। साम्यमाधत्ते चैतदास्तिकविचारधारया। अस्य दर्शनस्य प्रवर्त्तको बुद्धः। बुद्धो यद्यपि कञ्चिद् ग्रन्थं नैव निर्मितवान्, परन्तु तेषामुपदेशाः भिक्षुभिरनन्तरं सङ्कलिताः तैरेवास्य सिद्धान्ताः ज्ञायन्ते।

## बुद्धसिद्धान्ताः

चत्वारो बुद्धस्य सामान्याः सिद्धान्ताः-

(१) प्रतीत्यसमुत्पादः।

(२) क्षणभङ्गवादः।

(३) अनीश्वरवादः।

(४) अनात्मवादः।

## प्रतीत्यसमुत्पादः

अयं कार्यकारणभावस्य महत्त्वपूर्णो नियमः विद्यते। यद्यपि बुद्धः कार्यकारणयोरविच्छिन्नां सन्ततिं नैव स्वीकरोति परन्त्विदं स्वीकरोति यत् "अस्मिन् सतीदं भवति।"[१] एकस्य विनाशे सति अपरस्योत्पादो भवति। अयमेव नियमः प्रतीत्यसमुत्पादपदेनोच्यते। न्यायदर्शने कारणे सति कार्यस्योत्पत्तिर्भवतीति सिद्धान्तः स्वीक्रियते। परन्त्वत्र नास्त्येवम्-प्रतीत्य समुत्पादो नाम प्रत्ययात् समुत्पादः। अर्थात् अतीतात् समुत्पादः। प्रत्ययपदेनात्र कारणं विवक्षितं परन्तु बुद्धेन प्रत्ययपदेन नैव स एवार्थः गृह्यते यः परैः कारणपदेन गृह्यते। प्रत्ययोऽयम् एतादृग् हेतुः यः कस्यचिद् वस्तुनः कार्यस्योत्पत्तेः प्राक् क्षणे लुप्तो भवति। प्रतीत्यसमुत्पादोऽयं कार्यकारणनियमस्य त्रिच्छिन्नप्रवाहत्वं द्योतयति।[२] अयं बुद्धदर्शनस्याधारभूतः सिद्धान्तः।

## क्षणभङ्गवादः

बुद्धदर्शनस्यास्य नियमस्य कश्चिदपवादः नास्ति। सर्वेषामपि पदार्थानां क्षणिकत्वं

विद्यते। बुद्धः स्कन्ध, आयतन, धातुभेदेन तत्त्वानि त्रिषु भागेषु विभक्तं करोति। स्कन्धाः पञ्च सन्ति–रूप, वेदना, संज्ञा, संस्कार, विज्ञानाख्याः। रूपान्तर्गताः पृथिव्यादयः चत्वारो महाभूताः। सुखदुःखादीनामनुभवः एव वेदनापदेनोच्यते। अभिज्ञानं संज्ञा। संस्कारश्च वासनैव। विज्ञानपदेन चेतनोच्यते, मनोऽप्येतदेव। चक्षुः, श्रोत्र, घ्राण, जिह्वा, त्वक्, मनांसि चैतानि षडिन्द्रियाणि, रूप, शब्द, गन्ध, रस, स्पर्श, धर्माश्चैताः इन्द्रियविषयाः आयतनपदेनोच्यन्ते। धर्मपदेनात्र वेदना, संज्ञा, संस्काराः बोध्यन्ते। धातवश्चाष्टादश–उपर्युक्तानि षडिन्द्रियाणि, षडिन्द्रियविषयाः, इन्द्रियविषय– सन्निकर्षेण जायमानानि षड् विज्ञानानि चक्षुर्विज्ञानम्, श्रोत्रविज्ञानम्, घ्राणविज्ञानम्, जिह्वाविज्ञानम्, त्वग्विज्ञानम् मनोविज्ञानम् च। जगतोऽस्य सर्वाण्यपि वस्तूनि एतेषु त्रिष्वेवान्तर्भवन्ति। एतानि सर्वाणि चानित्यानि सन्ति।[३]

## अनीश्वरवादः

ईश्वरस्य विचारः यत्रायाति तत्र स संसारस्यास्य स्त्रष्टा, पालकः, संहर्त्ता, नित्यः, चेतनश्च इत्येवार्थः गृह्यते। बुद्धस्य दर्शने नास्त्येतादृशस्येश्वरस्य कृते किञ्चिदपि स्थानम्। यदि च कश्चिदीश्वरः सम्भवति तर्हि स प्रतीत्यसमुत्पन्न एव सम्भवति प्रतीत्यसमुत्पन्नश्चेदीश्वरस्तर्हि स तु ईश्वर एव न भविष्यति ईश्वरसत्तास्वीकरणाय नास्ति बुद्धमतेन कश्चित्तर्कः। ईश्वरकर्तृत्वविषये बुद्धः उपहसति।[४] अन्यत्रेश्वरमपि सामान्यदेवकोटौ स्थापयति यश्च महाभूतानां निरोधस्य विषये देवानामिवाज्ञानी विद्यते।[५] अतः स्पष्टीभवति यद् बुद्धः ईश्वरमस्य जगतो कर्तृतया नैव स्वीकरोति न वा तस्य सर्वज्ञत्वमेवाङ्गीकरोति।

## अनात्मवादः

बुद्धः नैतादृशमात्मतत्त्वमङ्गीकरोति यः नित्यः शाश्वतः, अनुभवकर्ता, भोक्ता, ध्रुवः, अपरिवर्तनशीलश्च स्यात्। सः वक्ति यदियं भावना पूर्णतया बालधर्म एव।[६] आत्मनः परमार्थतः नास्ति काचिदपि सत्ता। व्यावहारिकी एव आत्मपदार्थस्य सत्ता विद्यते स च आत्मपदार्थः, रूप, वेदना, संज्ञा, संस्कार, विज्ञानस्कन्धानां संघात एव। यश्च पदार्थः आत्मपदेनोच्यते सोऽयं पदार्थः एतेषां पञ्चानाम् स्कन्धानां समुदाय एव न तु तदतिरिक्तः। "मिलिन्दप्रश्ने" भदन्तनागसेनेन बुद्धसम्मतः आत्मविषयकः सिद्धान्तः यवनराजाय मिलिन्दाय प्रश्नप्रतिप्रश्नक्रमेण सम्यग् बोधितः।[७] बुद्धमतानुसारमात्माऽनित्यसंघातमात्रमेव। परन्त्वत्र प्रश्नोऽयं समुदेति यत्–यद्ययमात्माऽनित्यसंघातमात्रमेव तर्हि पुनर्जन्म कस्य भवति? बुद्धस्तु पुनर्जन्म स्वीकरोत्येव। कृतं कर्म कः भुनक्ति? कर्मानुरूपं च सुखं दुःखं वा कः

अनुभवति? येन कर्माचरितं स तु अतीत एव यश्चोत्पन्नो भवति तेन तु कर्मैव नाचरितम्। अतः यद् द्रक्ष्यामो लोके कश्चिज्जन्म प्रभृति समृद्धः, कश्चिच्च जन्मः प्रभृति दुःखी तत्र च नैव दृश्यतेऽधुनातनम् कर्म, यत्फलेन कश्चित्समृद्धः कश्चिच्च दुःखी इति व्यवस्था स्यात्। अतः कृतहानिः, अकृताभ्यागमश्च प्रसक्तो भविष्यति। भौतिकवादस्याश्रयणञ्च गले पतिष्यति।

एवम् समाधीयत एतत् तत्रैव यत् नामरूपे जन्म गृह्णीतः। आभ्यां नामारूपाभ्यां कर्म क्रियते, तेन च कर्मणा अन्याभ्यां नामरूपाभ्यां जन्म गृह्यते। यः उत्पद्यते नायं स एव जनः नैव चापरः।[८] अत्र च नागसेनेनानेके दृष्टान्ताः प्रदर्शिताः। दीपशिखायाः दृष्टान्तः प्रदीयते-यदि कश्चिज्जनः रात्रौ दीपं प्रज्वालयति। किम् रात्रिपर्यन्तं स एव दीपः प्रज्वलति? साधारणतः एतदेव प्रतीयते यत् रात्रिपर्यन्तमेक एव दीपः ज्वलति परन्तु वस्तुतः नास्त्येवम् रात्रेः प्रथमस्य प्रहरस्य दीपशिखा अन्याऽऽसीत्, द्वितीयस्यान्या, तृतीयस्य च ततोऽप्यन्या। तत्रापि क्षण-क्षणभेदेन दीपशिखा भिद्यते, आत्माप्येवमेव। कस्यचिदपि वस्तुनोऽस्तित्वमेवमेवास्ति। एकाऽवस्थोत्पद्यतेऽपरा च लीयते अयमेव प्रवाहः प्रचलति। प्रवाहस्यावस्थासु क्षणमात्रस्याप्यन्तरं नैव भवति। जीवनावस्थायामप्यात्मनः संघातात्मकस्य एवमेव प्रवाहः प्रचलति, मरणे सत्यपि प्रवाहोऽयं नैवोच्छिद्यते। एकस्य जन्मनोऽन्तिमस्य विज्ञानस्य लये जाते सति अपरस्य जन्मनः प्रथमं विज्ञानं उत्थितं भवति।[९] अतः आत्मनोऽनित्यत्व स्वीकारेऽपि पुनर्जन्मवादः तर्कयुक्तो भवति।

## बौद्धदर्शनस्य प्रस्थानानि

बौद्धदर्शनस्य प्रस्थानानि चत्वारि सन्ति। उपरि विवेचिताः सिद्धान्ताः चतुर्ष्वपि प्रस्थानेषु समानरूपेण मान्याः सन्ति। तानि चत्वारि प्रस्थानानीमानि-सर्वास्तिवादः (वैभाषिकः।, सौत्रान्तिकः, विज्ञानवादः (योगाचारः), माध्यमिकाश्च। वैभाषिकानुसारं बाह्यजगतः सत्ता प्रत्यक्षसिद्धा, अयं प्रकृतेर्मनसश्च स्वतन्त्रां सत्तामङ्गीकरोति। प्रकृतेरुपलब्धिः प्रत्यक्षा मनसैव भवति सौत्रान्तिकोऽपि बाह्यस्य जगतः सत्तामङ्गीकरोति परन्तु नास्य मतानुसारेण बाह्यं जगत् प्रत्यक्षविषयमपितु बाह्यानां वस्तूनां विना पदार्थानां मनस्यवभासो नैव भवति, अतः बाह्यवस्तूनामस्तित्वमनुमीयते।[११] विज्ञानवादानुसारम् विज्ञानातिरिक्तं नास्ति किञ्चिद्वस्तु। विज्ञानवादः विज्ञानातिरिक्तस्य वस्तुनः सत्तां नैवाङ्गीकरोति। तत्र तर्कः प्रदीयते यद् यथा तिमिररोगी असत्कल्पं केशचन्द्रादिकं पश्यति तथैव रूपादीनामसत्त्वेऽपि रूपादीनां विज्ञप्तिर्भवति, अतो अर्थाः नैव सन्ति केवला विज्ञप्तिरेव सत्, संसारे सर्वमपि विज्ञप्तिरेव।[१२] माध्यमिकः

विज्ञप्तेरप्यस्तित्वं नैवाङ्गीकरोति। माध्यमिकमते नास्ति कश्चिद् ग्राह्यः ग्राहको वा सर्वमपि शून्यमेव।[१३] विज्ञानस्य, विज्ञेयस्य च सत्त्वम्, नैव पारमार्थिकम् अपितु सांवृतिकमेव।

**बौद्धदर्शनानुसारं न्यायाभिमतस्यात्मनोऽभावः**

बौद्धदर्शने समेषां सत्पदार्थानां क्षणिकत्वमङ्गीक्रियते। सत्त्वं चात्रार्थक्रियाकारित्वरूपम्। नित्यस्यात्मनोऽस्वीकारेऽपि क्षणं क्षणं परिवर्तमाना विज्ञानसन्ततिः एकस्मादपरं शरीरं गृह्णाति। नास्ति कश्चिन्नित्य आत्मा यः प्रैति, पुनश्च शरीरं गृह्णाति। अपितु रूपादिस्कन्धानां पञ्चानां संघात एव आत्मा। शान्तिरक्षितः न्यायवैशेषिकसिद्धान्तसम्मतमात्मस्वरूपं समुपस्थाप्य खण्डयति।[१४] नैयायिकाः आत्माऽयं शरीरेन्द्रियबुद्धिव्यतिरिक्तः इच्छाद्वेषप्रयत्नसुखदुःखज्ञानधर्माधर्मसंस्काराख्यविशेषगुणानां संख्यादिपञ्चसामान्यगुणानाञ्चाश्रयः, समवायिकारणमिच्छादीनामविनाशी, सर्वगतः शुभाशुभकर्मणां कर्ता, तेषां फलानाञ्च भोक्तेति परिकल्पयन्ति अन्यथा यदि नित्य आत्मा न भवेत् तदा कः प्रेत्य कर्मफलानि भुञ्जीत? अन्येन कृतं कर्म नान्येन भुज्यते। एवं हि अकृताभ्यागमदोषः स्यात् अकर्तुरेव फलसम्बन्धात्। कृतप्रणाशदोषश्च स्यात् कर्तुः फलेनाभिसम्बन्धाभावात्। अत एतदनिष्टभयेन नित्य आत्मा स्वीकार्यः। अयञ्चात्मा नैयायिकैः चैतन्यस्य (ज्ञानस्य) अभिसम्बन्धात् चेतन इत्युच्यते स्वरूपतोऽयमचेतन एव। अस्य कर्तृत्वं ज्ञानयत्नादिसम्बन्ध एव, सुखदुःखज्ञानसमवाय एवास्य भोक्तृत्वम्। निकायविशिष्टाभिरपूर्वाभिः बुद्धिभिर्वेदनाभिश्च सम्बन्धः जन्म, तैर्वियोगश्च मरणम्।

नैयायिकैः वैशेषिकैश्चात्माऽनुमानप्रमाणेन साध्यते। तत्र हेतवः सन्ति इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि। यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमुपलब्धवानात्मा तज्जातीयमर्थमादातुमिच्छति, यज्जातीयेन, दुःखमनुभूतवान् तज्जातीयमर्थं द्वेष्टि, एवमेव सुखहेतुमर्थमादातुं प्रयतते, सुखं दुःखञ्च स्मरति, वेदयते च। बुभुत्समानः विमृशति किंस्विदिदम्? सन्दिहानश्च जानीते इदमिति। तदेतत्सर्वम् एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारं विना नैव सम्भवति। अतः आत्मा स्वीक्रियते शरीरेन्द्रियादिर्भिन्नः।[१५] यथा रथस्य गतिं दृष्ट्वाऽनुमीयते यत् कश्चित् सारथिरस्ति रथस्य तथैव शरीरस्य प्रवृत्तिं दृष्ट्वाऽनुमीयते यत् शरीरमात्मनाधिष्ठितम्।[१६] इन्द्रियाणि ज्ञानकरणानि सन्ति अचेतनस्य करणस्य कर्तारमन्तरेण प्रवृत्तिर्नोपपद्यते अतः "इन्द्रियाणि सकर्तृकाणि करणत्वात् वास्यादिवत्" इत्यनुमानेनेन्द्रियाणां सकर्तृकत्वं साध्यते। यश्चेन्द्रियरूपेण

ज्ञानकरणेन जानाति स एवात्मा।[१७] अयमात्मा विशेषगुणयोगतः स्वकीये शरीरे प्रत्यक्षतः सिद्धः, मानसिकप्रत्यक्षस्य विषयः अहङ्कारस्य चाश्रयः।[१८]

## इच्छाद्वेषादीनां नात्मलिङ्गत्वम्

इच्छाद्वेषादीनां नात्मलिङ्गत्वं यतो हि यदीच्छादेः क्वचित्समाश्रितत्वं साध्यते तर्हि यदि कारणमात्रमाश्रयः परिकल्प्यते नातः आत्मसिद्धिः सम्भवति आत्मास्वीकारेऽपि इच्छाद्वेषादीनां कारणस्य स्वीकारसम्भवात्, बौद्धैरपि निष्कारणा इच्छादयो नेष्यन्ते। यदि च आधाररूपस्याश्रयस्य परिकल्पना नैयायिकेन क्रियते चेत् तदा तु नास्ति समीचीनम् गतिशून्यस्य वस्तुन आधारकल्पना निष्फला। बदरादीनां गतेर्विबन्धकरणाद् तदाश्रयः कुण्डादिरुपपद्यते, इच्छादीनां गतेरभावात् तेषामाधारकल्पना त्वनुचितैव।[१९] आत्मनः इच्छाद्वेषादीनां च सम्बन्धोऽसिद्धः यतो न तावत् तादात्म्यसम्बन्धः भवितुमर्हत्युभयोः (आत्मेच्छयोः, आत्मद्वेषयोः, आत्मप्रयत्नयोः, आत्मसुखयोः, आत्मदुःखयोः, आत्मज्ञानयोश्च) द्वयोः भेदाङ्गीकरणात्। न चोभयोः कार्यकारणतासम्बन्धः सम्भवति कारणस्य सत्त्वे कार्यस्यावश्यम्भावात् आत्मनि सर्वदैव इच्छायाः, द्वेषस्य, प्रयत्नादीनाञ्च सत्त्वमङ्गीकरणीयं भविष्यति तदा।[२०] साध्यसाधनयोः सम्बन्ध एव व्याप्तिः। स च सम्बन्धः द्विविधः एव प्रामाणिकः, बौद्धदर्शनानुसारम् तादात्म्यमूलकः सम्बन्धः कार्यकारणतामूलकश्च।[२१] अतः इच्छाद्वेषादिभिर्हेतुभिः नात्मसाधनं सम्भवति। यच्च "मया श्रुतम्" "मया दृष्टम्" इत्येवं एकज्ञातृनिमित्तत्वेन ज्ञानानि न तदपि प्रमाणम् आत्मास्तित्वे। क्षणिकेष्वपि भावेषु भ्रान्तिवशादेककर्तृकत्वाभिमानसम्भवात् प्रतिसन्धानस्य सम्भवतया तस्य हेतोरनैकान्तिकत्वात्। अतः नास्ति दर्शनप्रतिसन्धानोभयोः कर्त्ता कश्चिदेकोऽपि तु क्षणिकेष्वेव भावेषु कर्त्रेकत्वाभिमानतः एव तद्भवति।[२२]

## प्रवृत्त्यापि नात्मानुमानम्

सारथिविरहितो रथश्च नैव प्रचलति। अतः यथा रथस्य चालकः कश्चिच्चैत्रादिर्भवति तथैव देहचेष्टाहेतुः कश्चित्पुरुषोऽभ्युपेयः नैतन्मतमपि साधुतां भजते। यतो हि योऽयमात्मा शरीरस्य प्रेरकः स्वीक्रियते नैयायिकेन सः स्पर्शरहितः स्वीक्रियते। यथा रथस्य प्रेरयिता कश्चित् स्पर्शवान् एव भवति तथैव यदि शरीरस्य प्रवर्त्तकः कश्चित् स्वीकरणीयस्तर्हि सःस्पर्शवान् एवाङ्गीकार्यः न चैवमस्ति। अतः नास्य देहस्य चेष्टायाः कर्त्ता जीवोऽस्ति।[२३]

## इन्द्रियाणां सकर्तृकत्वानुमानेनापि नात्मसाधनम्

यच्च नैयायिकैः वैशेषिकैश्च चक्षुरादीन्द्रियाणां करणत्वेन, कर्त्रधिष्ठितत्वाच्च करणानां तेन हेतुना कर्त्राधिष्ठितत्वं प्रसाध्य जीवात्मा साध्यते शरीरादिभिन्नः न तदपि सम्भाव्यते हेतोः साध्यसमत्वात्। यदिदं करणत्वेन हेतुना चक्षुरादीनां कर्त्रधिष्ठितत्वं साध्यते तदैव सम्भवत्येतत् यदा चक्षुरादीनां करणत्वं सिद्धं स्यात्, परमार्थतस्तु नास्त्येवम्, विज्ञानोत्पत्तौ तु सर्वेषां हेतुभावस्य तुल्यत्वम्। योऽयं कर्तृकरणव्यवहारः स तु स्वेच्छामात्रपरिकल्पितः। यदि च कर्तृत्वमात्रं साध्यते तदा सिद्धसाध्यता परिकल्पितस्य कर्तृत्वस्य तु बौद्धैरपि निरासो न विधीयते। पारमार्थिकं कर्तृत्वं साध्यते चेत् तदा तु व्यभिचारः स्फुट एव, पारमार्थिकेन कर्त्रा क्वचिदपि चक्षुरादीनां प्रतिबन्धस्यासिद्धेः।[२४]

## नायं स्वकीयोऽप्यात्मा प्रत्यक्षसिद्धः

अहङ्कारस्यात्मा विषय इति यदङ्गीक्रियते काणादैः नैयायिकैश्च न तदपि साधु। यतो हि नैयायिकैः आत्मनः यादृशं स्वरूपमङ्गीक्रियते तादृशं स्वरूपं नैव भासते अहङ्कारप्रत्यये। तथाहि आत्मा विभुः, नित्यः, परन्तु विभुत्वनित्यत्वादीनामात्मधर्माणामहङ्कारे भासनं न भवति। किन्तु "गौरोऽहं" "स्थूलोऽहम्" इत्यादीनामाभासः स्पष्टत एवानुभूयते। अतः स्पष्टीभवति यदात्माकारशून्यत्वादहङ्कारो नात्मविषयः।[२५] एवं प्रकारेण सिद्ध्यति यत् इच्छादयः नात्मसमवायिनः विद्यन्ते क्रमशः उत्पद्यमानत्वात् बीजाङ्कुरलतावत् यथा बीजाङ्कुरलताः क्रमेणोत्पद्यन्ते न तु आत्मसमवायिनः तथा इच्छादयोऽपि उत्पद्यन्तेऽतो नैतेऽप्यात्मसमवायिनः इति सिद्धम्।[२६]

## आत्मनो न नित्यत्वव्यापित्वकर्तृत्वभोक्तृत्वादिसम्भावना

बौद्धा आक्षपन्ति यत् यदि आत्मा नित्यस्तर्हि नहि कश्चित् कमपि घातयितुं शक्नोति, अतः अहिंसाया धर्मत्वं नैवोपपद्यते अस्य नित्यस्यात्मनः हिंसा तथैव न सम्भवति यथा घुणतो वज्रस्य विनाशः नैव सम्भवति।[२७] अतोऽस्य नित्यत्वं नाङ्गीकर्त्तव्यम्। यदि चात्मा सर्वव्यापी स्यात् तर्हि स्वकीये शरीरे ममेदमिति बुद्धिः सञ्जायते तथैव परकीये शरीरेऽपि एतादृशी बुद्धिः कथं नैव जायते।[२८] अतो नास्ति सर्वगत आत्मां एवमेवात्मनः कर्तृत्वमपि नैव युज्यते, नायमात्मा धर्माधर्मयोः कर्ता, तत्फलभोक्ता भवितुमर्हति। यदि चायमेतादृशस्तर्हि न तस्य नित्यत्वं सर्वगतत्वञ्च युज्यते। यतो हि कर्तृत्वं क्रियानिबन्धनमेव क्रियावांश्च नैव नित्यः सम्भवति।

सर्वगतत्वादप्यात्मनः क्रियावत्त्वमङ्गीकर्तुं न शक्यते। क्रिया च द्विविधा भवति व्यापाररूपा भावरूपा च। व्यापाराश्रयः कर्त्तेत्युच्यते भावाश्रयश्च कर्म। यथा देवदत्तः गच्छतीत्यत्र गमनक्रिया देवदत्तनिष्ठाऽतः देवदत्तः कर्त्ता भवति। आत्मा तु सर्वगतोऽतः व्यापारात्मिकायाः क्रियाया आश्रयः नैव भविष्यति। अतः आत्मनः क्रियारहितत्वं स्वीकरणीयम्। क्रियारहितत्वस्वीकरणञ्चात्मनः नास्तित्वस्वीकरणतुल्यं भवति। अतः बौद्धदर्शनानुसारिणोऽनात्मवादस्यैव स्वीकरणमेतद् भविष्यति।[२९]

### आत्मकल्पस्येश्वरस्यापि बौद्धमतेऽस्तित्वाभावः

उपर्युक्तेन विवेचनेनेदं स्पष्टीभवति यत् बौद्धदर्शने न्यायवैशेषिकदर्शनाभिमतस्यात्मनोऽस्तित्वस्य नास्त्यवसरलेशोऽपि। तर्हि आत्मकल्पस्येश्वरस्य का कथा? न्यायवैशेषिकदर्शनाभिमत ईश्वरः बौद्धदर्शनानुसारं शशविषाणायित एव। यतो हि बौद्धदर्शने नित्यस्य वस्तुमात्रस्यैव प्रतिषेधः कृतोऽस्ति।[३०]

### क्षित्यादिकर्तृत्वेन नैवेश्वरसिद्धिः-

बौद्धा वदन्ति यदस्य तिस्रो विकल्पा सम्भवन्ति। न्यायवैशेषिकमते ईश्वरः सृष्ट्यादौ परमाणूनायोजयति। ईश्वरप्रयत्नपूर्वकं परमाणुषु द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म भवति। एतच्च परमाणूनाम् (१) "परमाण्वादयः साधिष्ठानाः स्थित्वा प्रवर्तमानत्वात् रथवत्" इत्यनुमानेन साध्यते। एतदेवानुमानं श्रीमदुदयनाचार्येण "परमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकम् कर्मत्वात् अस्मदादिशरीरक्रियावत्" इत्येवंरूपेण शब्दान्तरेण प्रस्तूयते। एवमेवेश्वरसाधनाय क्षित्यादीनां सकर्तृकत्वं साध्यते (२) "क्षित्यादयः सकर्तृकाः संस्थानविशेषवत्त्वात् प्रासादादिवत्" इत्यनुमानेन। (३) "भूभूधरादयः बुद्धिमत्कर्तृकाः अर्थक्रियाकारित्वात् घटादिवत्" इत्यनुमानेन च बुद्धिमत्कर्तृकत्वं प्रसाध्यते। एतेष्वनुमानेषु यश्च परमाणूनामधिष्ठाता, क्षित्यादिभूधरादीनां बुद्धिमान् कर्ता स एवेश्वरः इति रीत्येश्वरसाधनं क्रियते। आभिस्त्रिभिरप्यनुमाभिर्नेश्वरस्य साधनं सम्भवति, कुत इति चेत्? तत्र बौद्धः पृच्छति यदत्र अधिष्ठातृतया कर्तृतया च सामान्यः कश्चिद् विवक्षितः विशेषो वा कश्चिद् विवक्षितः? यदि च सामान्यः कश्चिद् कर्ता विवक्षितः तदा तादृशः कर्ता तु बौद्धैरपीष्यत एव अत इष्टस्यैव सिद्धिः। बौद्धैरपि कर्मलक्षणचेतनाधिष्ठितं कर्मणा च सकर्तृकं सकलमिष्यत एव।[३१] तत् कर्म च बौद्धैः चेतनमित्यङ्गीक्रियते। यदि विशेषः कर्ताऽधिष्ठाता वा साध्यते तदा रथघटादीनां दृष्टान्तानां तादृशसाध्यविकलत्वात् संदिग्धसाध्यकत्वाद्वा दृष्टान्ताभावादनुमानमसम्भवि।[३२] एवमत्राशयः-(१) परमाणूनामचेतनानां स्वतः प्रवृत्तिर्न सम्भवति अतः तत्प्रेरकः तदधिष्ठाता कश्चिदङ्गीकर्तव्यः सः ईश्वरः

सर्वेषामुत्पत्तिमतामीशः।[३३] इति नैयायिकानां पक्षः। तत्र च बौद्धैः प्रतिविधीयते-(क) नास्ति परमाण्वादीनां कारणता (ख) अस्त्यपि चेत् अचेतनस्य चेतनाधिष्ठितस्यैव प्रवृत्तिर्नैतत् साधु (ग) अदृष्टेनैवाधिष्ठित- तया प्रवृत्तिर्वा।

(क) परमाण्वादीनां कारणता नास्ति यतो हि परमाणुभ्यो व्यतिरिक्तः कश्चिदवयवी नास्त्येव यं प्रति परमाण्वादयः कारणीभूताः स्युः। "अयं घटः" इत्यादि लौकिकप्रतीतिबलेनापि नावयविनः सिद्धिः यतोहि कल्पनारचितमात्रं नहि कस्यचित् साधनम् भवति।[३४] यदि च परमाणव एव घटरूपेण व्यवह्रियन्ते तदा तु पमाणूनामनित्यतैवापतिता भवति। परमाणूनामप्यनित्यत्वे तेषामपि कार्यत्वात् सकर्तृकत्वमावश्यकम्। बौद्धैस्तु अणुसंहतिमात्रमेव घटपदार्थः स्वीक्रियते न तु घटस्यावयविनोऽस्तित्वमप्यङ्गीक्रियते।[३५] अन्यच्च परमाणूनां स्थित्वा प्रवृत्तिर्नैव सम्भवति। क्षणिकत्वात् वस्तुमात्रस्य परमाणूनामपि क्षणिकत्वस्याङ्गीकारात् स्थितिरेव न सम्भवति परमाणोः कस्यचिदन्यस्य वा पदार्थस्य।[३६] सर्वभावानामुदयसमनन्तर- मेवापवर्गितया क्षणमात्रमपि न स्थितिरस्तीति स्थित्वा प्रवृत्तिः कुतो भविष्यति, तस्मादयं हेतुः प्रतिवाद्यसिद्धः प्रतिवादिमते बौद्धमतेऽसिद्धः।[३७]

(ख) यदि च परमाणूनां कारणता "तुष्यतु दुर्जनः" न्यायेन स्वीक्रियेतापि चेत् तदापि चेतनेन परमाणोरधिष्ठानं नैव युक्तम्। यतो घटपटादीनां केषाञ्चित् कार्याणां कारणीभूतस्य तुरीतन्तुवेमादेः चेतनाधिष्ठितत्वेऽपि सर्वस्यैव कारणस्य चेतनाधिष्ठितत्वं नैव युज्यते। यथा प्रदीपोऽचेतनोऽपि अन्धकारस्थं घटमभिव्यञ्जयति, तस्याः घटाभिव्यक्तेः कर्ता भवति तथैवान्यत्रापि परमाणूनामपि अचेतनानां चेतनानधिष्ठितानामपि कर्तृत्वं सम्भवति। यदि च परमाणूनां प्रदीपस्य च कश्चिचेतनोऽधिष्ठाताऽङ्गीक्रियते? तर्हि ईश्वरस्यापि कश्चिच्चेतनोऽधिष्ठाता कथं न स्वीक्रियते?[३८] यदि च चेतनः कश्चिच्चेतनमधिष्ठातारं नैवापेक्षते इत्युच्यते तदा इत्यपि साधु यदचेतनोऽपि कञ्चिच्चेतनमधिष्ठातारं नैवापेक्षते। अतः यस्य यस्य पदार्थस्य यतो यतः उत्पत्तिर्भवति तस्य स कर्ताऽङ्गीकार्यः कुत्रचित् चेतनः कुत्रचिच्चाचेतनः। अतः परमाणुभ्योऽधिष्ठातुः कस्यचिन्नास्त्यपेक्षा, अचेतनम् चेतनाधिष्ठितमेव प्रवर्तत इति नैव साधु।

(ग) यदि च महानाग्रहो यदचेतनस्य चेतनाधिष्ठितस्यैव प्रवृत्तिस्तर्हि बौद्धैरपि कर्माधिष्ठातृतया प्रवृत्तिस्त्वङ्गीक्रियते, एवं लोकवैचित्र्यं प्रति कर्मैव कारणम्, तच्च मानसं कर्म चेतनञ्च। तेनैवाधिष्ठातृतया परमाणूनां प्रवृत्तिं स्वीकरोतु नैयायिकः। अतः परमाणूनां प्रेरकत्वेन येश्वरसिद्धिरभीष्टा नैयायिकैः न सा सम्भवति।

(२) क्षित्यादयः सकर्तृकाः संस्थानविशेषवत्त्वात् प्रासादादिवत् इत्यनुमानेनापि नैवेश्वरसिद्धिः सङ्गता। (यद्यपि नैयायिकैः क्षित्यादीनां सकर्तृकत्वसाधनाय कार्यत्वरूपो हेतुः प्रदीयते परन्तु कार्यत्वं नाम संस्थानविशेषवत्त्वमित्यभिप्रायेणैतत्) यतो हि सकलमेव संस्थानं न पुरुषपूर्वकं दृष्टम् बीजादिकारणविशेषमात्रेणैव वृक्षादीनां संस्थानस्योपपत्तेः तथैव च पृथिव्यादिसंस्थानस्यापि सिद्धेः। वृक्षादीनां संस्थानं ह्यचेतनहेतुसमन्वय्येव तथैव घटादेरपि संस्थानविशेषोऽप्यचेतनहेतुसमन्वयी कुलालादिस्तु तस्य घटस्य संस्थानविशेषं नैव जनयति न खलु बीजविजातीयं संस्थानं जनयितुं कश्चित् सुशिक्षितोऽपि चेतनः सामर्थ्यं धारयति।[३९]

किञ्च संस्थानवत्त्वमेव न सकर्तृकत्वस्यानुमानाय सामर्थ्यं दधाति। अपितु यो संस्थानविशेषः बुद्धिमत्पुरुषपूर्वकत्वेनान्वयव्यतिरेकाभ्यां लोके प्रसिद्धः, यस्य दर्शनाददृष्टतत्कर्तृकस्यापि बुद्धिमत्कारणावगतिर्भवति, तथाभूतो यदि क्षित्यादिषु पक्षेषु हेतुत्वेनोपादीयते, तदा स्यात् नैयायिकाभिमतस्येश्वरस्य सिद्धिः।[४०] नह्यन्वयव्यतिरेकाभ्यां सुविचारितं कार्यं कारणं व्यभिचरति यतो यदि तत् कार्यं कारणं व्यभिचरेत् तदाऽहेतुकत्वं प्रसज्येतास्य कार्यस्य। अतोऽन्वयव्यतिरेकाभ्यां यस्य यत्कार्यं निश्चितं तेन कार्येणैव तस्य कारणस्यानुमानं युक्तम्।[४१] न तु तदन्यस्य कारणस्यानुमानम् युक्तम्। यद्येवं स्यात् तर्हि कुम्भकारेण घटस्य करणात् मृद्विकारस्य वल्मीकस्यापि कुम्भकारकृतित्वं सिद्धम् भवेत्[४२] तथा चानुमानप्रयोगः “वल्मीकः कुम्भकारजन्यः मृद्विकारत्वात् घटवत्” इति। यदि वल्मीकस्य कुम्भकारकरणेऽनुमाने प्रत्यक्षबाधः तथा हि यदि कुम्भकारो वल्मीकस्य कर्ता स्यादुपलभ्येत, नैवोपलभ्यतेऽतः कुम्भकारो न वल्मीकस्य कर्ता। तर्हि नहि पर्वतादिष्वनियतसंस्थानेषु न प्रेक्षावत्प्रवृत्तिरुपलभ्यते तस्यापि नैवेश्वरकर्तृकत्वं वक्तुमुचितम्। नैयायिकानामर्धजरतीयन्याय एवापतति।[४३]

(३) “भूभूधरादयः बुद्धिमत्कर्तृकाः अर्थक्रियाकारित्वात् घटादिवत्” इत्यनुमानेनापि नैवेश्वरस्य सिद्धिः सम्भवति तथाहि यद्यनेनानुमानेन सामान्यतो बुद्धिमत्पूर्वकत्वं साध्यते तदाऽत्र तु नास्ति बौद्धनैयायिकयोः विवादः सत्त्वभाजन-लोकस्य वैचित्र्यन्तु कर्मजन्यमेवास्ति, कर्माणि च साधारणानि, असाधारणानि, शुभानि, अशुभानि च। अतः शुभाशुभसाधारणासाधारणकर्मकारिणो पुरुषाः बुद्धिमन्तोऽस्य कारणतामापद्यन्त इति सिद्धस्यैव साध्यता स्यात्। यदि नित्यैकबुद्धि- पूर्वकत्वं साध्यते तदा हेतौ साधर्म्यदृष्टान्ते घटपटादौ साध्यस्याभावात् दृष्टान्तो न स्यात्, अपि च प्रासादादौ व्यभिचारः स्फुट एव प्रासादादेरनेकबुद्धिमत्पूर्वकत्वस्यार्थ- क्रियाकारित्वस्य

कार्यत्वस्य वा प्रत्यक्षसिद्धत्वात्।[४४] तथाहि हेतुरयं इष्टस्य विघातकृत् भविष्यति साध्यस्य नित्यैकबुद्धिमत्पूर्वकत्वस्य अभावाधिकरणे प्रासादादौ हेतोः विद्यमानत्वात्।[४५]

## यदि चायमीश्वरो जगतो हेतुस्तर्हि कीदृशः

यदि चायमीश्वरः भूतेभ्योऽभिन्नश्चेत्तर्हि नास्त्यस्माकम् (बौद्धानाम्) तत्र कश्चिद्विद्वेषः, किमर्थं भवता (नैयायिकेन) नाममात्रे श्रमः क्रियते?[४५] यदि भूतेभ्यो भिन्नस्तर्हि नायं कर्ता सम्भवत्यचेष्टस्याकाशस्य यथा न कर्तृत्वं सम्भवति तथैवास्यापि।[४७] पुनश्चायमीश्वरः कारुणिको वा वीतरागो वा सरागो वा? यदि कारुणिकस्तदा दुःखमयीयं सृष्टिर्न युज्यते, यदि क्रीडार्थं सृजति तदा वीतरागः कथम्? यदि चावीतरागः तदाऽयमितरजनसाधारणतामाप्नोति कथमीश्वरत्वमाप्नुयात्?[४८] किञ्चायं जगदन्तर्भूतो वा स्यादनन्तर्भूतो वा? यद्ययञ्जगदन्तर्भूतस्तदा जगतः समानधर्मायं जगत्सृजतीत्यापद्यते नैतच्च युज्यते। यद्ययमनन्तर्भूतस्तदा मुक्तो जगत्सृजतीत्यपि न युज्यते।[४९] किञ्चायं जगत्सर्जने सप्रयोजनः निष्प्रयोजनो वा? यदि सप्रयोजनस्तदा तं प्रयोजनं प्रत्यनीश्वरः स्यात्। कथं जगदीश्वरतां भजेत्? यदि निष्प्रयोजनस्तर्हि नैतदपि युज्यते मूर्खचेष्टितमेतत् स्यात्।[५०] किञ्चास्य निर्माणसामर्थ्यं किं जीवकृतकर्मयोग-हेतुकमस्ति? अहेतुकं वा? यदि च कर्महेतुकं तन्निर्माणसामर्थ्यं तदा किं प्रयोजन-मीश्वरस्य? यदि च कर्महिहेतुकत्वादहेतुकं तदा नैतदपि युज्यते।[५१] किञ्चायमिच्छन् करोत्यनिच्छन् वा? यद्यनिच्छन् करोति तदा परायत्तः स्यात्। यदीच्छन् करोति तदापीच्छायत्तोऽयमिति प्रसज्यते। कुतोऽस्य ईशता स्यात्।[५२] एतेभ्यः पक्षेभ्योऽतिरिक्तस्य पक्षस्यासम्भवात् नैवास्तीश्वर इति सिद्धान्तीभवति।

## जगन्निर्मापयतोऽस्य प्रयोजनम् किम्?

अयमीश्वरो जगदिदं किमर्थं निर्मापयति? प्रेक्षाकारिप्रवृत्तेः प्रयोजनवत्त्वनियमात्। यदि चायमन्येन प्रयुक्तत्वात् जगतो निर्माणं करोति तदायं परतन्त्रतामाप्नोति। अतोऽनेनापराप्रयुक्तेन भवितव्यम्। अपराप्रवृत्तस्य प्रेक्षाकारिपुरुषस्य प्रवृत्तिः प्रयोजनमधिकृत्यैव भवति। कुतोऽस्य प्रवृत्तिः क्रीडार्थं, स्वभावात्, करुणया वा?

(१) नास्य प्रवृत्तिः क्रीडार्थं सम्भवति यतो हि क्रीडार्थाऽस्य प्रवृत्तिरिति स्वीकारे प्रेक्षापूर्वकारित्वं नास्य सम्भवति। लोके कियन्तो जनाः दुःखमयं जीवनं यापयन्ति, कियन्तश्च शरीरदोषत्वात् पीडामनुभवन्ति, कियन्तश्चेन्द्रियाभावात् दुःखं प्राप्नुवन्ति। यदि क्रीडार्थं प्रवृत्तिस्तदायं महतीं जघन्यां वृत्तिं करोतीति लभ्यते।[५३] अपि च रागिणां क्रीडायामभिरुचिः प्रवृत्तिश्च दृश्यते, येषामन्तःकरणं किञ्चिदपि निर्मलं भवति न ते क्रीडासु प्रवर्तन्ते।[५४] अन्ये चार्याः नरकादीनां भयादेव क्रीडासु

नैव प्रवर्त्तन्ते परदुःखकरासु, अस्य तु नास्त्येव नरकादिभयम्। महदनर्थश्च सञ्जायेतैवम्।[५५] किञ्च क्रीडार्थाऽस्य सृष्टौ प्रवृत्तिरिति पक्षे यथा विचित्रक्रीडनोपायस्यापेक्षा शिशवे भवति तथैवास्यापि सर्गस्थितिप्रलयात्मकस्य विचित्रक्रीडनोपायस्यापेक्षया नैवायमीश्वर इत्यापद्यते।[५६] यत्किञ्चिदपि क्रीडासाध्यायाः प्रीतेः साधनम् तत्सर्वमपि युगपदेव कुर्यात् यदि तत्सर्वस्य करणेऽस्य शक्तिः स्यात्, अतः नास्त्यस्य शक्तिः युगदुत्पादनेऽतः नैवायं प्रभुः। यदि चायं युगपदेव तत्सर्वस्योत्पादनाय शक्तिं नैव दधाति तदाऽयं क्रमेणापि तदुत्पादने शक्तो न भविष्यति एकस्यैव वस्तुनः शक्तिरशक्तिश्च न युज्यते।[५७]

(२) नाप्यस्य स्वभावतः प्रवृत्तिरिति पक्षो युज्यते। अत्र स्वभावतः प्रवृत्तेराशयोऽयम्-यथाऽग्निः स्वकीयया प्रकृत्यैव दाहकर्मणि प्रवर्त्तते तथैवास्य प्रकृतिरेव विद्यते सृष्टिविधानम्। यद्येवं स्यात्तदाऽखिला एव भावा युगपद्युत्पद्यन्ताम्? तदुत्पादने समर्थस्य कारणस्य विद्यमानत्वात्। यश्च दृष्टान्तो भवता प्रदीयते पावकस्य दाहे या प्रवृत्तिः साऽपि न स्वाभाविकी, अग्निकारणसम्वलनेन सम्भूताः नियता एव शक्तयस्तत्रापि न स्यादेवं चेत् युगपदेव समेषां कार्याणां समुत्पत्तिः स्यात्।[५८]

(३) यदि चायं करुणया प्रवर्त्तते तदाऽयमेकान्तसुखितमेव जगन्निर्मापयेत्। नानाविधव्याधिक्लेशदारिद्र्यादिदुःखबहुलं जगन्निर्मापयन् कोऽस्य करुणालेशः प्रतीयते?[५९] यदि कृपया प्रवर्त्ततेऽयं तर्हि क्रूरान् बीभत्सान् नरकान् सृजतोऽस्य करुणा कुत्रापयाता?[६०] आर्यपुरुषेषु कर्माचरणेऽन्यस्य प्रवर्त्तने च विशिष्टा शक्तिरुपलभ्यते यदि भगवति नास्त्येतादृशी शक्तिस्तदा नास्यार्यता। यदि साधुमार्ग प्रवर्तनेऽयं शक्तस्तदा कथमसत्मार्गे जीवान् प्रवर्त्तयति?[६१] अथायं जीवकृतकर्मानुरोधेनैव साधुमार्गेऽसाधुमार्गे वा जीवान् प्रवर्तयति। यश्च पापाचारे रतः तमसत्फलमनुभावयति, यश्च शुभकर्मपरायणः तं सत्फलेनानु गृह्णाति। तर्हि नैतदपि साधु, यतोहीश्वरस्य कार्यमात्रम् प्रत्येव नैयायिकैः कारणतायाः स्वीकृततयाऽधर्मकरणेऽप्येष जीवान् प्रवर्तयत्येव, पुनश्च दण्डद्वारा प्रतिविधानं करोतीत्यतः जघन्यां वृत्तिं प्राप्नोति।[६२] यदि वेदमुच्यते यथा लौकिको राजा पापिनं दण्डयति पापे न प्रवर्तयति तथैवायमपि जीवानधर्मे नैव प्रवर्तयति, अधर्मफलञ्च प्रददाति। नैतदपि साधु, लौकिको राजा नावहति तादृशं सामर्थ्यं यत् सः पापिनः पापान् निवारयेत्, अयं तु लौकिकेभ्यो राजभ्योऽत्यन्तशक्तिरिष्यते, कथं नैव पापिनः पापान् निवारयेत्।[६३] नैव वारयत्यम् पापिजनं पापादनेनास्यासामर्थयमेव द्योतितं भवति। सत्येवं नैयायिकैः नैवमुद्घोषणीयं यदीश्वरः सर्वं कर्तुं पारयति, जीवः पापानि स्वयमेव करोति तथैव पुण्यान्यपि स्वयमेव करोति नात्रास्ति कश्चित् प्रेरयिता।[६४] सृष्टेः प्राक् दुःखस्याभावात् नास्ति

कश्चिदनुकम्प्यः यमनुकम्पेदीश्वरः।[६५] एषाऽऽपत्तिरदृष्टाश्रयणेनैव वारयितुं शक्या यदि चायमीश्वरोऽदृष्टव्यपेक्षया सर्गमारचयति तदाऽस्य स्वतन्त्रतैव हीयते। पीडाहेतुभूतमदृष्टं कथमयमपेक्षेत।[६६] एवं कर्मण एवेश्वरापेक्षया सामर्थ्याधिक्यं द्योत्यते। तर्हि काऽऽवश्यकतेश्वरस्य, कर्मणैव सकलकार्यनिर्वाहसम्भवात्। यत्सामर्थ्येन समाकृष्यमाणो महेश्वरः सृष्टिमातनुते, स्थातुमसमर्थश्च तेन कर्मणैव सर्गः सम्भवति। अत एवोक्तम् "नमः सत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति"।[६७]

यदि चोच्यते नैवानुकम्पया, न वा करुणया, न वा स्वभावतः प्रवर्तते तर्हि सप्रयोजनत्वेऽस्य नैभिरतिरिक्तः कल्पः सम्भवति, निष्प्रयोजनोऽयं यथा कथंचित् प्रवर्तत इत्येवापद्यते, सत्येवं कीदृशी चास्य बुद्धिमत्ता (प्रेक्षावत्ता)? मूर्खः कैवर्तोऽपि कार्यमसमीक्ष्य नैव प्रवर्त्तते।[६८] एवं हि कैवर्त्तादिप्रकृतपुरुषादप्यत्यन्तानभिज्ञतया कथमसावीश्वरः प्रेक्षावतां श्रद्धेयः पूज्यो वा स्यात्। एवं प्रकारेणास्य सृष्टौ प्रवर्त्तमानस्य किंचिदपि प्रयोजनं नावलोक्यतेऽतोऽस्यास्वीकार एवोचितः।

## प्रमाणमपीश्वरसिद्धिबाधकम्

ईश्वरसिद्धौ प्रमाणमपि बाधकमस्ति तथाहि "ईश्वरो न जन्मिनां हेतुः उत्पत्तिविकलत्वात् यदुत्पत्तिविकलं तन्न कस्यचिदपि कारणम् यथा गगनाम्भोजः" उत्पत्तिविकलश्च ईश्वर इति तस्य जन्मिनां प्रत्यकारणत्वं सिद्ध्यति। यदि चेश्वरो जन्मिनां हेतु स्यात्तदा सर्वमपि युगपत् स्यात्। न भवति सर्वं युगपत्, अतः ईश्वरो न जन्मिनां हेतुः।[६९] अत्र नैयायिकः आश्रयासिद्धिं प्रदर्शयितुं शक्नोति तथा हि किमयमीश्वर इदानीं सिद्धो वाऽसिद्धो वेति? यदि सिद्धस्तदा नानेनानुमानप्रयोगेण कश्चिद्विघातः कर्तुं शक्यते, यदि चासिद्धस्तदाऽऽश्रयस्यैवासिद्धतया नेदमनुमानं सम्भवति। परन्तु नात्राश्रयासिद्धिर्बौद्धस्य, यतोहि प्रसङ्गसाधनमेवेदम्, न्यायदर्शनेन य ईश्वरः स्वीक्रियते स एव पक्षीकृतः। अतः नाश्रयासिद्धिः प्रयोक्तव्याऽत्र।[७०] यदि च तदाऽप्यनुमानस्य दुष्टता मन्यते, तर्हि एवम् प्रकारेणात्रेश्वरस्य जगदहेतुकत्वं साधनीयम्-यस्य कारणं सन्निहितं भवति तदुत्पद्यत एव यथाऽन्त्यावस्थाप्राप्तायां सामग्र्यामङ्कुरस्य कारणं सन्निहितं भवति, तदुत्पद्यते तदानीम्। यदि च जगदिदमीश्वरहेतुकं स्यात् तदा सर्वं जगत् युगपदेवोत्पद्येत् सर्वस्यैव जगतः कारणीभूतस्येश्वरस्य सन्निहितत्वात्।[७१] अत्र नैयायिकेन समाधीयते यत् यद्यपि ईश्वराख्यं नित्यं कारणमविकलमेव भावानां सन्निहितं, तथापि युगपदेव समेषां भावानामुत्पत्तिरीश्वरस्य बुद्धिपूर्वकारित्वात् न भवति। यदि चेश्वरः सत्तामात्रेणैवाबुद्धिपूर्वकं भावानामुत्पादकः स्यात् तदैषाऽऽपत्तिः स्यात्, बुद्धिपूर्वकं करोति नातोऽयं दोषः तस्य यदेच्छा

भवति तदा कार्येषु प्रवर्त्तते नैकदा सर्वमपि कार्यमुत्पद्यते। परन्तु यदासाविच्छति तदा कार्यमुत्पद्यते, तेन क्रमेण चोत्पद्यते। परन्तु नैतदपि समाधानं युज्यते। कार्याणामुत्पत्तिः कार्योत्पत्तेरभावश्च क्रमशः कारणस्य सत्त्वाऽसत्त्वापेक्षया च भवतः, कार्याणामुत्पत्तिः कार्योत्पत्त्यभावश्च न हि कारणस्येच्छानियन्त्रितौ भवतः येनाऽप्रतिबद्धसामर्थ्येऽपीश्वराख्ये सदा सन्निहिते कारणे तदीयेच्छाभावात् न प्रवर्तन्त इति स्यात्। कारणगतसामर्थ्यभावाभावानुविधायिनो भावाः भवन्ति। यदि कारणे सामर्थ्यं भवति तदा कार्यमवश्यमेवोत्पद्यते यदि च कारणे सामर्थ्यं न भवति कार्यं नैवोत्पद्यते तत्रेच्छा नैव किञ्चित्करा तथाहि इच्छावतोपि कर्तुरसामर्थ्येऽङ्कुरादिकं नैवोत्पद्यते, अनिच्छावतोऽपि बीजादेः सामर्थ्ये सति उत्पद्यते। नैयायिकेन च भगवतः कारणत्वमेवाङ्गीक्रियते तदपि कारणत्वं लौकिककार्यकारणमर्यादां नातिशेते। तत्र च यदीश्वराख्यं कारणं कार्योत्पादकालवदप्रतिहतशक्ति तत् सदैवावस्थितं समेषां भावानामिति, तत् किमर्थं भावाः ईश्वरीयामनुपकारिणीमिच्छामपेक्षन्ते? येन च युगपद् नैवोत्पद्येरन्।[७२] अपिचेश्वरीयेच्छायाः नित्यत्वेन बुद्धिपूर्वकारित्वेऽपीश्वरस्य ईश्वरवत्तदीयेच्छाया अपि सदैव सन्निहिततया किमिति भावानां समेषां युगपदुत्पादो न भवति।[७३]

नैयायिकोऽत्र वक्तुं शक्नोति यत् न केवलमीश्वर एव कारणम्, अपितु अदृष्टमपि सहकारिकारणान्तरम् तदपेक्षयैवासौ जगत्सृजति, युगपद् भावानां समेषामत एवोत्पत्तिर्न जायते। अदृष्टाख्यस्य कारणस्याभावादविकलकारणत्वस्याभावात्। तदेतदपि न साधु, यदि सहकारिभिः तस्य कश्चिदुपकारः कर्तव्यो भवेत् तदा सहकारिभिः तस्येश्वरस्य काचिदपेक्षा स्यात्, नित्यस्येश्वरस्य परैरनाधेयातिशयशक्तिमतोऽस्य न सहकारिभिः किञ्चित् प्राप्तव्यमस्तीति किमर्थं तथाभूताननुपकारिणः सहकारिणोऽपेक्षेत।[७४] अस्तु नाम अदृष्टव्यपेक्षेश्वरस्यान्येष्वपि वा परन्तु सर्व एव भावा ईश्वरायत्तजन्मानोऽतः नित्यमेव समवहिताः सहकारिणः। अविकलकारणत्वेऽपि यदि कार्यस्योत्पत्तिर्नैव स्यात्तदा तु सर्वदैव कार्यस्योत्पत्तिर्न स्यात्।[७५]

प्रमाणान्तरमपि विद्यते "जगत् नेश्वरहेतुकम् क्रमेण जायमानत्वात् ईश्वरकारणाभिनिवेशिनां प्रत्ययवत्" तथा हि प्रत्ययाः = निश्चयाः क्रमशः जायन्ते ते च नेश्वरहेतुकाः तथैव जगदपीदं क्रमशः जायते तदपि नेश्वरहेतुकम्। यदि च तेषां निश्चयानामपि भगवद्धेतुकत्वं स्वीक्रियते तदा तु साधनस्याभिधानमेव व्यर्थं स्यात्, ईश्वरादेव तेषामुत्पत्तेः सम्भवात्।[७६] यदि साधनस्याभिधानं तस्येश्वरस्य

स्वाभाविकमसामर्थ्यमपनीय सामर्थ्यमादधीत, तदा स्यात् तत् साधनस्याभिधानं सहकारिकारणम्। ईश्वरस्य नित्यत्वादनुत्पाद्यानिवर्त्त्यस्वभावस्यास्य केनचिदन्येन साधनाभिधानेन न किञ्चित् स नीयते स्वभावः। अतः साधनाभिधानं सहकारिकारणमिति न युज्यते।[७७]

अपि च कार्यकारणभावनिश्चयोऽन्वयव्यतिरेकाभ्यां सञ्जायते न चेश्वरेणान्वयव्यतिरेकः गृहीतुं शक्यते। यस्य सत्त्वे यस्योत्पत्तिर्दृश्यते, यस्यासत्त्वे च यस्योत्पत्तिर्न दृश्यते तयोः कार्यकारणभावः गृह्यते यथा वह्न्यार्द्रेन्धनसंयोगसत्त्वे धूमोत्पत्तिर्दृश्यते, वह्न्यार्द्रेन्धनसंयोगाभावे च धूमोत्पत्तेरभावः दृश्यते। तेन धूमस्य कार्यत्वम्, वह्न्यार्द्रेन्धनसंयोगस्य च कारणत्वं गृह्यते। नैवमीश्वरजगतोः कार्यकारणभावः गृह्यते। ईश्वरस्य व्यापित्वात् नित्यत्वाच्च न तस्य कुत्रचिद् कदाचिद्वा अभावः प्राप्नोति। अभावे चाप्राप्ते कुतस्तस्य व्यतिरेकसहचारः गृहीतो भवेत्। व्यतिरेकस्य सहचारस्याग्रहे चास्य कारणत्वरूपं सामर्थ्यं नान्येन विधिना यत्नशतैरपि ज्ञातुं शक्यते।[७८] येषु सत्सु कार्यं भवत्येव, असत्सु च कार्यं नैव भवति तदतिरिक्तस्य कारणत्वस्वीकारे तु विधिनैवं सर्वत्र हेतूनामनवस्थैवापतेत्।[७९]

अपि च, यद् वस्तु कारणं भवति तद्वस्त्वेवाकारणमपि भवति, अवस्थाभेदात्। यथा च दण्डादिकं व्यापारवत् यदा भवति तदा कारणं भवति यदा च व्यापारहीनं भवति तदाऽकारणं भवति। यदयमीश्वरनामकं वस्तु, सदैवैकरसमेव भविष्यति तद्यथा प्रलयकालीनायामवस्थायां भवति तदा तत् कारणं न भवति, तथैव सृष्टिकालीनायां कारणताया अवस्थायामपि भवति। न तत् व्यापारादिकं धारयति। अतः नास्तीश्वरः कारणं क्षित्यादेः।[८०] शस्त्रसम्बन्धात् यदा चैत्रस्य व्रणं भवति तदा व्रणं प्रति शस्त्रस्यैव कारणता तस्यैव व्यापारवत्त्वात्, यदा चौषधसम्बन्धात् व्रणरोहणं भवति तदा व्रणरोहणं प्रति व्यापारवत्त्वेनौषधस्यैव कारणता। न तु स्थाण्वादेः कारणता व्रणं प्रति व्रणरोहणं प्रति वा भवति।[८१] तथैवेश्वरस्यापि कारणता नैवाङ्गीकार्या जगत् प्रति। स्वभावभेदं विना व्यापारो नैव युज्यते।[८२] ईश्वरस्य तु स्वभावभेदो नैव सम्भवति यादृशं तत् सृष्टिकाले तथैव प्रलयकालेऽपि भूम्यादिः सीरव्यापारविशेषेण स्वभावपरिणामत एवाङ्कुरस्योत्पत्तौ हेतुर्भवति न तु स्वभावस्यापरिणामेन।[८३] अतः पृथक् अशक्तेषु येषु गुणः सम्भाव्यते तेषां संहतौ हेतुता। ईश्वरादेस्तु सदैकरसतया न किमपि कार्यं प्रति कारणत्वं सम्भवति।[८४]

अपि च, ईश्वरे यदा सर्वकर्तृत्वं सिद्ध्येत् तदैवेश्वरे सर्वज्ञत्वसिद्धिः स्यात् यदा

च सर्वज्ञत्वं सिद्ध्येत् तदा च सर्वकर्तृत्वसिद्धिः स्यात्। अतः सर्वस्य कर्तृत्वेनेश्वरसाधनेऽन्योन्याश्रयोऽप्यापद्यते।[८५] ईश्वरीयकर्तृत्वस्यैव च खण्डितत्वात् सर्वज्ञत्वादिकमपि निषिद्धमेव। यदि च पूर्वोक्तदोषेभ्यः साधनानि दृष्टानि मा भवन्तु अस्तु पूर्वोक्तेभ्य अनुमानेभ्य तनुगिरिप्रभृतीनां कर्तृसिद्धिः तथाप्यसौ यः एवैकस्य हेतुः स एवान्यस्यापीति नैव निश्चितम् प्रतिकार्यम् भिन्नस्यापि कर्तुः सम्भावना सम्भवति यथा च प्रासादादयः बहुभिः कर्तृभिः क्रियन्त इति। अतो नैकः कर्ता सम्भवति।[८६]

अतोऽनेन प्रकारेण नैवेश्वरस्य सिद्धिः सम्भवति अतः बौद्धानामयं सिद्धान्त एवाङ्गीकार्यः-यथा जन्याद्बीजाज्जन्योऽङ्कुर उत्पद्यते तथैवानित्येभ्यः सर्वं कार्यमनित्यमेव जायते। यस्माद्धेतोः भावानामुत्पत्तिद्वितीयक्षणे निवृत्तिः सञ्जायतेऽतः भावानां नित्यता न भवति। यस्माद्धेतोः भावः प्रवर्त्ततेऽतः उच्छेदो न जायते भावानाम्।[८७] अनया रीत्याऽनित्या एव समे भावाः सन्ति नैव किञ्चिन्नित्यमपि वस्तु विद्यते इति नास्तीश्वरस्य सत्ता।

**अदृष्टाधिष्ठातृतयाऽपि नेश्वरसिद्धिः**

लोकेऽस्मिन् जीवात्मा विविधानि पुण्यानि पापानि चाचरति किन्तु तस्य फलमत्र नैवोपलभ्यते, जन्मान्तरे तस्य फलमुपलभ्यते। तत्राऽयं प्रश्नः समुदेति यत् अस्मिन् जन्मनि यत्कर्माचरितं तत्तु विनष्टमेव विनष्टात्तु कारणात् नैव किञ्चित् फलमुत्पद्यते। तदैव विनष्टात् कर्मणः किञ्चित् फलमुत्पत्तुं शक्नोति यदा कश्चिद्व्यापारः उत्पन्नः स्यात् स च व्यापारः फलनिष्पत्तिपर्यन्तं च स्थायी भवेत्।[८८] अतोऽदृष्टस्य कल्पना क्रियते। तच्चादृष्टमचेतनम्। अचेतनञ्च चेतनाधिष्ठितमेव फलं जनयति अतः (फलजनकम्) अदृष्टं चेतनाधिष्ठितं अचेतनत्वे सति फलजनकत्वात् अचेतनस्य च चेतनाधिष्ठितस्यैव फलजनकत्वात् वास्यादिवत् अनेनानुमानेन चेतनाधिष्ठितत्व-सिद्धिः। चेतनाधिष्ठितत्वसिद्धौ च स चेतन ईश्वर एव सम्भवति इति रीत्येश्वरसिद्धिः। परन्त्वत्र प्रश्नो भवति यददृष्टसद्भावे एव किम् प्रमाणम्? येन कर्मणाऽदृष्टमुत्पद्यते इत्युच्यते नैयायिकैः तत्रैव किम् प्रमाणम्? तत्र यागादीनाम् प्रथमं साफल्यमेव साधनीयमनन्तरञ्चादृष्टस्य सत्ता साधयितुं शक्यते। तत्र यागादीनां साफल्यसाधनाय कुसुमाञ्जलौ श्रीमदुदयनाचार्यैः-

**"विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा।**
**दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः॥"**[८९]

इति कारिकया यागादौ प्रवृत्तिरेव स्वर्गादिफलकत्वे यागादीनां प्रमाणतयोपस्थाप्यते। अत्र बौद्धः यागादीनां स्वर्गादिहेतुत्वमेव नाङ्गीकरोति। सः वक्ति यदि यागादौ प्रवृत्तित एव यागादीनां स्वर्गादिहेतुत्वमङ्गीकरोषि तर्हि चैत्यवन्दनादीनामपि स्वर्गादिहेतुत्वमङ्गीक्रियताम्। एतच्च सर्वेष्वागमेषु समानमेवास्ति। न चैतत् वक्तुं शक्यते अत्र प्रवृत्तितः अस्यैव प्रामाण्यम्।[९०] अतो यागादीनां स्वर्गादिहेतुत्वे नास्ति प्रमाणम् यमाश्रित्य यागादीनां स्वर्गादिहेतुत्वं साधयितुम् शक्यम्।

अपि च पक्षे हेतोरभावात् स्वरूपासिद्धिः, नैयायिकानां हेतुरस्ति अचेतनत्वे सति फजलनकत्वात्। अत्र चादृष्टे पक्षीकृते तत्राचेतनत्वरूपहेतुविशेषणांशस्यासत्त्वात् हेतोरसत्त्वात् स्वरूपासिद्धिः। अदृष्टस्य बौद्धमते चेतनत्वस्वीकारात्।[९१] अदृष्टमेवात्र कर्मपदेनोच्यते। कर्म यदि स्वयमेव चेतनारूपम् तदा परचेतनासाधनं निरर्थकमेव भवति।[९२] अतोऽधर्मस्य धर्मस्य च फलं जीवः ईश्वरादृतेऽपि भोक्तुं समर्थोऽतः ईश्वरस्य कारणता नैवाङ्गीकरणीया जीवफलभोगं प्रति।[९३] यदेतदुच्यते जीवः ईश्वरप्रेरितः स्वर्गं वा नरकं वा गच्छति नैतदपि साधुतां भजते। केनचिदन्येन सत्त्वेन नैव नेयस्य जीवस्य हीनस्थानपरिग्रहोऽपितु आत्मस्नेहवतो जीवस्य सुखप्राप्तिदुःखत्यागवाञ्छयैव हीनस्थानपरिग्रहो भवति।[९४] अतोऽदृष्टाधिष्ठातृतयापि नैवेश्वरस्य सिद्धिः कर्तुं शक्यते नैयायिकेन बौद्धं प्रति।

### सम्प्रदायप्रवर्त्तकत्वेन वेदकर्तृतया वा नैवेश्वरसिद्धिः

लोके कम्बुग्रीवादिमतो घटसंज्ञा। एवमेवान्येषामपि समेषां वस्तूनां काचित् संज्ञा विद्यते। सैषा संज्ञा केन कृता न तावत् मनुष्येन सर्गादौ मनुष्याणामज्ञत्वात्। अतः सा संज्ञा भगवतैव कृतेति निश्चितं भवति। अत्रानुमानप्रयोग इत्थं भवति–"पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वादाधुनिकलिप्यादि व्यवहारवत्"[९५] बौद्धाः अत्र वदन्ति यन्नास्माकम् मते प्रलये लुप्तविज्ञानस्मृतयः पुरुषाः सन्ति येषां प्रबोधनाय पटादिसम्प्रदायव्यवहारप्रयोक्तुः कस्यचिदीश्वरस्यावश्यकता भवेत्। किन्तु आभास्वरादिषु स्पष्टज्ञानातिशययोगिषु देवनिकायेषूत्पद्यन्ते।[९६] ये तु प्रतिनियतनिरयादिविपाकसंवर्तनीयकर्माणः ते लोकधात्वन्तरेषूत्पद्यन्ते। अतः विवर्त्तकालेऽपि तत एवाभास्वरादेश्च्युत्या इहालुप्तज्ञानस्मृतय एव सम्भवन्ति। अतः नास्त्यावश्कता सम्प्रदायव्यवहारप्रयोजकस्य। अपि च, योऽयमीश्वरः भवता नैयायिकेन स्वीक्रियते स तु अशरीरी एव। अशरीरित्वादस्य मुखराहित्यं स्फुटम् एव। मुखरहितस्योपदेष्टृत्वस्वीकरणन्तु नैव श्रद्धागम्यं भवति। अस्याशरीरित्वन्तु धर्माधर्मराहित्यात् नैयायिकैरपि स्वीकरणीयमेव।[९७] अत ईश्वरस्योपदेष्टृत्वासम्भवात्

पटादिव्यवहारप्रवर्त्तकत्वमस्य नाङ्गीकर्तुं शक्यत इति कुत ईश्वरसिद्धिः सञ्जायेत? एषाऽऽपत्तिरीश्वरस्य वेदप्रणेतृत्वस्वीकारेऽप्यायाति। अतोऽस्य वेदप्रणेतृत्वमप्यसिद्धम्।

अपि च, ईश्वरस्य नित्यत्वं स्वीक्रियते नैयायिकेन, नित्यस्य च प्रामाण्यं स्वीकर्तुं न शक्यते। यतो हि सर्वथैव समर्थः सः सर्वमपि वस्तुजातमेक-दैवोत्पादयिष्यति।[९८] नित्यस्य पदार्थस्य प्रामाण्यं नैवाङ्गीकर्तुं शक्येत यतो हि तदुत्पत्तिमदेव भवति, साधनसापेक्षमेव भवति प्रामाण्यम्। अतः ईश्वरस्य प्रामाण्यं नैवाङ्गीकर्तुं शक्यते। शक्यते च बुद्धस्य प्रामाण्यमङ्गीकर्त्तुं तत्प्रामाण्ये साधनानां तायित्वादीनां निर्देशात्।[९९]

अपि च, वेदस्याप्रामाण्यमेवाऽस्ति यतो हि वेदेषु काममिथ्याचारप्राणि-हिंसाऽसत्यदुर्भणत्वानुदात्तत्वक्लिष्टत्वदुःश्रवत्वादयो नास्तिकवचःसु दृश्यमानाः दोषाः स्पष्टमेव दृश्यन्ते।[१००] तथा हि गोसवादौ काममिथ्याचारोपदेशः क्रियते। अश्वमेधादौ प्राणिवधोपदेशः क्रियते। एवं दुर्भणत्वादिदोषैश्च दुष्टत्वात् वेदस्याप्रामाण्यमेव स्वीकरणीयम्। एवं रीत्या वेदप्रणेतृतयाऽपि नेश्वरस्य सिद्धिः सम्भाव्यते, वेदानाम-प्रामाण्येन लौकिकाप्रामाणिकपुरुषप्रणीतत्वस्यैव निश्चयात्।

**निष्कर्षः**

एवं विवेचनेन स्पष्टं भवति यत् न्यायाभिमतेश्वरः बौद्धदर्शने खपुष्पवदलीक एव। सोऽयमीश्वरः बौद्धदर्शने नैव पारमार्थिकीं सत्तां धारयति न वा सांवृतिकीं सत्तां धारयति।[१०१] एवमीश्वरसत्तायां खण्डितायां तस्येशस्य सर्वज्ञत्वादिकानि विशेषणान्यपि खण्डितानि भवन्ति। यद्यपि बौद्धदर्शने बुद्धस्य सर्वज्ञत्वं स्वीक्रियते कैश्चिद्दार्शनिकैः।[१०२] परन्तु बुद्धस्यापि सर्वज्ञता नास्ति बुद्धेन स्वत एव स्वकीयायाः सर्वज्ञतायाः निराकृतत्वात्।[१०३] वस्तुतो बुद्धस्य सर्वज्ञता अस्मिन्नर्थे नासीत् यत् सर्वदा सर्वप्रकारेण च संसारस्य सर्वान् विषयान् जानाति स्मासौ। बुद्धस्य सर्वज्ञताऽस्मिन्नेवाऽर्थे यत् ध्यानेन कमपि विषयं ज्ञातुमसौ समर्थ आसीत्।[१०४] बौद्धदर्शने या सर्वज्ञस्य धारणाऽऽयाता सा जैनदर्शनस्य प्रभावादेव। सिद्धान्ततः बौद्धदर्शने न वा कस्यचित् सर्वज्ञस्य किञ्चिदपि स्थानम्, न वा कस्यचिदीश्वरस्य किञ्चित् प्रयोजनम्।

## पादटिप्पणी

१. म० नि० १/४/८

२. बौ० द० (राहुल सांकृत्यायन) पृ० ३३

३. अं० नि० ३/१/३४
४. दी० नि० पथिकसुत्त ३/१
५. दी० नि० केवट्ट सुत्त ।।११।।
६. "अयं भिक्खवे, केवलो परि पुरो बालधम्मो" म० नि० १/१/२
७. मि० प्र० पृ० १९-२१
८. तदेव पृ० ५७
९. तदेव पृ० ५९
१०. प्रत्यक्षसिद्धं बाह्यार्थमसौ वैभाषिकोऽब्रवीत्। सर्वसिद्धान्तसङ्ग्रहः बौद्धपक्षप्रकरणम्।
११. बुद्ध्याकारानुमेयोऽर्थो बाह्यः सौत्रान्तिकोदितः।। तदेव
१२. विज्ञप्तिमात्रमेवैतदसदर्थावभासनात्।
यद्वत् तैमिरिकस्यासत् केशोण्ड्रूकादिदर्शनम्।। विज्ञप्तिमात्रतासिद्धिः, श्लो० १
१३. नापि बुद्धिरपीत्याहः वादी माध्यमिकः किल। स० सि० सं० बौ० प० प्र०
१४. तत्त्वसङ्ग्रह आत्मपरीक्षा
१५. इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् १/१/१० न्यायसूत्रम् एवं भाष्यम्।
१६. प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः।। ५० कारिकावली।
१७. आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्।। ४७ कारिकावली
१८. अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः।। १५० कारिकावली
१९. क्वचित्समाश्रितत्वं च यदीच्छादेः प्रसाध्यते।
तत्र कारणमात्रं चेदाश्रयः परिकल्प्यते।। १९१ ।।
इष्टसिद्धिस्तदाधारस्त्वाश्रयश्चेन् मतस्तव।
तदापि गतिशून्यस्य निष्फलाधारकल्पना।। १९२ ।।
आश्रयो बदरादीनां कुण्डादिरुपपद्यते।
गतेर्विबन्धकरणाद् -------।।१९३।। तत्त्वसङ्ग्रहः
२०. न तावदिह तादात्म्यं भेदाङ्गीकरणात् तयोः।
कार्यकारणता नापि यौगपद्यप्रसङ्गतः।। २०९।। तत्त्वसङ्ग्रहः
"एतेनेच्छाद्वेषप्रयत्नसुखदुःखज्ञानादीनि यान्यात्मलिङ्गत्वेन परैरुक्तानि, तानि प्रतिषिद्धानि द्रष्टव्यानि, सम्बन्धासिद्धेः"-कमलशीलकृत त० स० पञ्जिका तत्रैव
२१. भारतीयदर्शन की रूपरेखा, पृ० २००
२२. मयेतिप्रति सन्धानमविद्योपप्लवादिकम्
क्षणिकेष्वपि भावेषु कर्त्रेकत्वाभिमानतः।।१९५।। तत्त्वसङ्ग्रहः
२३. भावस्य नास्पर्शवतः प्रेरणा नाम जायते।
तस्माद्देहस्य चेष्टायाः कर्ता जीवो न जायते।। ५ चतुःशतकम्

२४. यश्चाप्याह "कर्त्तुः प्रसिद्धिः करणप्रसिद्धेः" इति तदसिद्धम्, नहि चक्षुरादीनां परमार्थेन करणत्वं सिद्धम् विज्ञानोत्पत्तौ सर्वेषां हेतुभावस्य तुल्यत्वात्। स्वेच्छामात्रपरिकल्पितत्वाच्च कर्तृकरणव्यवहारस्येति।
कर्तृत्वसाधने सिद्धसाध्यता, परिकल्पितस्यानिरस्तत्वात्। परमार्थिककर्तृत्वसाधने-ऽनैकान्तिकता, तथाभूतेन कर्त्रा क्वचिदपि चक्षुरादीनां प्रतिबन्धासिद्धेः।-कमलशील कृत त०सं०पंजिका पृ० ११५

२५. अन्यैः प्रत्यक्षसिद्धत्वमात्मनः परिकल्पितम्।
स्वसंवेद्यो ह्यहङ्कारस्तस्यात्मा विषयो मतः।।२१२।।
तदयुक्तम्, अहङ्कारे तद्रूपानवभासनात्।।
न हि नित्यविभुत्वादिर्निर्भासस्तत्र लक्ष्यते।।२१३।।
गौरवर्णादिनिर्भासो व्यक्तं तत्र तु विद्यते।
तत्स्वभावो न वात्मेष्टो नायं तद्विषयस्ततः।।२१४।। तत्त्वसङ्ग्रहः

२६. तस्मादिच्छादयः सर्वे नैवात्मसमवायिनः।
क्रमेणोत्पद्यमानत्वात् बीजाङ्कुरलतादिवत्।।२१७।। तत्त्वसङ्ग्रहः

२७. अहिंसा नित्य आत्मा न को हेतुरिह मन्यते।
सर्वथा घुणतो वज्रो रक्षणीयो न जायते।।७।। चतुःशतकम् पृ० ४९

२८. परस्तर्केति किं नाहमहं सर्वगतो यदि।
तेनैवावरणं नाम न तस्योपपद्यते।।११४।। तदेव पृ० ५४

२९. क्रियावाञ्छाश्वतो नास्ति नास्ति सर्वगते क्रिया।
निष्क्रियो नास्तितातुल्यो नैरात्म्यं किं न ते प्रियम्।।१७।। तदेव पृ० ५५

३०. नित्यानां प्रतिषेधेन नेश्वरादेश्च सम्भवः।।१८५।। प्र०वा०।

३१. कर्मजं लोकवैचित्र्यं चेतना मानसं च तत्।। अभिधर्मकोशः ४/१

३२. स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु।
इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोऽथवा।।१२।। प्र० वा०।

३३. सर्वोत्पत्तिमतामीशमन्ये हेतुं प्रचक्षते।
नाचेतनः स्वकार्याणि किल प्रारभते स्वयम्।। बो० चं० पं० पृ० ५४५

३४. अथ लोकप्रतीतिमात्रव्यवस्थापितं तदुपादीयते। तदप्ययुक्तम्। कल्पनारचित-मात्रस्यासाधनत्वात्। प्र० वा० वार्तिकालङ्कार, पृ० ९३

३५. अणुसंहतिमात्रं च घटाद्यस्माभिरिष्यते।। ७८ ।। तत्त्वसङ्ग्रहः

३६. स्थित्वा प्रवृत्तिरणवादेर्न सिद्धा क्षणभङ्गतः ।। ८३ ।। तत्त्वसङ्ग्रहः

३७. पृ० ६६ त० सं० पंजिका

३८. तत एवेश्वरः कर्तेत्येतत् दूरतरं मतम्।
व्यञ्जकश्च प्रदीपादिरचेतनतया गतः ।। ३२२ ।।

अचेतनाद् व्यक्तिरिति कथमीश्वरसाधनम्
चेतनाधिष्ठितः सोऽपीत्यत्र प्राक्कृतमुत्तरम्।। ३२३ ।। प्र० वा० वार्तिकालङ्कारः १, पृ० ९७

३९. संस्थानसङ्गतत्वादिति चायमप्यहेतुः। नहि संस्थानं सकलमेव पुरुषपूर्वकं दृष्टम्। बीजादिकारणविशेषमात्रेणापि तस्य दृष्टेः। वृक्षादिसंस्थानवत्।। तत्र यथा वृक्षादीनां हि संस्थानमचिद्धेतुसमन्वयि। तथा घटादि तद्वत् स्यात् प्रधानाद्यप्रवर्त्तितम्।।२७७।। नहि कुलालादिस्तस्य संस्थानादेर्जनकः। न खलु बीजविजातीयं संस्थानमुत्पादयितुं सुशिक्षितोऽपि चेतनावान् समर्थः। प्र० वा० वार्तिकालङ्कारः १ पृ० ८७

४०. सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।
सन्निवेशादि तद् युक्तं तस्माद् यदनुमीयते।। प्र० वा० १/१३
सन्निवेशविशिष्टत्वं यादृगेव कुलादिषु।
कर्त्तर्य्यनुपलब्धेऽपि यद्दृष्टौ बुद्धिमद्गति ।। ६१ ।।
तादृगेव यदीक्ष्येत तन्वगादिषु धर्मिषु।
युक्तं तत्साधनादस्मात् यथाभीष्टस्य साधनम् ।। ६२ ।। तत्त्वसङ्ग्रहः

४१. अन्वयव्यतिरेकाभ्यां यत्कार्यं यस्य निश्चितम्।
निश्चयस्तस्य तद्दृष्टाविति न्यायोव्यवस्थितः ।। ६३ ।। तत्त्वसङ्ग्रहः

४२. अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित्।
घटादेः करणात्सिध्येद् वल्मीकस्यापि तत्कृतिः ।। १५ ।। प्र०वा० १

४३. प्र० वा० वार्तिकालङ्कार, पृ० १०१

४४. बुद्धिमत्पूर्वकत्वञ्च सामान्येन यदीष्यते।
तत्र नैव विवादो नो वैश्वरूप्यं हि कर्मजम् ।। ८० ।।
नित्यैकबुद्धिपूर्वत्वसाधने साध्यशून्यता।
व्यभिचारश्च सौधादेर्बहुभिः करणेक्षणात् ।। ८१ ।। तत्त्वसङ्ग्रहः
तथा हि सौधसोपानगोपुराट्टालकादयः।
अनेकानित्यविज्ञानपूर्वकत्वेन निश्चिताः ।। ७३ ।। तत्त्वसङ्ग्रहः

४५. अत एवायमिष्टस्य विघातकृदपीष्यते ।। ७४ ।। तत्त्वसङ्ग्रहः

४६. ईश्वरो जगतो हेतुर्वद कस्तावदीश्वरः।
भूतानि चेद्भवत्येवं नाममात्रेऽपि किं श्रमः ।। ११९ ।।
बोधिचर्यावतारः नवम परिच्छेदः

४७. नाकाशमीशोऽचेष्टत्वान्नात्मा पूर्वनिषेधतः ।। १२१ ।। तदेव

४८. बो० च० पं० पृ० ५४७

४९. कच्चिदिच्छसि ईश्वरो जगत्यन्तर्भूतोऽनन्तर्भूतो वेति। स चेदन्तर्भूतः तेन मुक्तो जगत्सृजतीति न युज्यते। स चेदनन्तर्भूतः तेन मुक्तो जगत्सृजतीति न युज्यते। योगाचारभूमिः, पृ० १४५

५०. योगाचारभूमिः पृ० १४५

५१. यत्तदीश्वरस्य निर्माणसामर्थ्यं तत्कच्चिदिच्छसि कर्मयोगहेतुकं वाहेतुकं वेति। तत् चेत् कर्मयोगहेतुकं तत्कर्मयोगहेतुकं जगदिति न युज्यते। तत् चेदहेतुकं तेन तदहेतुकं जगदिति न युज्यते। पृ० १४४-१४५ योगाचारभूमिः

५२. करोत्यनिच्छन्नीशश्चेत् परायत्तः प्रसज्यते।
इच्छन्नपीच्छायत्तः स्यात् कुर्वतः कुत ईशता ।। १२६ बो०च० नवमपरि०

५३. क्रीडार्था तस्य वृत्तिश्चेत्प्रेक्षापूर्वक्रिया कुतः।
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते ।। २६२ ।। प्रमाणवार्तिकालङ्कारः, १

५४. अज्ञानां रागिणां क्रीडारसः शुद्धात्मनां नहि।
किञ्चिन्मात्रविशुद्ध्यापि नार्यः क्रीडासु युज्यते ।। २९३ ।। तदेव

५५. नरकादिभयादन्यो नार्यः क्रीडासु युज्यते।
तस्य त्वेतद् भयं नास्ति कस्मात् ताभ्यो निवर्तते ।। २९४ ।।
प्रमाणवार्तिकालङ्कार, १

५६. क्रीडार्था तस्य वृत्तिश्चेत् क्रीडायां न प्रभुर्भवेत्।
विचित्रक्रीडनोपायव्यपेक्षातः शिशुर्यथा ।। १६१ ।। तदेव

५७. क्रीडासाध्या च या प्रीतिः तस्या यदपि साधनम्।
तत्सर्वं युगपत् कुर्याद्यदि तत्कृतिशक्तिमान् ।। १६२ ।। तदेव
क्रमेणापि न शक्तः स्यान्नो चेदादौ न शक्तिमान्।
नाविभक्तस्य युज्येते शक्त्यशक्ती हि वस्तुनः ।। १६३ ।। तदेव

५८. अथ स्वभावतो वृत्तिः सर्गादावस्य जायते।
पावकादेः प्रकृत्यैव यथा दाहादिकर्मणि ।। १६४ ।।
यद्येवमखिला भावा भवेयुर्युगपत्ततः।
तदुत्पादनसामर्थ्ययोगिकारणसन्निधेः ।। १६५ ।।
स्वहेतुबलसम्भूता नियता एव शक्तयः।
असर्वकालभाविन्यो ज्वलनादिषु वस्तुषु ।। १६६ ।।
अन्यथा यौगपद्येन सर्वं कार्यं समुद्भवेत्।
तेषामपि न चेदेष नियमोऽभ्युपगम्यते ।। १६७ ।। तत्त्वसङ्ग्रहः

५९. अथानुकम्पया कुर्यादेकान्तसुखितं जगत् ।। १५६ ।।
व्याधिदारिद्र्यशोकादिविविधायासपीडितम्।
जनं तु सृजतस्तस्य काऽनुकम्पा प्रतीयते ।। १५७ ।। तत्त्वसङ्ग्रहः

६०. तत्कृपाक्रमतोऽस्य विशेषो नारकादिरचनादकृपः किम् ।। ३४९ ।।
प्रमाणवार्तिकालङ्कारः, १

६१. कर्मैव लोकस्य तथेति तत्कृदशक्तिरस्मिन्निति नार्यताऽस्य।
आर्यस्य कर्तुं यदि साध्वशक्तिरसाधुकृत्यं किमसौ विधाता ।। ३५० ।। तदेव

६२. बो० च० पं० पृ० ५४८

६३. अथाधर्ममसौ न कारयति। अधर्मकारिणन्तु तत्फलमनुभावयति। तदन्येश्वरवत्।
तदप्यसारम्-
अशक्त्यान्येश्वराः पापप्रतिषेधं न कुर्वते।
न त्वत्यन्तमशक्तेभ्यो व्यावृत्तमतिरिष्यते ॥ २५८ ॥ प्रमाणवार्त्तिकालङ्कारः,१

६४. अथाशक्त एवासौ तथा सति
नेश्वरेण कृतं सर्वमिति वक्तव्यमुच्चकैः।
पापवत्स्वार्थकारित्वाद्धर्मादिरपि किन्ततः ॥ २५९ ॥ प्रमाणवार्तिकालङ्कारः,१

६५. सृष्टेः प्रागनुकम्प्यानामसत्त्वे नोपपद्यते ॥ १५८॥ तत्त्वसङ्ग्रहः

६६. तददृष्टव्यपेक्षायां स्वातन्त्र्यमवहीयते ॥ १५९ ॥
पीडाहेतुमदृष्टञ्च किमर्थं स व्यपेक्षते। तदेव

६७. ईश्वरतः कर्मण एव महत्सामर्थ्यमेवं प्रकाशितं स्यात्। तद्वरं कर्मैव पर्युपास्यं यत्सामर्थ्येन समाकृष्यमाणो महेश्वरोऽपि स्थातुमसमर्थः तस्मादिदमव्याहतमेव-
“नमः सत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति पृ० ५४६-५४७ बो० च० पं०

६८. यथाकथञ्चिद्वृत्तिश्चेद् बुद्धिमत्तास्य कीदृशी।
नासमीक्ष्य यतः कार्यं शनकोऽपि प्रवर्तते ॥ १६९ ॥ तत्त्वसङ्ग्रहः

६९. नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः।
गगनाम्भोजवत् सर्वमन्यथा युगपद् भवेत् ॥ ८७ ॥ तत्त्वसङ्ग्रहः

७०. प्रसङ्गसाधनं चेदम् तेनाश्रयासिद्धता न चोदनीया ॥ पृ० ६९ त० सं० पं०

७१. अथवा-अर्थकथनमात्रमेतत्। एवं तु प्रसङ्गसाधनं कर्तव्यम्-यदविकलकारणं तद्भवत्येव, यथा-अन्त्यावस्थाप्राप्तायां सामग्र्यामविकलकारणो भवन्नङ्कुरः। अविकलकारणं च सर्वमीश्वरहेतुकं जगदिति युगपद्भवेत्॥ तदेव।

७२. पृ० ६९-७० त० सं० पंजिका

७३. पृ० ७० तदेव

७४. पृ० ६९ त० सं० पंजिका

७५. तदेव

७६. ये वा क्रमेण जायन्ते ते नेश्वरहेतुकाः।
यथोक्तसाधनोद्भूता जडानां प्रत्यया इव ॥ ८८ ॥
तेषामपि तद्भूतौ विफला साधनाभिधा। तदेव

७७. पृ० ७१ त० सं० पंजिका

७८. नित्यस्याव्यतिरेकित्वात् सामर्थ्यं च दुरन्वयम्॥ २५ ॥ प्र० वा०, १

७९. येषु सत्सु भवत्येव यत् तेभ्योऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिः ॥ २६ ॥ प्र० वा० १,

८०. यथा तत् कारणं वस्तु तथैव तदकारणम्।
यदा तत् कारणं केन मतं नेष्टमकारणम् ॥ २३ ॥ प्र० वा० १,

८१. शस्त्रौषधादिसंबन्धाच्चैत्रस्य व्रणरोहणे।
असम्बन्धस्य किं स्थाणोः कारणत्वं न कल्प्यते ॥ २४ ॥ प्र० वा० १
८२. स्वभावभेदेन विना व्यापारोऽपि न युज्यते ॥ २५ ॥ प्र० वा० १
८३. स्वभावपरिणामेन हेतुरङ्कुरजन्मनि।
भूम्यादिस्तस्य संस्कारे तद्विशेषस्य दर्शनात् ॥ २७ । प्र० वा०१
८४. कर्तृत्वसिद्धौ सर्वज्ञत्वसिद्धिः पुनस्ततः।
कर्तृत्वमित्यवस्थायामत्रान्योन्याश्रयो महान् ॥ २५७ ॥ प्र० वार्त्तिकालङ्कारः, १
८६. यथोक्तदोषदुष्टानि माभूवन् साधनानि वा।
तथापि कर्तुर्नेकत्वं व्यभिचारोपदर्शनात् ॥ ९२ ॥ तत्त्वसङ्ग्रहः
८७. यथा हि कृतकाद्बीजाज्जायते कृतकोऽङ्कुरः।
अनित्येभ्यस्तथा सर्वमनित्यमेव जायते ॥ २४ ॥
यस्मात् प्रवर्त्तते भावस्तेनोच्छेदो न जायते।
यस्मान्निवर्त्तते भावस्तेन नित्यो न जायते ॥ २५ ॥ चतुःशतकम् दशमप्रकरणम्।
८८. चिरध्वस्तं फलायालं न कर्मातिशयं विना। न्या० कु० ९ का०
८९. न्या०कुसु० प्रथमस्तबक ८ कारिका
९०. एतत् सर्वागमेषु समानम् ॥ प्र० वार्तिकालङ्कारः, १, पृ० २१
९१. कर्मजं लोकवैचित्र्यं चेतनामानसं च तत् ॥ अभिधर्मकोशः ४/१
९२. कर्म चेच्चेतनारूपमस्ति तदा परचेतनासाधनं व्यर्थम् ॥
प्र० वार्तिकालङ्कारः, १, पृ ८२
९३. अधर्मस्य फलं भुक्ते लोकः किं नेश्वराद्विना।
विनापि यदि कस्तस्य कारणत्वं प्रकल्पयेत्॥२६०॥ प्र० वा० अलङ्कारः १, पृ० ८५
९४. अनन्यसत्त्वनेयस्य हीनस्थानपरिग्रहः।
आत्मस्नेहवतो दुःखसुखत्यागाप्तिवाञ्छया ॥ ८२ ॥ प्र०वा०
९५. न्या०कुसुमाञ्जलिः पञ्चमस्तबकः प्रथमकारिका पदात् पदस्य व्याख्या
९६. प्रलये लुप्तविज्ञानस्मृतयः पुरुषा न नः।
आभास्वरादिसम्भूतेस्तत एवेह सम्भवात् ॥ ८४ ॥ तत्त्वसङ्ग्रहः
९७. विमुखस्योपदेष्टृत्वं श्रद्धागम्यं परं यदि।
वैमुख्यं वितनुत्वेन धर्माधर्मविवेकतः ॥ ८५ ॥ तत्त्वसङ्ग्रहः
९८. नित्यादुत्पत्तिविश्लेषादपेक्षाया अयोगता।
कथंचिन्नोपकार्यत्वादनित्येऽप्यप्रमाणता ॥ ११ ॥ प्र० वा० १,
९९. तद्वत् प्रमाणं भगवान् अभूतविनिवृत्तये।
भूतोक्तिः साधनापेक्षा ततो युक्ता प्रमाणता ॥ ९ ॥ तदेव
१००. काममिथ्याक्रियाप्राणिहिंसाऽसत्याभिधा तथा ॥ १७८६ ॥
दुर्भणत्वानुदात्तत्वक्लिष्टत्वाश्रव्यतादयः।
वेदधर्मा हि दृश्यन्ते नास्तिकादिवचस्स्वपि ॥ १७८७ ॥ तत्त्वसङ्ग्रहः

१०१. ततो न परमार्थोऽसावीश्वरो नापि संवृतिः ।। २४ ।।
प्र० वार्तिकालङ्कारः १, पृ० ७७

१०२. यः प्रतीत्यसमुत्पादं जगाद गदतांवरः।
तं सर्वज्ञं प्रणम्यायं क्रियते तत्त्वसङ्ग्रहः ।। ६ ।। तत्त्वसङ्ग्रहः

१०३. म० नि० २/३/१

१०४. मि० प्र०, पृ० ८२

## तृतीयोऽध्यायः ( भाग ग )

# जैनदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनम्

जैनदर्शनमपि नास्तिकदर्शनसंज्ञां प्राप्नोति भारतीयपरम्परायाम्। परन्तु चार्वाकसदृशी नास्तिकताऽस्य नास्ति। अस्य नास्तिकत्वं वेदप्रामाण्यानभ्युपगन्तृत्व- मात्रमेव। अन्ये सिद्धान्ताश्च वैदिकदर्शनेभ्यः साम्यं धारयन्ति। जैनदर्शनानुसारं न्यायाभिमतेश्वरस्यालोचनार्थं प्रथमं जैनदर्शनीया तत्त्वमीमांसाऽवगन्तव्या।

### जैनदर्शनीया तत्त्वमीमांसा

जैनदर्शने सप्ततत्त्वानि जीवाजीवास्त्रवबन्धसंवरनिर्जर मोक्षाः।[१] अत्रापि जीवाजीवयोः द्रव्यसंज्ञाऽपि भवति। जीवपदेनात्मेत्युच्यते। अजीवपदेन चानात्मेति। एकं चेतनमस्ति जीवः[२] अपरञ्चाचेतनम्। अत्र दर्शने ज्ञातुः सत्ता यावती निश्चिता विद्यते ज्ञेयस्यापि सत्ता तावत्येव निश्चिता। सत् पदार्थस्य किं लक्षणम्? अत्र विलक्षणं सत्पदार्थस्य लक्षणम् उत्पादव्ययध्रौव्ययुक्तं यत् तदेवात्र सत् पदेनोच्यते।[३] अस्याशयोऽयम्-यद्यपि सत् पदार्थः नित्यः तथापि तत्र विकारो दृश्यते ये च विकाराः उत्पद्यन्ते क्षीयन्ते च। परन्त्वत्र शंकेयं समुदेति यत्-यः पदार्थो नित्यः तस्मिन्नेव क्षणेऽनित्यः कथं भविष्यति? उत्पादव्ययध्रौव्ययुक्तस्यैव नित्यत्वं स्वीकृतं जैनदर्शने। सति चैवमेकस्यैव पदार्थस्य नित्यत्वमनित्यत्वञ्चापतितं भवति। तत्र जैनदर्शने समाधीयत एतत्–यत् तद्भावस्याव्ययः तद् एव नित्यत्वम्।[४] स्वकीयया जात्या प्रच्युतेरभाव एव नित्यत्वम्। तच्चात्राऽपि समानम्।

### ( १ ) जीवः

इदं जीवद्रव्यमेव दर्शनान्तरेषु आत्मपदेनोच्यते। अस्य सामान्यं लक्षणमुपयोगः,[५] उपयोगो नाम चैतन्यपरिणतिः। अतः चैतन्यमेवास्य लक्षणम् भवति। जीवाश्चानन्ताः सर्वे च स्वरूपतः समानाः नित्याश्च सन्ति। प्रत्येकं जीवः निसर्गतः अनन्तज्ञान-सम्पन्नोऽनन्तदर्शनसम्पन्नोऽनन्तसामर्थ्ययुक्तश्च स्वीक्रियते।[६] अमूर्त्तिकोऽयं रूपरस-गन्धस्पर्शाः पुद्गलधर्मा अस्मिन्नोपलभ्यन्ते। अत्रान्येभ्यः दर्शनेभ्यः जीवपरिमाणविषये

मतभेदः। अन्येषु दर्शनेषु कुत्रचिद्दर्शने जीवस्य सर्वव्यापित्वं स्वीक्रियते, कुत्रचिद्दर्शने जीवस्य सूक्ष्मत्वमणुरूपत्वञ्च स्वीक्रियते। अत्र जीवः सङ्कोचविकासशाली शरीर-मात्रपरिमाणोऽङ्गीक्रियते। जीवः यदा येन शरीरेण सम्बध्यते तदा तादृशपरिमाणवान् भवति। यथा दीपस्य प्रकाशः यादृशे कक्षे भवति तादृश एव तस्य प्रकाशस्य परिमाणो भवति। जीवोऽयं कर्त्ता भोक्ता स्वतन्त्रश्च। अस्य भेदौ द्वौ स्तः संसारस्थः मुक्तश्च।[७] सङ्कोचविकासशाली जीवः अत्र प्रमाणमेतदेव यत् जीवोऽयं महत्परिमाणवान् स्यात् तर्हि यथा स्वकीयेन शरीरेण मनसा च तस्य सम्बन्धः विद्यते तथैवान्येषामपि शरीरैरस्य सम्बन्धो विद्यत एव। अतः अन्यदीयसुखदुःखादीनामपि भानमावश्यकम्। एवमेव यदि जीवोयं सूक्ष्मश्चेत् तर्हि यत्र कुत्रचिदपि शरीरे घातादिवशाद् ज्ञानं नैवोत्पद्येत। उत्पद्यतेऽतः ज्ञायते यत् शरीरव्यापी। अयमात्मा स्वकीये शरीरे ज्ञानदर्शनादिस्वकीयैरसाधारणैः गुणैराधाररूपेणोपलभ्यते। यश्च यत्र सर्वत्रैव स्वकीयैरसाधारणैः गुणैराधाररूपेणोपलभ्यते स तत्र सर्वत्र प्रदेशे विद्यमानो भवति यथा देवदत्तगृह एव तत्र सर्वत्र चोपलभ्यमानः स्वकीयासाधारणभासुरत्वादिगुणः प्रदीपः। तथैवायमात्माऽपि। अतः देह एव सर्वत्र विद्यमानोऽयमात्मा।[८] आत्मनोऽसाधारणाः गुणाः ज्ञानदर्शनसुखादयः शरीरे सर्वाङ्गीणा एवोपलभ्यन्ते। अतः आत्मा शरीरपरिमाणवान् यदा हस्तिशरीरं प्राप्नोति तदा हस्तिशरीरस्य यादृशं परिमाणं तादृशं परिमाणमस्य भवति, यदा पिपीलिकाशरीरं प्राप्नोति तदा पिपीलिकाया यादृशं परिमाणं तादृशं परिमाणं प्राप्नोति। इति शरीरादिभ्यो विलक्षणोऽप्ययम् शरीरमात्रपरिमाणः इति सिद्धयति।

## (२) अजीवः

पुद्गलाकाशकालधर्माधर्माः अजीवसंज्ञामालभन्ते। एतेषु कालः एकप्रदेश-व्यापीति स्वीक्रियते। जगतोऽन्येषु समेषु पदार्थेषु विस्तारो भवति यश्चोपलभ्यते। अतस्ते बहुप्रदेशव्यापिनोऽङ्गीक्रियन्ते। सत्तां धारयन्तोऽस्तिपदेनोच्यन्ते, शरीर इव विस्तारसमन्विततया कायपदेन चोच्यन्ते। अतोऽस्तिकायसंज्ञाऽपि कालातिरिक्तानाम् जीवाजीवपदभाजाम्।

### (क) पुद्गलः

रूप, रस, गन्ध, स्पर्शवत्त्वम् पुद्गलसामान्यलक्षणम्।[९] यद् द्रव्यं स्कन्धावस्थायां पूरणं गलनञ्च प्राप्नोति तत् पुद्गलपदेनोच्यते। अभिप्रायोऽयं यत्-यद्द्रव्यमुपचयम पचयञ्च प्राप्नोति तत् पुद्गलपदेनोच्यते। पुद्गलद्रव्यं मूलरूपेण परमाणुरूपमेवास्ति। प्रत्येकं परमाणौ स्वभावतः एको रसः एकं रूपं एको गन्धः द्वौ स्पर्शौ च

तिष्ठन्ति।[१०] पुद्गलस्य परमाण्ववस्था स्वाभाविकः पर्यायः स्कन्धावस्था च विभावपर्यायः। रूपादय इव शब्दो पुद्गलस्य गुणो नास्ति, अपितु पुद्गलस्य परिणामविशेषः।[११] पुद्गला इमे नित्या अणुरूपाश्च। प्राणिनां शरीराणि, ज्ञानेन्द्रियाणि, मनांसि च सर्वाण्यप्यानुभविकानि वस्तूनि पुद्गलेभ्य एव निर्मितानि। एतेषु परमाणुषु स्वाभाविकी स्निग्धता रूक्षता च भवति, फलतः परस्परं बन्धो भवति।[१२] पुद्गलपरमाणवः स्वभावतो गतिशीलाः सन्ति।

**( ख ) आकाशम्**

आकाशं समस्तेभ्यः जीवाजीवादिभ्यो द्रव्येभ्यः स्थानं प्रददाति। अभिप्रायोऽयं यस्मिन् समस्तानि द्रव्याणि अवकाशं प्राप्नुवन्ति तद् एवाकाशपदेनात्र बोध्यते। अवकाशदानमेवास्यासाधारणो धर्मः। इदं सर्वव्यापकमखण्डञ्च। निष्क्रियमिदं रूपरसादिभिर्विरहितम्। अत्र न्यायदर्शनेन साकमेतदेवान्तरम् यन्न्यायदर्शन इदमाकाशम् शब्दसमवायिकारणम् परन्त्वत्र नेदं शब्दसमवायिकारणम्।

**( ग ) कालः**

समस्तद्रव्यानामुत्पादादिरूपपरिणमने सहकारि कालद्रव्यं भवति। अयं स्वयं परिवर्त्तयन् द्रव्याणामन्यानां परिवर्तने सहकारिकारणं भवति। सर्वत्र घटी, पल, विपल, रात्रिदिवसादिव्यवहारेषु निमित्तं भवति। अयं कालोऽप्यन्यद्रव्याणीवोत्पाद-व्ययध्रौव्यलक्षणः। वर्त्तना, परिणाम, क्रिया, परत्व, अपरत्वे कालस्यैव परिणमनम्।[१३]

**( घ ) धर्मः**

जैनदर्शने जीवोऽपि गतिमान्, पुद्गलाश्च गतिशालिनः इति स्वीक्रियते। जीवोऽयमूर्ध्वगतिशीलः गतिशीलस्य जीवस्य पुद्लानाञ्च सहकारिद्रव्यविशेषः धर्मसंज्ञां प्राप्नोति जले सञ्चरणशीलो मत्स्यः जलात्मकसहकारिकारणं विना तरणे समर्थो न भवति। जलं सहकारिकारणीभूतं तरणं प्रति। तथैव धर्मोऽपि जीवस्य पुद्गलस्य च गतिं प्रति सहकारिकारणम्। जीवं प्रेरयितुं सामर्थ्यं नास्ति धर्मस्य, परन्तु सहायतामात्रं विदधाति।[१४]

**( ङ ) अधर्मः**

अस्य कल्पना धर्मकल्पनाया विपरीता। जीवस्य पुद्गलानाञ्च स्थितिं प्रति कारणीभूतं द्रव्यं अधर्मद्रव्यम्। अयं जीवस्य पुद्गलस्य स्थितिं प्रति सहायकमात्रम्। आकाशस्य द्वौ विभागौ विद्येते-लोकाकाशः अलोकाकाशश्च। लोकाकाश एव जीवस्य पुद्गलानाञ्च सञ्चरणं भवति न त्वलोकाकाशे। आकाशस्यावकाशरूपत्वात्

लोकाकाश एव पुद्गलानाञ्जीवानाञ्च सञ्चरणं भवति, अत्र किञ्चिन्नियामकं नास्ति। जीवानामूर्ध्वगतिशीलतयाऽलोकाकाशेऽप्येतेषां सञ्चरणं सम्भवति। आकाशे प्रदेशभेदे सत्यपि नास्ति स्वभावभेदः। अतः आकाशः स्वयं जीवानां पुद्गलानाञ्च गतिनियन्त्रणं कर्तुं सामर्थ्यं नैव धारयति। एतदर्थं धर्माधर्मद्रव्ययोः सत्ताऽत्र स्वीक्रियते। एते द्रव्य एव जीवपुद्गलानां गतिनियन्त्रणं कुरुतः। लोके तु धर्माधर्मयोरस्तित्वं साधारणरूपेणैव विद्यते किन्तु लोकाकाशस्य सीम्नि नियन्त्रकरूपेणैवानयोरस्तित्वं विद्यते। अनयोः परिणामः लोकाकाशपरिमितः।[१५] रूपरसादिभिर्विरहितावेतौ निष्क्रियावमूर्तिकौ च स्तः।

न्यायदर्शने धर्माधर्मौ पुण्यपापपर्यायवाचिनौ शुभाशुभकर्मजन्यौ गुणविशेषौ। परन्त्वत्र स्वतन्त्रे द्रव्ये। असंख्याताः प्रदेशाः सन्त्यनयोः। अतः बहुप्रदेशवत्त्वादस्तिकाय-पदेनापि कथनं भवति।

## (३) आस्रवः

कर्माणि त्रिविधानि भवन्ति–कायिकं, वाचिकं, मानसिकं चेति। एतत्त्रिविध-कर्मनिमित्तः काययोगः, वाग्योगः, मनोयोगश्च आस्रवपदेन बोध्यन्ते।[१६] शरीरसंवलन-निमित्तमात्मप्रदेशसञ्चलनं काययोगः। वाक्परिणामाभिमुखमात्मप्रदेशसञ्चलनं वाग्योगः। मनः परिणामाभिमुखमात्मप्रदेशसञ्चलनं मनोयोगः। एते त्रयो योगाः आस्रवपदवाच्याः। यथा प्रणाल्या जलमास्रवति तथैवात्मप्रदेशसञ्चलनेन बहिःस्थान् कर्मपुद्गलान् जीव उपादत्ते। अत एवैत आस्रवपदवाच्याः।[२७] अयमास्रवो द्विविधः शुभाशुभभेदात्। अहिंसादिः शुभः काययोगः। सत्यभाषणं मितभाषणं स्वाध्यायादिः शुभो वाग्योगः। अर्हत् सिद्धाचार्योपाध्यायसाधुषु भक्तिः तपसि रुचिः, श्रुतस्य शास्त्रस्य शिक्षणाभिरुचिः शुभो मनोयोगः। प्राणिहिंसा, चौर्यप्रतिषिद्धमैथुनादिरशुभः काययोगः। अनृतकटुदुर्वच-नादिरशुभो वाग्योगः। ईर्ष्याऽसूयादिरशुभो मनोयोगः। एत एवास्रवपदवाच्याः। अत्र शुभ आस्रवः शुभस्य, कल्याणस्य च कारणम्। अशुभ आस्रवोऽशुभस्य दुःखादीनां च कारणं भवति। साररूपेण कायिकवाचिकमानसिककर्मणां यः प्रभावो जीवे भवति स एवास्रवपदेनोच्यते।

## (४) बन्धः

क्रोध, मान, मायालोभाख्यकषायविशिष्टत्वादात्मा (जीवः) यत् कर्मपुद्गलानादत्ते स एव बन्धः।[१८] बन्धं प्रति कारणीभूताः सन्ति मिथ्यादृष्टि, अविरति, योग, कषाय, प्रमादाःपञ्च।[१९] मिथ्यादृष्टिर्द्विविधा भवति मिथ्याकर्मण उदये जाते परकृतोपदेशं विना स्वभावत एव जीवाजीवादिषु तत्त्वभूतार्थेषु

जायमानाऽश्रद्धा एका मिथ्यादृष्टिः। अपरा मिथ्यादृष्टिः परोपदेशोत्पन्ना। अविरतिर्नाम न विरतिः, विरतिश्चाभ्युपेत्याकरणम्। तथा विरतिर्नाम पृथिव्यप्तेजोवायुस्थावर-जङ्गमरूपषड्विधपुद्गलास्तिकायस्यानुपादानरूपा षडिन्द्रियसंयमनरूपा च। तर्ह्यविरतिः पृथिव्यादिषड्विधपुद्गलास्तिकायस्योपादानरूपा षडिन्द्रियासंयमनरूपा भवति। योगः कायिक, वाचिक, मानसिकपुण्यपापप्रवृत्तिरूपः। क्रोध,मान, माया, लोभादयः कषायपदवाच्याः। प्रमादोऽध्यात्ममार्गेऽनुत्साहः।[२०]

## (५) संवरः

आस्रवनिरोधः संवरपदेनोच्यते।[२१] संवरस्य ग्रहणं अर्थात् आस्रवस्य निरोधः जीवं बन्धपरिग्रहणाद्रक्षति मुक्तिं प्रति चोन्मुखीकरोति। अयं संवरः आस्रवनिरोधः गुप्ति, समिति, धर्मानुप्रेक्षा, परीषहजयचारित्रैः तपसा, निर्जरसा च भवति।[२२]

## (६) निर्जरतत्त्वम्

अर्जितस्य कर्मणः तपःप्रभृतिभिर्निजरणमेव निर्जराख्यं तत्त्वम्। इदं तत्त्वम् चिरकालप्रवृत्तं कषायकलापं पुण्यं सुखदुःखे च देहेन नाशयति। केशोल्लुञ्चनादिकं तपः। अस्य तत्त्वस्य यथाकालौपक्रमिकभेदेन द्वैविध्यम्। यस्मिन् काले कर्म फलप्रदत्वेनाभिमतं तस्मिन्नेव काले फलदानाद् भवन्ती निर्जरा प्रथमा। स्वतपोबलात्स्वकामनया फलप्रदत्वेनाभिमतात् कालाद्भिन्ने काले फलदानाद् भवन्ती निर्जरा द्वितीया।[२३]

## (७) मोक्षः

मिथ्यादर्शनाविरत्यादीनां बन्धहेतूनां निरोधेन नवीनकर्माभावान्निर्जराहेतुना-र्जितस्यापि कर्मणः क्षयेनात्यन्तिककर्ममोक्षणं मोक्षपदार्थः। कृत्स्नानां कर्मणां मोक्षे सति मोक्षो भवति।[२४] मोक्षे सञ्जाते च जीवः आलोकाकाशं गच्छति।

## मोक्षावस्थायां जीवस्य सर्वज्ञत्वम्

जीवोऽयं ज्ञानस्वभावः। संसारावस्थायां ज्ञानस्य ज्ञानावरणेनावृतत्वात् ज्ञानं पूर्णतः नैव प्रकाशितं भवति। यदा च चैतन्यप्रतिबन्धककर्मणां क्षयो भवति तदा समस्तपदार्थविषयकमप्राप्तकारि ज्ञानं भवति।[२५] विशदत्वञ्च ज्ञानान्तराव्यवधानेन विशेषवत्तया प्रतिभासनमेव।[२८] तत्प्रत्यक्षमपि द्वेधा-मुख्यसांव्यवहारिकभेदात्।[२९] इन्द्रियं चक्षुरादि, अनिन्द्रियं मनः एते द्वे यस्य कारणम् तत् एकदेशिकं विशदं ज्ञानं सांव्यवहारिकं प्रत्यक्षम्।[३०] प्रत्यक्षं प्रति आलोकस्यार्थस्य च कारणत्वं नैवास्ति ज्ञानविषयत्वात्। ज्ञानविषयस्य च ज्ञानं प्रति कारणत्वमङ्गीकर्तुं नैव

शक्यते।[३१] सामग्र्याः विशेषतया यस्य समस्तान्यावरणानि दूरीकृतानि एतादृशं पूर्णतया विशदं ज्ञानमिन्द्रियसाहाय्यनिरपेक्षं मुख्यं प्रत्यक्षम्।[३२] पूर्णतया विशदत्वेऽस्य ज्ञानस्य कारणं प्रतिबन्धकाभाव एव।[३३] मुख्यं प्रत्यक्षमात्ममात्रकारणादुत्पद्यते। इन्द्रियमनसोः व्यापारस्यात्रापेक्षा नास्ति। अत्रेयं युक्तिः-आत्मा ज्ञानस्वभावः। ज्ञानं यावदावृतं भवति, इन्द्रियसाहाय्येन च जायते तावज्ज्ञाने प्रतिबन्धस्य सम्भावना भवति। यदा च ज्ञानस्य सर्वेषामावरणानां विच्छेदो भवति। यदा चेन्द्रियादीनां सहायकानामावश्यकता न भवति। तदा तदतीन्द्रियं निरावरणं च ज्ञानं समस्तान् पदार्थान् विषयीकरोति। यथा चाग्नेः स्वभावः ज्वालनं किन्तु चन्द्रकान्तमणिसमवधाने सति ज्वालने सामर्थ्यं नैव धारयत्यग्निः। तथैव यद्यप्यात्मनः स्वभावोऽस्ति ज्ञानम् किन्तु आवरणेन्द्रियसाहाय्यादिप्रतिबन्धकसद्भावेन सांव्यवहारिकं प्रत्यक्षं सर्वविषयकं नैव भवति आवरणादीनां क्षये जाते करणसाहाय्यानपेक्षत्वे चात्मा सर्वानपि विषयान् ज्ञानविषयीकरोति किमपि ज्ञेयं नैवावशिष्यते तदानीम्।[३४] बन्धकारणानामभावात् सञ्चितानां च कर्मणां निर्जरत्वात् समेषां कर्मणां समूलोच्छेदरूपे मोक्षे सञ्जाते जीवस्य गुणाः स्वाभाविकीमवस्थां प्राप्नुवन्ति। य आत्माऽनादिकालतः मिथ्यादर्शनादिभिरशुद्धिभिः कालुष्येन च आवृत आसीत् स एवात्मा निर्मलः निश्चलोऽनन्तचैतन्यमयो भवति अग्रे तस्य शुद्धमेव परिणमनं भवति। अयं मुक्त आत्माऽनन्तेनानन्देन युक्तः सर्वज्ञः सिद्धः सञ्जायते, अलोकाकाशे सिद्धशिलामध्येऽनन्तकालं यावच्छोभायमानः तिष्ठति।

### जैनदर्शने ईश्वरास्वीकारः

जैनदर्शने कस्यचिन्नित्यस्येश्वरस्यास्तित्वं नैव स्वीक्रियते नैव च स्वीकर्तुं शक्यते। जैनदर्शनस्य सिद्धान्तो विद्यते यत् कश्चित् सर्वद्रष्टा सर्वदा कर्मभिरस्पृष्टः नैव सम्भवति।

**"नास्पृष्टः कर्मभिः शश्वद्विश्वदृश्वाऽस्ति कश्चन।**
**तस्यानुपायसिद्धस्य सर्वथानुपपत्तितः॥[३५]**

दर्शनेष्वन्येषु ईश्वरस्यानादित्वस्वीकारात् तस्य कर्मभिरस्पृष्टत्वमङ्गीक्रियते जगतः स्रष्टृत्वाच्चास्यानादित्वं स्वीक्रियते। परन्तु जैनदर्शनसरण्या कश्चिदपि जगत्स्रष्टा नास्ति। अतः जगत्स्रष्टुः कस्यचिदनादिसिद्धस्य परमात्मनो नास्ति काचिदावश्यकता जैनदर्शने। जैनदर्शने मोक्षं प्राप्ताः जीवा एव सकलकर्मक्षयात् सिद्धाः भवन्ति, एते सिद्धाश्च ज्ञानावरणीय, दर्शनावरणीय, वेदनीय, मोहनीय, आयु, र्नाम, गोत्र, अन्तरायैरष्टभिः कर्मभिर्विरहिताः भवन्ति। सम्यक्त्वादिभिरष्टभिः गुणैश्च युक्ताः

भवन्ति। चरमदेहतः किंचनत्रिभागेन हीनाः, लोकाग्रस्थिताः, नित्याः, अवाग्गोचराभ्यामुत्यादव्ययाभ्यां प्रतिक्षणविनाशिभ्यां संयुक्ताश्च भवन्ति।[३६] एते सिद्धा अर्हन्तः तीर्थङ्करादयः मुक्ताः जीवा एवेश्वरतुल्याः सन्ति। अनादिसिद्धस्य कस्यचिदीश्वरस्य नास्त्यत्र स्वीकारः।

### न्यायाभिमतेश्वरः-जैनदृष्टिः

नैयायिकाः ईश्वरः जगतोऽस्य स्रष्टाः, वेदानां प्रणेता, जीवकृतकर्मणामधिष्ठाता सम्प्रदायप्रद्योतकश्चेति स्वीकुर्वन्ति। जैनदार्शनिकाः जगतः स्रष्टृत्वं नैवाङ्गीकुर्वन्ति, न वा वेदस्यानादिसिद्धेश्वरप्रणीतत्वम्, न वा जीवकृतकर्मणामधिष्ठितत्वम्, न वा सम्प्रदायप्रवर्तकत्वम्। जैनदर्शनानुसारं जगदिदमनादि। नासीत् कश्चिदेतादृशः कालः यदा किञ्चिदपि नासीत्। अनन्ताः सत्पदार्थाः अनादिकालतोऽनन्तकालं यावत् क्षणं क्षणं विपरिवर्तमानाः मूलधारायां प्रवहन्ति। तेषां संयोगवियोगाभ्यां सृष्टिचक्रोऽयं स्वयमेव सञ्चालितो भवति। प्रत्येकं सत् पदार्थः स्वयमेव परिपूर्णः स्वतन्त्रश्चास्ति, प्रतिक्षणमुत्पादव्ययध्रौव्यैः स्वभावैः परस्परं प्रभावितो भूत्वाऽनेकास्ववस्थासु स्वयमेव परिवर्तितो भवति। पुरुषस्यैष एव पुरुषार्थः। संसारोऽयं स्वकीयपारस्परिककार्य-कारणभावैः सुव्यवस्थितः नियन्त्रितश्च प्रवर्तते। तत्र कस्यचित् कर्तुर्हस्तक्षेपस्य नास्ति काचिदावश्यकता प्रयोजनम् वा। कर्मणोऽपि नास्त्यधिष्ठातुः काचिदावश्यकता कर्मणां स्वत एव फलप्रदायकत्वात्। वेदानां चाप्रामाणिकतया नास्ति तत्कर्तुरीश्वरस्यावश्यकता।

### जगत्कर्तृत्वेन नास्तित्वमीश्वरस्य

नैयायिकाः जगतः कर्तृतया भगवन्तं साधयन्ति परन्तु जैनदृष्ट्या "जगतोऽस्य कश्चित् कर्ताऽस्ति स एकः, स सर्वगः (सर्वव्यापकः सर्वज्ञो वा), स्वतन्त्रः, स नित्यः" इति विश्वासाः जैनेतराणां कदाग्रहा एव सन्ति।[३७] नास्त्येतेषु विश्वासेषु किञ्चित् प्रमाणम् नैयायिका ईश्वरे प्रमाणतयाऽनुमानमेतन्निर्दिशन्ति "क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्, व्यतिरेके व्योमवत्" इति। परन्त्वनुमानस्यास्य नैव साध्यसाधकत्वमस्ति जैनानामयमाशयः। प्रमेयरत्नमालायामनन्तवीर्यैरुच्यते-

"तदेतत् सर्वमनुमानं मुद्राद्रविणदरिद्रवचनमेव, कार्यत्वादेरसम्यग्धेतुत्वेन तज्जनितज्ञानस्य मिथ्यारूपत्वात्।"[३८]

कुतोऽस्यासद्धेतुत्वम्? तत्र कारणमस्ति-

(१) हेतोः स्वरूपासिद्धत्वम्

(२) व्याप्तेरग्रहश्च।

साध्यसाधनार्थं हेतोः पक्षे संस्थितिरावश्यकी, हेतोः कार्यत्वस्य पक्षे क्षित्यङ्कुरादावसत्त्वात् हेतोः स्वरूपासिद्धत्वम्। अपि च नियमोऽस्ति साधनं तदैव साध्यं साधयितुं सामर्थ्यमादधाति यदा तत्र व्याप्तिः प्रमाणतः सिद्धा स्यात्।[३९] परन्त्वत्र व्याप्तिः प्रमाणतः सिद्धा नास्ति।

## (१) हेतोः स्वरूपासिद्धता

नैयायिकाः क्षित्यङ्कुरादिकस्य सकर्तृकत्वसाधनाय कार्यत्वं हेतुविधयोपस्थापयन्ति। जैनानामयमाक्षेपो विद्यते यत् कार्यत्वमिदं क्षित्यङ्कुरादेः कथं सिद्ध्यति प्रत्यक्षतोऽनुमानाद्वा। प्रत्यक्षतो नैव सिद्ध्यति।[४०] अनुमानाच्चेत्सिद्ध्यति। कस्माद्धेतोः? किं चेदं कार्यत्वम्?

(क) सावयवत्वात्, सावयवत्वमेव वा कार्यत्वम्।

(ख) स्वकारणसत्तासमवायात्, स्वकारणसत्तासमवाय एव वा कार्यत्वम्।

(ग) अक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वम् वा कार्यत्वम्।

(घ) अभूत्वा भावित्वम् वा कार्यत्वम्।

(ङ) विकारित्वम् वा कार्यत्वम्।

(च) कारणव्यापारानुविधायित्वम् वा कार्यत्वम्।

(क) सावयवत्वात् क्षित्यङ्कुरादिकस्य कार्यत्वं सिद्ध्यति। अथवा सावयवत्वमेव कार्यत्वम्। यद्येतदुच्यते तदा प्रश्नोऽयं समुदेति यत् किमिदं सावयवत्वं नाम?

(१) अवयवेषु विद्यमानत्वम् सहावयवैर्विद्यमानत्वं वा।

(२) अवयवैरारभ्यमाणत्वम्।

(३) सन्निवेशवत्त्वम्

(४) सावयवमिति बुद्धिविषयत्वं वा-

(१) यद्यत्र प्रथमो पक्षस्तदा अवयवसामान्यस्यावयेषु विद्यमानत्वात्, गोत्वादीनाञ्च खण्डमुण्डशाबलेयत्वादिभिः सह विद्यमानत्वात् व्यभिचारः स्फुट एव। सामान्यस्यावयवेषु विद्यमानत्वेऽपि सहावयवैर्विद्यमानत्वेऽपि च नित्यत्वमकार्यत्वञ्च स्वीक्रियते। तथा च हेतोः अवयवेषु विद्यमानत्वस्य, सहावयवैर्विद्यमानत्वस्य

च सत्त्वेऽपि साध्यस्य कार्यत्वस्यासत्त्वात्।[४१] अत एव नैतादृशं कार्यत्वं स्वीकर्तुं शक्यम्।

(२) द्वितीये पक्षे स्वीक्रियमाणे साध्यसमो हेतुः। परमाण्वाद्यवयवानां प्रत्यक्षतोऽसिद्धत्वात् क्षित्यादेः तैरारभ्यमाणत्वमपि नैव प्रत्यक्षतः सिध्यति द्व्यणुकादीनां परमाणुभिरारभ्यमाणत्वस्य प्रत्यक्षतो ज्ञातुमशक्यत्वात्। यदि च द्व्यणुकादिकं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वात् यथा पटः इति अनुमानात् परमाणुभिरारभ्यमाणत्वं साध्यते तदा चक्रकदोषः आपतति यतो हि परमाणुप्रसिद्धौ सञ्जातायां क्षित्यादेस्तैरारभ्यमाणत्वरूपं सावयवत्वं सिद्ध्येत्, सावयवत्वसिद्धौ सञ्जातायां च कार्यत्वसिद्धिः क्षित्यादेः कार्यत्वसिद्धौ च परमाणुप्रसिद्धिः।[४२] अपि च हेतुरयमनैकान्तिकः यतो हि यत्र यत्र कार्यत्वं न तत्र तत्र स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धत्वं विद्यते, महापरिमाणोपेतप्रशिथिलावयवकार्पासपिण्डोपादानाज्जायमानेऽतिनिविडावयवाल्प- परिमाणोपेतकार्पासपिण्डेऽपि कार्यत्वस्य हेतोः सत्त्वात् तत्र च साध्यस्य स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धत्वस्यासत्त्वात्। कार्पासद्रव्यं हि महापरिमाणपिण्डाकारपरित्यागेनाल्पपरिमाणपिण्डाकारतयोत्पद्यमानं प्रमाणतः प्रतीयते।[४३] तथा हि नावयवैरारभ्यमाणत्वेन हेतुना द्व्यणुकादीनां क्षित्यन्तर्गतानां कार्यत्वं साधयितुं शक्यते यतो हि यथा क्षित्यङ्कुरादीनां कार्यत्वं सिद्धं नास्ति तथैवावयवैरारभ्यमाणत्वमपि सिद्धम् नास्ति।[४४] अतः साध्यसमोऽयं हेतुः कथं साध्यं कार्यत्वं साधयेत् अथवा कार्यत्वरूपतां भजेत्।

(३) यदि च सन्निवेशवत्त्वेन क्षित्यादेः कार्यत्वं साध्यते तदा प्रश्नो भवति सन्निवेशवत्त्वेन कोऽभिप्रायो भवताम् नैयायिकानाम्? सन्निवेशवत्त्वम् किमवयवसम्बन्धो रचनाविशेषो वा? नाभ्यामतिरिक्तः कल्पः सम्भवति।[४५] यद्यवयवसम्बन्धः सन्निवेशवत्त्वं तदाऽऽकाशादिना व्यभिचारः, आकाशेऽपि प्रदेशनानात्वस्य घटाकाशपटाकाशभेदेन सद्भावात् अवयवसम्बन्धस्य च प्रदेशवत्त्वरूपत्वात्।[४६] यदि नैयायिकेनोच्यते यत्–आकाशादौ प्रदेशनानात्वमुपचरितमेवास्ति न तु वास्तविकम्। तदा सर्वमूर्तद्रव्यसंयोगित्वस्यैव विभुत्वपदार्थतया तदप्युपचरितमेव स्यात्–सर्वमूर्तद्रव्यसंयोगित्वस्याप्युपचरितत्वात् श्रोत्रेणापि च शब्दस्य ग्रहणं न स्यात् कर्णशष्कुल्यवच्छिन्नाकाशस्यैव श्रोत्रपदार्थतया तस्य चोपचरितप्रदेशरूपत्वात् धर्मादिसंस्कारवशात्तेन शब्दग्रहणमित्यपि पक्षो न सम्भवति, उपचरितस्यासद्रूपतया धर्मेणोपकारायोगात् यथा चासद्रूपस्य खरविषाणस्य न धर्मादिनोपकारः सम्भवति तथैवात्रापि। अतः

अवयवसम्बन्धरूपेण (प्रदेशवत्त्वात्मकेन) सन्निवेशवत्त्वेन नैव क्षित्यादीनां कार्यत्वं साधयितुं शक्यते।[४७] न वा प्रदेशवत्त्वात्मकस्य सन्निवेशवत्त्वस्य कार्यत्वरूपत्वं स्वीकर्तुं शक्यते।

यदि च रचनाविशेषः सन्निवेशवत्त्वमित्युच्यते तदा प्रश्नोऽयं समुदेति यद्रचनावत्त्वं कस्य स्वीक्रियते परमाणूनाम् अवयविनो वा? न तावत् परमाणूनां रचनावत्त्वं स्वीक्रियते नैयायिकेन। यथा जैनाः स्वीकुर्वन्ति परमाणवोऽवयविनमन्तरेणापि परिणमन्तः कार्यरूपतां भजन्त इति न तथा नैयायिकाः। तैस्तु परमाणूनां नित्यत्वमङ्गी-क्रियते। नाप्यवयविनो रचनावत्त्वेऽङ्गीकृते भवतां नैयायिकानामिष्टसिद्धिः जैनमते-ऽवयविनोऽभावात्।[४८] अतः जैनं प्रतीश्वरसाधने हेतोः रचनाविशेषवत्त्वस्य भागासिद्धत्वं भवति पक्षैकदेशेऽवयविनि हेतोरसत्त्वात्।[४९] अतः नानेनापि सन्निवेशवत्त्वेन क्षित्यादेः कार्यत्वं साधयितुं रचनाविशेषवत्त्वस्य कार्यत्वात्वात्मकत्वं स्वीकर्तुं वा शक्यम्।

(४) सावयवमिति बुद्धिविषयत्वेनापि हेतुना नैव कार्यत्वसाधनं युक्ति सम्मतम्। न वा सावयवमिति बुद्धिविषयत्वस्य कार्यत्वात्मकत्वस्वीकरणं युक्ति सम्मतम्। आत्माऽऽकाशादावपि अयमात्मप्रदेशः, अयमात्मप्रदेश एवं रीत्या सावयवमिति बुद्धिविषयत्वस्य सत्त्वात् तेषाञ्चाकार्यत्वात् हेतोः व्यभिचारित्वं स्फुटमेवावगम्यते।[५०] यदि चात्र नैयायिकेन समाधीयते यत्-आत्माकाशादौ सावयव-घटादिसंयोगान्निरवयवत्वेऽप्यात्माकाशादीनां सावयवमिति बुद्धिविषयत्वमौपचारिकम् (लाक्षणिकम्) अस्ति न तु वास्तविकम्। क्षित्यादौ तु वास्तविकं सावयवमिति बुद्धिविषयत्वम्। तद् नैतत्साधुतां भजते। यतो हि यदि निरवयवत्वमस्त्यात्मादीनां तदा तु परमाणुवत् न स्यात् व्यापकत्वम्, तदपि व्यापकत्वमप्यौपचारिकमेव स्यात्।[५१] अतः नानेनापि हेतुना क्षित्यादेः कार्यत्वसिद्धिः न वाऽस्य कार्यत्वरूपता।

(ख) स्वकारणसत्तासमवायाद्धेतोरपि न क्षित्यङ्कुरादेः कार्यत्वसिद्धिः। तथा ह्येतदनुमानमेवंविधं भविष्यति-क्षित्यङ्कुरादिकं कार्यं स्वकारणसत्तासमवायात् घटादिवत्" इति। अत्र पक्षान्तर्गतो योगिनामशेषकर्मक्षयः तत्र च स्वकारणसत्ता-समवायस्य कार्यत्वसाधकस्य हेतोः सत्त्वं नैवास्ति, अशेषकर्मक्षयस्य ध्वंसरूपत्वात् न तत्र सत्ता स्थातुं शक्नोति न वा समवायः। सत्तायाश्च द्रव्यगुणकर्मसु एव सत्त्वस्वीकारात् नैयायिकैः। समवायस्य च नैयायिकैः द्रव्यादिपञ्चस्वेव वृत्तित्वस्वीकारात्। अतः हेतोः भागाऽसिद्धत्वं स्फुटं भवति। यदि चाभावपरित्यागेन भावस्यैव क्षित्यङ्कुरादेः पक्षीकृतत्वाद् भागासिद्धिर्निवार्यते तदाऽऽपातत एतल्लभ्यते

यत् योगिनामशेषकर्मक्षयं प्रति नैवेश्वरस्य कारणता, फलत ईश्वराराधनं तदर्थं निष्फलमेव भविष्यति।[५२]

अपि चायं सत्तासमवायः समुत्पन्नानां भवेदुत्पद्यमानानां वा? यदि समुत्पन्नानां सत्तासमवायः इति पक्षः तदा प्रश्नो भवति उत्पन्ना हीमे पदार्थाः सन्तो वाऽसन्तो वा? उत्पन्नानामसतां पदार्थानान्तु सत्तासमवायो न सम्भवति खरविषाणादेरपि स्यात्, सतामुत्पन्नानां सत्तासमवायः, तर्हि सोऽयं सत्तासमवायोऽन्यसत्तासमवायादस्ति स्वतो वाऽस्ति? अर्थात् सतामयं सत्तासमवायस्तर्हि सत्तासम्बन्धात्सतां स्वतो वा सताम् सत्तासमवायः? यदि सत्तासम्बन्धात् सतां सत्तासमवायस्तर्हि सोऽप्यपरः सत्तासम्बन्धः सतामसतां वेति विकल्पानामनवस्थानादनवस्थाऽपतति। यदि स्वतः सतां सत्तासमवायस्तदा सत्तासमवायस्यानर्थक्यं भवति।[५३] अत्रायमभिप्रायः-सत्तासमवायः सतां पदार्थानां सत्त्वमस्तित्वं तत् सत्ता समवायात्स्वस्माद्वेति विकल्पः। सत्तासमवायात्तेषां पदार्थानां सत्त्वम्, तस्य सत्तासमवायस्य सतोऽसतो वा सत्त्वं? असतो यदि सत्तासमवायस्य सत्त्वं तदा खरविषाणस्याप्यसतोऽपि सत्त्वं स्यात्। सतः सत्तासमवायस्य सत्त्वञ्चेत्तर्हि सत्तासमवायान्तरात् स्वतो वा? यदि सत्तासमवायान्तरात् सत्तासमवायस्य सत्त्वन्तर्हि पुनरप्ययं प्रश्नो जागर्ति सत्तासमवायान्तरस्य सत्त्वं सत्तासमवायान्तरात् (अन्यस्मात् सत्तासमवायात्) स्वतो वा? प्रथमकल्पे पुनरपि विकल्पानवस्थानादनवस्था भवति! यदि च सत्तासमवायान्तरात् सत्तासमवायस्य सत्त्वं नास्त्यपि तु स्वत एव सत्तासमवायस्य सत्त्वं तर्हि पूर्वपदार्थानामपि सत्त्वं स्वत एवास्तु काऽऽवश्यकता सत्तासमवायकल्पनायाः। अतः सत्तासमवायस्यास्तित्वाभावात् केन हेतुना नैयायिकः कार्यत्वं क्षित्यादौ साधयिष्यति?

पुनश्च, सत्तासमवाय उत्पत्तिभिन्नो वाऽभिन्नो वा? यदि भिन्नः सत्तासमवाय उत्पादादिति मतं तदोत्पन्नमप्यसत् पदवाच्यं भविष्यति। उत्पन्नेऽपि पदार्थेऽसत्त्वस्याविशेषात् उत्पत्ति, उत्पत्त्यभावयोः को भेदः? उत्पत्तिसत्त्वे सिद्धे पदार्थसत्त्वं सिद्ध्यति। उत्पत्तिसत्त्वविवादे पदर्थसत्त्वं दुर्घटमेव। अतः सत्तासमवायवस्तूत्पादयोरैक्यमेवावगन्तव्यम्। उत्पत्तिशालित्वसत्तासमवाययोरैक्ये स्वीकृते सत्तासमवायस्यैव कार्यत्वरूपत्वमापतति, उत्पत्तिशालित्वस्यैव कार्यत्वात् तस्य च सत्तासमवायरूपत्वात्। सत्तासमवायस्य च गगनादावपि विद्यमानतया तत्रापि कार्यत्वरूपो हेतुः स्थास्यति तत्र सकर्तृकत्वाभावाद् व्यभिचारी स्यात् कार्यत्वहेतुः सकर्तृकत्वसाधने।[५४]

एवं सत्तासमवायस्य निराकरणेन स्वकारणसमवायोऽपि निराकृतो भवति। तत्राप्येतेषां दोषाणां विद्यमानत्वात्।

यदि च स्वकारणसमवायः सत्तासमवायश्चोभयमपि साध्यसाधकत्वेन हेतुविधयोपन्यस्तमिति मतम्? तदपि नैव साधुतां भजते। क्षित्यङ्कुरादीनामेतौ सम्बन्धौ कादाचित्कौ वाऽकादाचित्कौ वा? यदि कादाचित्कौ तदा समवायस्यानित्यत्वं प्रसज्यते। कदाचित् कार्योत्पत्तिरस्ति, कदाचिन्नास्ति, एवं समवायोऽनित्यः कादाचित्कत्वात् घटवत् इति समायाति। यदि चाकादाचित्कौ सम्बन्धौ तौ तदा क्षित्यङ्कुरादीनां सर्वदोपलब्धिप्रसङ्गः। क्षित्यङ्कुरादीनां नित्यत्वमेवापद्यते।[५५] अतो नानेन हेतुना क्षित्यादेः कार्यत्वसाधनम् कर्तुं शक्यम्। न वाऽस्य कार्यत्वरूपत्वमङ्गीकर्तुं शक्यम्।

(ग) यदि चाक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वं कार्यत्वमिति पक्षः। तर्हि नैतदपि सम्भाव्यते। यतो हि अक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वं हि कारणमिदं कार्यमिदमिति गृहीतशक्तिकस्य पुरुषस्य, अगृहीतशक्तिकस्य वा पुरुषस्य। यदि कारणमिदं कार्यमिदमिति गृहीतशक्तिकस्य पुरुषस्याक्रियादर्शिनोऽपि कृतबृद्ध्युत्पादकत्वं कार्यत्वं तदा मृत्तिकानिष्कासनात् कृतमिति गृहीतसंकेतस्य गर्तोऽयमिति गगनादावपि कृतबुद्धिसम्भवात् तत्रापि कार्यत्वं स्यात्, तेन च गगनादेरपि सकर्तृकत्वं (बुद्धिमद्धेतुकत्वं) स्यात्।[५६] यदि च नैयायिकोऽस्याः गगनादौ जायमानायाः कृतबुद्धेः मिथ्यात्वं स्वीकरोति तदा प्रश्नोऽयं जायते यत् क्षित्यङ्कुरादौ जायमानायाः कृतबुद्धेः मिथ्यात्वं कथं नैव स्वीक्रियते, सापि मिथ्यैव स्यात् प्रत्यक्षेण च उभयत्रापि कर्तुः ग्रहणं नैव भवति। यदि नैयायिको वक्ति यत् आकाशस्य नित्यत्वसाधकं प्रमाणमस्त्यनुमानम्, तथाहि-"आकाशं नित्यं सदकारणत्वात् समवायवदिति। तदनुमानं गगनादौ कृतबुद्ध्युत्पादकत्वस्य प्रतिबन्धकं प्रमाणमस्ति। तर्ह्यत्रापि क्षित्यादावपि कृतबुद्ध्युत्पादकत्वस्य बाधकमनुमानप्रमाणमस्त्येव। तथा हि क्षित्यादिकं बुद्धिमद्धेतुकं न भवति अपरिच्छेद्यपरिमाणाधारत्वात् गगनादिवत्" इति।[५७] आकाशनित्यत्वसाधनाय प्रयुक्तेनानुमानेनास्यानुमानस्य समबलत्वमस्ति। अतः गृहीतसंकेतस्याक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वरूपं कार्यत्वं नैव सम्भवति। अथ अगृहीतसंकेतस्य पुरुषस्य कृतबुद्ध्युत्पादकत्वं तदपि नैव सम्भवति संकेतग्रहं विना कृतबुद्ध्युत्पादस्यासिद्धत्वात् यदि च तदापि कृतबुद्धिसम्भव इति स्वीक्रियते तदा तु विवादस्यैवावसरो नास्ति।[५८] अतो नायमपि पक्षः साधुः।

अपि च, यादृशं लौकिकपरीक्षकयोरक्रियादर्शिनोऽपि नवीनकूप, प्रासादादौ कृतबुद्धिजनकं कार्यत्वं प्रमाणतः प्रसिद्धं न तादृशं क्षित्यादौ अक्रियादर्शिनोऽपि कृतबुद्धिजनकं कार्यत्वं प्रमाणतः सिद्धमस्ति। अतः स्वरूपासिद्धोऽयं हेतुः।[५९] यदि च क्षित्यादावप्यक्रियादर्शिनोऽपि कृतबुद्धिजनकत्वं सिद्धं स्यात् तदा यथा

जीर्णकूप, प्रासादादौ लौकिकस्य परीक्षकस्य चाक्रियादर्शिनोऽपि कृतबुद्धिः तथाऽत्रापि स्यात्। नैवं जायतेऽतः क्षित्यादौ नाक्रियादर्शिनोऽपि कृतबुद्धिजनकत्वरूपं कार्यत्वमस्ति। स्वभावेनाऽत्यन्तं भिन्नो धर्मः न शब्दमात्रेणाभिन्नो हेतुत्वेनोपादातुं शक्यते स्वभिमतसाधनाय। विरुद्धे पक्षेऽपि विरोधाभावादाशङ्कानिवृत्तेरभावात्। अत्र चाशङ्केयं जायते यत् क्षित्यादिकं घटादिवत् सकर्तृकं तर्वादिवदकर्तृकं वा। अस्या आशङ्कायाः निवृत्तिर्न जायतेऽत्र। यथा च वल्मीके घटवत् कुम्भकारकृतत्वसाधनाय यदि मृद्विकारत्वमात्रं हेतुत्वेनोपादीयते तदा नायं हेतुः वल्मीकस्य कुम्भकारकृतत्वसाधने समर्थो भवति यतोहि न तादृशं मृद्विकारत्वं वल्मीके विद्यते यादृशञ्च मृद्विकारत्वं घटे विद्यते। तथैवात्रापि यादृशमक्रियादर्शिनोऽपि कृतबुद्धिजनकत्वं जीर्णकूप, प्रासादादौ सकर्तृकत्वव्याप्तं विद्यते न तादृशमक्रियादर्शिनोऽपि कृतबुद्धिजनकत्वं क्षित्यादौ विद्यतेऽतो नायं हेतुः क्षित्यादेः सकर्तृकत्वसाधनसमर्थो भवति।

अत्र नैयायिको वक्ति यदिदं जैनोक्तं कार्यसमं नाम जात्युत्तरमस्ति। तथाहि लक्षणमस्य–"कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनम्।"[६१] तद् यथा "अनित्यः शब्दः कृतकत्वात् घटवत्" इत्यत्र शब्दस्यानित्यत्वे साध्ये घटगतं कृतकत्वं हेतुत्वेनोपादीयते तर्हि घटगतं वा कृतकत्वं मृत्पिण्डादिकार्यत्वरूपं विद्यते, न तत् कृतकत्वं शब्दे हेतौ विद्यते। अतः स्वरूपासिद्धो हेतुः यदि शब्दगतं कृतकत्वं हेतुत्वेनोपादीयते तर्हि शब्दगतं कृतकत्वं विवक्षाप्रयत्नवायुप्रेरणाभिघातकार्यत्वं न तद् दृष्टान्ते घटादौ विद्यते। अतः साधनरहितो दृष्टान्तः, सत्येवं दृष्टान्ताभावात् कथं शब्दस्यानित्यत्वं साधयितुं शक्यम्। जात्युत्तरमिदमस्ति। तथैव क्षित्यादीनामक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वरूपं कार्यत्वमन्यत् सौधप्रासादादीनाञ्चाक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वरूपं कार्यत्वमन्यत् इति कृत्वाऽत्रापि कार्यत्वान्यत्वलेशेन साध्यासिद्धिनिदर्शनमस्ति। अतोऽस्यापि कार्यसमनाम जात्युत्तरत्वमस्ति।[६२] जात्युत्तरस्यासदुत्तरत्वेन नातः प्रकृतसाध्यसिद्धेः प्रतिबन्धः कर्तुं शक्यतेऽन्यथा सकलानुमानोच्छेदः प्रसक्तो भवेत् सर्वत्रैव असदुत्तरस्य दातुं शक्यत्वात्।

जैनैश्च प्रतिविधीयते–मैवम्, शब्दानित्यत्वसाधनाय प्रयुक्ते कृतकत्वहेतौ पूर्वोक्तरीत्या दोषप्रदाने भवति जात्युत्तरत्वम्। यतोहि कारणमात्रजन्यतारूपमस्ति कृतकत्वम्, तस्य नित्य आकाशादौ "यन्नित्यं तन्न कृतकं यथाऽकाश"मिति ज्ञानरूपबाधकप्रमाणसद्भावात्, अनित्यत्वमात्रव्याप्तत्वस्यावधारितस्य शब्देऽप्युपलभ्यत्वात् तत्र पूर्वोक्तरीत्या प्रतिविधाने भवति जात्युत्तरत्वम्। अत्र क्षित्यादौ

सकर्तृत्वसाधनपक्ष एवं नास्ति। कार्यत्वस्य सकर्तृकत्वव्याप्तत्वं क्षित्यादौ नैवोपलभ्यते। सकर्तृकत्वरहिते विपक्षे वृक्षादौ बाधकप्रमाणाभावात् संदिग्धव्य- भिचारित्वात्। तथाहि सकर्तृकत्वरहिते वृक्षादावपि कार्यत्वमस्ति, सकर्तृके घटादावपि कार्यत्वमस्ति। अतः संदेहो भवति यत् वृक्षादिकं सकर्तृकं न वेति, एवञ्च व्यभिचारसंदेहस्य विद्यमानत्वात् संदिग्धानैकान्तिकोऽयं हेतुः। यदि चात्र विपक्षे बाधकं प्रमाणं स्यात्तदा यथा दृष्टान्ते कृतबुद्धिः सञ्जायते तथैवात्रापि सञ्जायेत। न सञ्जायतेऽत्र कृतबुद्धिः, अतोऽवगम्यते नात्राऽस्ति विपक्षे बाधकं प्रमाणम्।[६३] अत्र जैनानामाशयो विद्यते यत् सर्वत्र कार्ये सकर्तृकत्वं सिद्धं नास्ति दृष्टान्ते, अतो यथा घटादिदृष्टान्तद्वारा व्याप्तिः प्रदर्श्यते तथैव वृक्षादिप्रतिदृष्टान्तद्वारा व्याप्तौ संदेहोऽपि सञ्जायते। नातः साध्यसिद्धिः कर्तुं शक्या। यदि घटादिरूपे विशिष्टकार्ये यत्र चाक्रियादर्शिनोऽपि कृतबुद्धिजनकत्वं विद्यते तत्रैव सकर्तृकत्वव्याप्तिं प्रतिपद्या- ऽविशिष्टकार्ये यत्र चाक्रियादर्शिनः कृतबुद्ध्युत्पादकत्वं नास्ति तत्रापि सकर्तृकत्वं साध्यते तर्हि पृथिवीलक्षणभूतस्य रूपरसगन्धस्पर्शवत्त्वं प्रतिपद्य वायावपि (जलतेजोवाय्वाकाशानां) रूपरसगन्धस्पर्शवत्त्वं कथं न साध्यते? क्षितौ भूतत्वं विद्यते तत्र च रूपरसगन्धस्पर्शवत्त्वमपि विद्यते। इति क्षितौ रूपरसगन्धस्पर्शवत्त्वस्य भूतत्वे व्याप्तिं गृहीत्वा वायौ (जलतेजोवायुवाकाशानाम्) भूतत्वेन हेतुना रूपादिमत्त्वमपि साधनीयं नैयायिकेन। घटादौ कार्यत्वे सकर्तृकत्वव्याप्तिं प्रतिपद्य क्षित्यादेः सकर्तृकत्वसाधनेनैतत् समानमेव। अत्र प्रत्यक्षादिप्रमाणबाधोऽस्ति, अतः वायोः रूपरसगन्धस्पर्शवत्त्वं नैव भूतत्वेन हेतुना साधयितुं शक्यत इति चेदुच्यते नैयायिकेन तर्ह्येतत्तु क्षित्यङ्कुरादावपि समानमेव। तत्रापि वृक्षादौ सकर्तृकत्वस्य प्रत्यक्षतो बाधोऽस्ति।[६४]

(घ) अभूत्वा भावित्वरूपमपि कार्यत्वं नैव सम्भाव्यते। एतदेव प्रागभावप्रतियोगित्वपदेनोच्यते नैयायिकैः। यतो हि यथा "भुक्त्वा व्रजति" इत्यादौ भोजनक्रियाऽतीतरूपा, गमनक्रिया च वर्त्तमानकालीना। तत्रातीतकालाधिकरणभूते वर्तमानकालाधिकरणभूते च कर्तरि देवदत्तादौ सत्येव भुक्त्वा व्रजतीति प्रयोगो युज्यते। तथैवात्रापि अभूत्वा भावित्वमिति प्रयोगः तदैव युज्यते यदाऽभवनभवन-क्रियाद्वयाधिकरणभूतस्य कर्तुरस्तित्वं स्यात्। "अभूत्वा भावित्वम्" इत्यस्य क्त्वान्तपदविशेषितवाक्यार्थत्वात् "भुक्त्वा व्रजति" इत्यनेन प्रयोगेण समानत्वात्।[६५] अत्र च भवनाभवनयोराधारभूतस्य कर्तुरुपपत्तिर्नास्ति, अभवनाधारस्याविद्यमानत्वेन भवनाधारस्य च विद्यमानत्वात्, भावाभावयोरेकाश्रयविरोधात्। एकाश्रये च तयोरविरोधे नाममात्रेणैव विरोधः न तु वास्तविकः इत्यापद्यते।[६६] वस्तुतोऽसङ्गतमेवैतत् खण्डनम्,

अभवनस्य क्रियात्वरहितत्वात्। विरोधश्च भावाभावयोरेकदेशावच्छेदेनैककालावच्छेदेनैव भवति।

अपि च, यथाकथञ्चिद् नैयायिकेन क्षित्यादीनामभूत्वा भावित्वे साधितेऽपि क्षित्यादौ सर्वत्र तस्यानभ्युपगमात् भागासिद्धः (स्वरूपासिद्धः) अयं हेतुः। जैनैः भूभूधरादीनां प्रागभूत्वा भावित्वं नैवाङ्गीक्रियते, तैस्तु भूभूधरादीनां सर्वदावस्थानाभ्युपगमात्, जैनं प्रतीश्वरसाधनाय प्रवृत्तेऽनुमानेऽस्मिन् हेतोः भागासिद्धत्वं स्फुटमेव।[६७]

(ङ) इदानीं विकारित्वं कार्यत्वमिति मतं विचार्यते। प्रश्नो भवति किं नामेदं विकारित्वं? परिवर्तनशीलत्वमेव तत्। कस्यचिद्वस्तुनोऽवस्थान्तरपरिग्रह एव परिवर्तनपदेन व्यपदिश्यते। एतादृशं परिवर्तनशालित्वं तु भगवत्यपि विद्यते। ईश्वरस्यापि अवस्थान्तरपरिग्रहात्मकं परिवर्तनमस्त्येव। यतो हीश्वरस्यैकाऽवस्था सा यदा सः सर्गं विदधाति, अपराऽवस्था सा यदा सः सर्गं नैव विदधाति। एवमीश्वरस्याप्यवस्थान्तरपरिग्रहात्मकपरिवर्तनशालित्वात् विकारित्वमस्याप्यापतति।[६८] ईश्वरस्यापि विकारित्वे तस्यापि कार्यत्वं सम्पद्यतेऽतस्तस्यापि सकर्तृकत्वेनेश्वरान्तरस्यावश्यकता भविष्यति। ईश्वरान्तरस्याप्येवं विकारित्वापातात्, तस्यापि कार्यत्वं सम्पद्यतेऽतोऽनया रीत्याऽनवस्थादोषो भविष्यति। अतः नैव विकारित्वरूपमपि कार्यत्वं निर्वक्तुं शक्यम्।

(च) यदि कारणव्यापारानुविधायित्वरूपम् कार्यत्वमिति मतम्। तदा प्रश्नोऽयमुदेति यत् कारणव्यापारानुविधायित्वं किं नाम? कारणसामान्यव्यापारानुविधायित्वं कारणविशेषव्यापारानुविधायित्वं वा। यदि प्रथमः पक्ष आद्रियते तदा विपक्षीभूतेऽकर्तृके वृक्षादावपि तस्य कारणसामान्यव्यापारानुविधायित्वस्य विद्यमानत्वेनेश्वराख्यकारणविशेषस्येष्टस्यासिद्धिः। ईश्वराख्यकारणविशेषस्यास्वीकारेऽपि कारणसामान्यव्यापारानुविधायित्वस्य सम्भवात्। यदि च कारणविशेषव्यापारानुविधायित्वरूपं कार्यत्वमत्राभिमतं तदाऽन्योन्याश्रयो दोषः, यतोहि क्षित्यादीनां कारणविशेषे बुद्धिमति सिद्धे कारणविशेषव्यापारानुविधायित्वरूपं कार्यत्वं पक्षेऽस्तीति वक्तुं शक्यम्। कारणविशेषव्यापारानुविधायित्वात्मककार्यत्वस्य च पक्षसत्त्वसिद्धौ तदपेक्षया क्षित्यादौ कारणविशेष (बुद्धिमद्) जन्यत्वं साधयितुं शक्यम्। अतोऽन्योन्याश्रयदोषदूषितत्वान्नायमपि पक्षः साधुतां भजते।[६९]

एवमेव कादाचित्कत्वादपि क्षित्यादेः कार्यत्वं नैव साधयितुं शक्यम्, कादाचित्कमेवं वस्तु लोके कार्यतया व्यवह्रियते। संसारस्य तु सदा सत्त्वात् कादाचित्कत्वं नास्त्यस्य। अतः कुतोऽस्य कार्यत्वं स्यात्?[७०]

रीत्यानया स्पष्टीभवति यन्नैवं सिद्धमस्ति क्षित्यादौ कार्यत्वं स्वरूपतो विशेषतो वा।[७१]। अतः क्षित्यादीनां सकर्तृकत्वसाधनाय प्रयुक्तोऽयं हेतुः स्वरूपासिद्धः, स्वरूपासिद्धाद्धेतोश्च कथं साध्यसिद्धिः कर्तुं शक्या।

## (२) व्याप्तेरग्रहः

कार्यत्वस्य सकर्तृकत्वं प्रति व्याप्तिरपि सिद्धा नास्ति प्रमाणतः, अतो यदि कथञ्चित् कार्यत्वं क्षित्यादावस्तीति स्वीक्रियते तदापि न कार्यत्वेन हेतुना सकर्तृकत्वस्य सिद्धिः कर्तुं शक्या। यतो हि हेतोः सामर्थ्यमेतावदेव भवति यत्सः स्वव्यापकं धर्मिणं साधयति, नायं हेतुः स्वव्यापकं विहायाव्यापकमत्यन्तं विलक्षणं धर्मं साधयितुं सामर्थ्यं धारयति।[७२] अतः कार्यत्वहेतुः दृष्टान्ते यादृशकर्तृकत्वे व्याप्तिर्गृहीता तादृशकर्तृकत्वमेव पक्षे क्षित्यादौ साधयितुं समर्थोऽस्ति न तु तत्सादृश्यरहितकर्तृकत्वं साधयितुं समर्थः। व्याप्तिश्च कार्यत्वे सशरीरास्मदादीन्द्रियग्राह्यानित्यबुद्ध्यादि-विशिष्टकर्तृकत्वस्यैव घटादौ गृहीता। अतः पक्षे क्षित्यादावपि सशरीरास्मदादीन्द्रिय-ग्राह्यानित्यबुद्ध्यादिविशिष्टकर्तृकत्वस्यैव सिद्धिः सम्भवति, नहि भवता तादृशकर्तृकत्वं क्षित्यादावङ्गीक्रियते। अतः न सकर्तृकत्वमात्रस्य पक्षे सिद्धिः।

अत्र नैयायिकः प्रतिवक्तियत्-एवं सति सर्वानुमानोच्छेदप्रसङ्गः।[७३] यतो हिं पर्वतो वह्निमान् धूमात् इत्यादावपि धूमहेतुना वह्निसाधनेऽपि नैव तादृश एव वह्निः साध्यते पर्वते यादृशो वह्निः सपक्षे महानसादौ दृष्टः। यादृशसाध्यस्य व्याप्तिः सपक्षे हेतौ गृहीता तादृशसाध्यस्यैव सिद्धिः सम्भवति, एवं स्वीकारे तु अत्रापि सपक्षे महानसादौ खदिरपलाशाद्यग्निमत्त्वस्यैव व्याप्तिर्धूमे गृहीता न तु तार्णस्य वह्नेः, अतः पर्वतेऽपि खदिरपलाशाद्यग्निमत्त्वस्यैव सिद्धिः स्यान्नतु तार्णवह्निमत्त्वस्य। अतोऽत्र एतादृश, अन्यादृशपरित्यागेन केवलं सकर्तृकत्वमेवानुमातव्यम्। तस्य च व्याप्तिर्गृहीतैव कार्यत्वे हेतौ। सकर्तृकत्वमात्रमेवानुमानतः सिद्ध्यमानं पक्षधर्मता बलात् विशिष्टविशेषाधारं सेत्स्यतीति घटादौ प्रतिपन्नस्यास्मदादेः क्षित्यादिनिर्माणा-सामर्थ्यात् सामान्यस्य च निर्विशेषासम्भवात्।

जैनैश्चात्र प्रतिविधीयते-सत्येवं सकर्तृकत्वस्य सिद्धिरेव न स्यात् क्षित्यङ्कुरादौ। कुतश्चेत्? अस्मदादेस्तन्निर्माणासामर्थ्यात् सर्वज्ञत्वादिधर्मविशिष्टस्येश्वरस्य च कार्यत्व-व्यापकताया कदाचनापि प्रतिपत्त्यभावात् खरविषाणसदृशस्य सर्वज्ञत्वादिधर्मविशिष्ट-स्येश्वरस्य नैव सिद्धिः सम्भवति। निर्विशेषस्य सामान्यस्य चासम्भवात् सकर्तृक-त्वमात्रस्यापि न सिद्धिः सम्भवति। नैवं भवति लोके यत् यादृशे सम्भवति किञ्चित् तादृशस्यासिद्धौ सति तस्मादत्यन्तविलक्षणे स धर्मोऽङ्गीक्रियते। न हि

लोके गोत्वाधारत्वेन प्रसिद्धस्य खण्डादिव्यक्तिविशेषस्यासम्भाव्यतायां तदत्यन्त-विलक्षणमहिष्यादौ गोत्वाश्रयता स्वीक्रियते प्रसिद्ध्यति वा।[७४]

अपि च, यद्यस्मादृशान्यादृशपरित्यागेन केवलं सकर्तृकत्वानुमानमेवेष्यते तदा बुद्धिमत् विशेषणत्यागेन केवलं कारणमात्रानुमानमेव कथं नैवेष्यते। यथा धूमसामान्यस्य वह्निसामान्येन व्याप्तिनिश्चयो भवति तथैव कार्यत्वसामान्यस्य कारणत्वसामान्येनैव व्याप्तिनिश्चयोऽस्ति, न तु बुद्धिमत्कारणत्वसामान्येन व्याप्ति- निश्चयोऽस्ति।[७५] यद्युच्यते कार्यसामान्यात् कारणसामान्ये सिद्धेऽपि सर्वज्ञत्वादि- विशिष्टस्येश्वरस्य सिद्धिः सम्भवति तथाहि पर्वतादौ धूमादिहेतुना वह्निसामान्यसिद्धौ पक्षधर्मतादिबलात् तार्णवह्निसिद्धिर्यथा भवति तथैवात्रापि कारणसामान्यसिद्धौ पक्षधर्मताबलात् सर्वज्ञत्वादिविशेषणैर्युक्त ईश्वरः सिद्ध्यति। तर्हि नैतदपि साधुतां भजते यतो हि नहि धूमेन हेतुनाऽलौकिको वह्निः साध्यते, तथैवात्रापि दृष्टान्तदृष्टः विशेषः साधयितुं शक्यते, परन्तु नित्यबुद्ध्यादियुक्तः सर्वज्ञ ईश्वरो नैव साधयितुं शक्यते।[७६]

यच्च नैयायिकेन कार्यसामान्यात् कारणविशेषस्यानुमानं क्रियते न तत् साधुतां भजते, कार्यविशेषस्यैव कारणविशेषस्य (कर्तुः) अनुमापकत्वं सम्भवति कार्यविशेषस्यैव कारणविशेष (कर्तार) मन्तरेणानुपलम्भात्। तथा चोदाहरणमस्ति- धूमस्य वह्निसामान्येन यथा व्याप्तिः गृह्यते तथैव चान्दनादिधूमस्य वह्निविशेषेण व्याप्तिर्गृह्यते। तथैव घटादिलक्षणस्य कार्यविशेषस्यापि कारणविशेषेण (कर्त्रा) व्याप्तिर्गृह्यते।[७७] नैयायिकेन च क्षित्यादिकं पक्षीकृत्य कार्यत्वेन हेतुना सकर्तृकत्वं साध्यते। तदिदमनुमानं कार्यसामान्यात् कारणविशेषानुमानं भवति। कार्यसामान्येन च कारणविशेषानुमानस्य सम्भाव्यतायां धूमादिकार्यसामान्येन अग्न्यनुमानवत् धूमादिकार्यसामान्येन महानसीयाग्नेरनुमानं स्यात्, धूमघटिकादौ च धूममात्रमेव तत्कालवह्न्यनुमापकं स्यात्। यद्युच्येत धूमादिकार्यसामान्यानुरोधेन धूमघटिकादौ तत्कालाग्नेरनुमाने, महानसीयाग्नेरनुमाने च प्रत्यक्षविरोधः। तर्हि सोऽयं प्रत्यक्षविरोधः क्षित्यादीनां सकर्तृकत्वानुमानेऽपि समानः। यतो हि द्विविधानि कार्याणि भवन्ति कानिचित् सकर्तृकाणि यथा घटादीनि, कानिचित्तु कर्तृरहितानि यथाऽकृष्टायां भूमावुत्पद्यमानानि तृणादीनि।[७८] अकृष्टायां भूमौ सञ्जाते तृणादौ (वनस्पत्यादौ) कर्तुरनुमानेऽपि प्रत्यक्षविरोधो विद्यत एव। क्षित्यन्तर्गततया तेषामपि पक्षीकृतत्वात्। तेषाञ्च कर्त्तारमन्तरेणाप्युत्पद्यमानत्वं दृश्यतेऽतः व्यभिचारात् कथम् व्याप्तिः सम्भाव्यते?[७९] अतः कार्यविशेषस्यैव कारणविशेषेण (कर्त्रा) व्याप्तिरस्तीति निश्चीयते।

यद्यत्र नैयायिकः प्रवदति यदकृष्टप्रभवानां वनस्पतीनां कर्तुरतीन्द्रियतया नायं प्रत्यक्षविरोधः व्याप्तिविरोधश्च सम्भवति तदैतदपि वक्तुं शक्यते यत् धूमघटिकादौ वह्नेरतीन्द्रियता न तत्रापि प्रत्यक्षविरोधः। भास्वररूपसम्बन्ध्यवयविद्रव्यत्वात् न वह्नेरतीन्द्रियत्वं सम्भाव्यते इति समाधाने प्रश्नो भवति कुत एतदप्यवगम्यते? अत एवावगम्यते यतो हि महानसादावग्नेरुपलब्धिर्भवति प्रत्यक्षतः। तर्हि समानमेतदपि क्षित्यादौ, तत्रापि दृष्टान्ते घटादौ सशरीरस्यैव कर्तुः कुम्भकारादेरुपलब्धिर्भवति अतः क्षित्यादिकर्त्राऽपि सशरीरेणैव भाव्यम् न तस्याप्यतीन्द्रियत्वं सम्भाव्यते।[८०] सशरीरस्यैव कार्यकारित्वं सम्भाव्यते, पिशाचादेरपि वृक्षशाखाभङ्गादौ सशरीरस्यैव कर्तृत्वं भवति नाशरीरिणः। पिशाचादेरपि वायवीयशरीरस्य नैयायिकैः स्वीकारात्।[८१] ईश्वरस्य च शरीरराहित्याङ्गीकारात् न क्षित्यादिकर्तृत्वं सम्भाव्यते।

अत्र नैयायिकः प्रतिवक्तुं शक्नोति यद्यथा स्वशरीरप्रेरणे शरीरान्तररहितोऽपि सर्वश्चेतनः समर्थो भवति, तथैव प्रयत्नेच्छावशादीश्वरोऽपि क्षित्यादि कर्तुं समर्थः। कर्तृत्वञ्च न शरीरवत्त्वमपितु ज्ञानेच्छाप्रयत्नाधारता कर्तृत्वम्। घटादिकं कार्यं कर्तुमजानतः सशरीरस्यापि न घटादिकर्तृत्वं भवति, जानतोऽपि चिकीर्षारहितस्य न कर्तृत्वम्, चिकीर्षतोऽपि प्रयत्नाभावे न कर्तृत्वम्, अतः ज्ञानचिकीर्षाप्रयत्नाधारत्वस्यैव कर्तृत्वपदार्थतयाऽस्य भगवत्यपि सम्भवात् क्षित्यादिकं प्रतीश्वरस्य कर्तृत्वं सम्भवत्येव। परन्तु नैतन्मतमपि तर्कणां सहते। अस्मदादेः शरीरसम्बन्धमात्रेणैव तत्तदवयवानां प्रेरकत्वमुपपद्यते नापरस्य शरीरसम्बन्धस्य तत्र कश्चिदप्युपयोगः। "शरीरसम्बन्धं विना चेतनस्य स्वशरीरावयवेष्वन्यत्र वा कार्यकारित्वं नास्ति, उपलब्धेरभावात्" एतावन्मात्रमेव नियम्यते। अतः शरीरसम्बन्धेनैव परमेश्वरस्यापि क्षित्यादिकं प्रति कर्तृत्वमङ्गीकर्तव्यमुचितम् न तु शरीरसम्बन्धरहितस्य।[८२] अस्य परमेश्वरस्य दृश्यं शरीरन्तु प्रत्यक्षबाधान्नैवाङ्गीकर्तुं शक्यते। यदि चादृश्यं शरीरमङ्गीक्रियते तदा क्षित्यादिकर्तुरदृश्यत्वान्न प्रत्यक्षतो ग्रहणं किं वाऽभावान्न प्रत्यक्षतो ग्रहणम्? इति संदेहस्यानिवृत्तत्वात् संदिग्धविपक्षव्यावृत्तिको हेतुः,[८३] व्यभिचारसंशयस्य च विद्यमानत्वाद् व्याप्तिग्रहाभावान्न क्षित्यादिकर्तृतयेश्वरः साधयितुं शक्यते।

अपि च, यदीश्वरस्य शरीरमङ्गीक्रियते तर्हि किं तच्छरीरं नित्यं वाऽनित्यं वेति? यद्यनित्यमीश्वरस्य शरीरम्, तर्हि केन निर्मितं? यदि तेनेश्वरेणैव तदा शरीरान्तरापेक्षा तच्छरीरनिर्माणाय। एवं रीत्या चानवस्था स्फुटैव। यदि न केनाऽपि निर्मितं तदीश्वरशरीरं तर्हि तस्मिञ्छरीर एव कार्यत्वसत्त्वेऽपि सकर्तृकत्वं नास्ति। अतो व्यभिचारः।[८४] यदि च नित्यमेतदीश्वरीयं शरीरं (यथा चोदयनाचार्यैः परमाणूना-

मीश्वरशरीरत्वं स्वीकृतं)[८५] तदा शरीरत्वेन समानमपीश्वरशरीरं यथाऽस्मदादिशरीर-विलक्षणमङ्गीक्रियते तथैव घटादिकार्यविलक्षणं क्षित्याद्यन्तर्गतं वनस्पत्यादिकार्यं कार्यत्वेन समानमपि स्वीक्रियताम्।[८६] यथा भगवच्छरीरे शरीरत्वाविशेषेऽपि नित्यत्वरूपः शरीरस्यानित्यत्वस्वभावस्यातिक्रमः स्वीक्रियते, तथैव वनस्पत्यादीनां कार्यत्वे सत्यपि अकर्तृकत्वरूपः कार्यस्य सकर्तृकत्वस्वभावस्यातिक्रमोऽपि स्वीकर्तव्यः।[८७] उभयत्रापि स्वभावातिक्रमः समानः। नैकस्मिन्नपि पक्षे विनिगमकमस्ति यमाधारीकृत्य कस्यचित् पक्षस्य साधनं क्रियेत। अतः अकृष्टप्रभवेषु वनस्पतिषु विद्युदादौ च व्यभिचारः स्पष्ट एव।

अत्र नैयायिकः प्रतिवक्ति यत् पक्षे पक्षसमे वा व्यभिचारो न भवति। अकृष्टप्रभवानां वनस्पत्यादीनां विद्युदादीनाञ्च पक्षीभूतत्वेन न तत्र व्यभिचारः दर्शयितुं शक्यते, न हि तत्र साध्यस्य सकर्तृकत्वस्य अभावः निश्चितः, अपितु कर्तुरग्रहणमात्रमेव। प्रतिविधीयते चैतज्जैनैः-यदि पक्षे व्यभिचाराभावः, तदा येन येन व्यभिचारः तस्य तस्य पक्षीकरणे व्यभिचारस्योद्भावयितुमशक्यत्वात्, न हि कश्चिदपि व्यभिचारी हेतुरसद्धेतुः स्यात्।[८८] अपि स्थावरादिकर्तुः प्रमाणैरनुपलब्धस्यापि यद्यभावो निश्चितो न स्यात् तदा गगनादौ रूपाभावस्यापि रूपस्य तत्र प्रमाणाविषयत्वेऽपि निश्चयो न स्यात्।[८९] गगनादौ बाधकप्रमाणस्य सत्त्वाद्रूपादीनामभावस्य निश्चयो यथा भवति तथैवात्रापि स्थावरादौ कर्तुरभावोऽपि निश्चीयते। अतो व्यभिचारो दुर्वार्यः व्याप्तिग्रहश्च दुर्घटः। व्याप्तिग्रहाभावे च केन प्रकारेणेश्वरसाधनमभीप्सितं नैयायिकैः।

### कार्यत्वहेतुरिष्टविघातकः

यदि कथंचित् कार्यत्वस्य सकर्तृकत्वेन व्याप्तिः स्वीक्रियतेऽपि चेत् तदापि नेश्वरसिद्धिः सम्भवति। यतो हि हेतोः सामर्थ्यमेतदस्ति यत् दृष्टान्ते यादृशसाध्य-सामानाधिकरण्यम् तादृशमेव साध्यं पक्षे साधयति। तथा च कार्यत्वे सकर्तृकत्वस्य व्याप्तावनीश्वरासर्वज्ञत्वादिधर्मकलापोपेत एव कर्ता दृष्टान्ते घटादौ प्रसिद्धः, तेनैव रूपेण च व्याप्तिप्रसिद्धिरस्तीत्यतः क्षित्यादीनामपि अनीश्वरासर्वज्ञत्वादिधर्मकलापोपेत एव कर्ता सिद्ध्येत् न पुनरीश्वरत्वसर्वज्ञत्वादिविरुद्धधर्मोपेतः, ईश्वरत्वसर्वज्ञत्वादिधर्म-कलापोपेतस्य साध्यस्य (सकर्तृकत्वस्य) कदाचनापि कार्यत्वव्यापकत्वेन प्रतिपत्त्यभावात्।[९०] अन्यथा बुद्धिरहितस्यैव तस्येश्वरस्य कर्तृत्वं कुतो नाङ्गीक्रियते तथैव सशरीरत्वमप्यस्य स्वीकरणीयम् उभयत्र सामान्यात्। यदि चेश्वरस्य सशरीरस्य

कर्तृत्वं नाङ्गीक्रियते किन्त्वशरीरस्य तर्हि बुद्धिमतोऽप्यस्य कर्तृत्वं नाङ्गीक्रियताम्, अबुद्धिमत एव कर्तृत्वमस्य स्वीकार्यम्।[११] एवं रीत्या कार्यत्वं हेतुः इष्टस्य अशरीरसर्वज्ञरागरहितेश्वरकर्तृकत्वरूपस्य साध्यस्य विघटकत्वात् विरुद्ध एव भवति।[१२] अतः नैव कार्यत्वेन हेतुना साधनं शक्यमीश्वरस्य।

## कर्ता शरीरी एव

अपि च "ईश्वरः कर्ता न भवति शरीररहितत्वात् मुक्तात्मवत्[१३] इत्यनुमानमपीश्वरस्य कर्तृत्वे बाधकम्। ईश्वरस्य च शरीररहितत्वमङ्गीक्रियते नैयायिकैः, कर्तृत्वमपि स्वीक्रियते तैरीश्वरस्य। कर्तृत्वञ्चेदम्-ज्ञानचिकीर्षाप्रयत्नाधारता। नैतादृशं कर्तृत्वमीश्वरस्य सम्भवति यच्च नैयायिकैः प्रतिपाद्यते। कुत इति चेत्? शरीराभावात्। ज्ञानचिकीर्षा-प्रयत्नानामुत्पत्तौ आत्मा समवायिकारणं भवति, आत्ममनःसंयोगोऽसमवायिकारणं भवति, शरीरादिकं च निमित्तकारणम् भवति। समवाय्यसमवायिनिमित्तैतत्त्रितयकारण-समवधाने सत्येव कार्यमुत्पद्यते इति नैयायिकानां राद्धान्तः। एतत्त्रितयकारणाभावेऽपि कार्योत्पत्तिर्नैयायिकैर्नाङ्गीक्रियते अन्यथा मुक्तात्मनोऽपि ज्ञानाद्युत्पत्तिप्रसङ्गाद् नवानामात्मविशेषगुणानामत्यन्तोच्छेदो मुक्तिः इति सिद्धातस्य व्याघातः स्यात्। ईश्वरस्य चैतत्त्रितयकारणसमवधानो दुर्घटः निमित्तकारणीभूतस्य शरीरादिकस्यासत्त्वात्। अतो नेश्वरस्य ज्ञानचिकीर्षाप्रयत्नानां सम्भवः। ज्ञानचिकीर्षाप्रयत्नाधारताया एव कर्तृत्वात् नैव कर्तृत्वस्यापि सम्भवः। यदि च निमित्तकारणमन्तरेणापि ज्ञानचिकीर्षा-प्रयत्नानामुत्पत्तिः स्वीक्रियते तदा कर्तारमन्तरेणाप्यङ्कुरादेरुत्पत्तिः कथं न स्यात्? अत्र नैयायिकः प्रवदति-यदि ज्ञानचिकीर्षाप्रयत्नानामीश्वरीयाणां जन्यता स्यात्तदा तेभ्यः कारणापेक्षाऽस्ति इति युज्यते। ईश्वरीयज्ञानचिकीर्षाप्रयत्नानाञ्च नित्यत्वाङ्गीकारान्न तेभ्यः कारणापेक्षा। तदा जैनैः प्रतिविधीयत एतत् यत्एते ईश्वरीयज्ञानचिकीर्षाप्रयत्ना नित्या न सन्ति प्रमाणविरोधात्। प्रमाणञ्चास्त्येतेषामनित्यत्वेऽनुमानमेव। तथाह्यनुमानम् "ईश्वरज्ञानादयोऽनित्या ज्ञानत्वादिमत्त्वादस्मदादिज्ञानादिवत्" यदि चेश्वरीयज्ञानादीनां ज्ञानादीनामनित्यत्वरूपस्य दृष्टस्य स्वभावस्यातिक्रमः स्वीक्रियते तदा वनस्पत्यादीनामेव कथं कार्यत्वसामान्येऽपि सकर्तृकत्वरूपस्य स्वभावस्यातिक्रमो नाङ्गीक्रियते? अतः वनस्पत्यादौ व्यभिचारो भविष्यत्येव।

## ईश्वरस्य जगत्कर्तृत्वस्वीकारे युक्तिविरोधः

लोके ययोरन्वयव्यतिरेकौ गृह्येते तयोः कार्यकारणभावः स्वीक्रियते। तथा हि आर्द्रेन्धनसंयोगसत्त्वे धूमसत्त्वम्, आर्द्रेन्धनसंयोगाभावे धूमाभावः इति रीत्या

आर्द्रेन्धनसंयोगस्य धूमं प्रत्यन्वयव्यतिरेकौ गृह्येते। अतः धूमं प्रत्यार्द्रेन्धनसंयोगस्य कारणत्वं गृह्यते, ईश्वरस्यानादित्वेन विभुत्वेन व सर्वत्र सर्वदा विद्यमानतया न वा दैशिको व्यतिरेकः सम्भवति, न वा कालिको व्यतिरेकः सम्भवति। व्यतिरेक-ग्रहाभावादस्य कार्यकारणभावोऽपि गृहीतुं न शक्यते।[९५] यदि सिसृक्षायाः कारणत्वं स्वीक्रियते तदापि नैवास्या अपि कार्यकारणभावो गृह्यते, ईश्वरेच्छायाः सिसृक्षायाः नित्यत्वस्वीकारात् तस्या अपि अन्वयव्यतिरेकौ व्यतिरेकाभावान्नैव गृहीतुं शक्यौ।[९६] कार्यकारणभावस्यान्वयव्यतिरेकोभयसाध्यत्वात् अन्वयव्यतिरेकयोः ग्रहणाभावाच्च नेश्वरस्य कर्तृत्वस्वीकारो युज्यते।

अपि चेश्वरस्य ईश्वरीयज्ञानस्य च नित्यत्वात् कार्याणां क्रमो न स्यात्, समेषां कारणीभूतस्य सर्वदा सत्त्वाद् युगपदेवोत्पत्तिः स्यात्। परन्तु कार्याणां क्रमस्यानुभवो भवति। अतो नेश्वरस्य ईश्वरीयज्ञानस्य वा कारणत्वमङ्गीकर्तुं युक्तम्।[९७]

अपि च, नैयायिकोऽनुमानतो जगतः सकर्तृकत्वं संसाध्यानन्तरं जगतः कर्तेश्वरः वैमत्यसंभावनाभयेन चास्यैकत्वमिति स्वीकरोति। परन्तु नैतदपि साधु, यतो हि अनेककीटिकाशतेन शक्रमूर्ध्नः, अनेकशिल्पिभिः प्रासादादीनां, अनेकमधुमक्षिकाभिः मधुच्छत्रादीनां निष्पाद्यत्वेऽपि नैवैकरूपतायां कश्चिद्विरोधः भवति एकस्य कर्तुरसत्त्वेऽपि न तत्र वैमत्यसम्भावना दृश्यतेऽतो यदि जगतोऽस्य सकर्तृकत्वं सिद्धमपि स्यात्तदापि नैवैकः कश्चिदीश्वरोऽङ्गीकर्तुं शक्यः कर्तुरेकस्याभावेऽपि शक्रमूर्धादीनां सम्भवदुत्पत्तिकत्वात् जगतोऽपि तथैव सम्भवात् यदि चैतेष्वपीश्वरस्यैकस्य कर्तृत्वं स्वीक्रियते तर्हि भगवन्तं प्रत्यनेन नैयायिकस्यात्यन्तं श्रद्धैव प्रकटीभवति नत्वनुमानेनेश्वरस्य सिद्धिः। अपि चैवं घटपटादिकं प्रत्यपीश्वरस्यैव कर्तृत्वं कुतो नाङ्गीक्रियते कुम्भकारकुविन्दतिरस्कारेण? कुम्भकारकुविन्दादीनां प्रत्यक्षसिद्धस्य कर्तृत्वस्यापलापः कुतः कर्तुं शक्यते यद्येवमुच्यते तदा कीटिकादीनामपि प्रत्यक्षसिद्धं शतमूर्धादिकर्तृत्वं कथमपलपितुं शक्यते?[९८] अतो वैमत्यभये- नेश्वरस्यैकत्वकल्पना भोजनादिव्ययभयात् कृपणस्यात्यन्तवल्लभपुत्रकलत्रादिपरित्यागेन शून्यारण्यानीसेवन-तुलामाकलयति।[९९]

अपि चेश्वरस्य जगत्कर्तृत्वे स्वीकृते प्रश्नोऽयं सञ्जायते यदयं जगन्निर्मिमाणस्त-क्षादिवत् साक्षाद्देहव्यापारेण जगन्निर्मितीतेऽथवा सङ्कल्पमात्रेणैव? यदि प्रथमः पक्षस्तदा भूभूधरादीनां निर्माणेनैव महान् कालक्षेपः सम्भवति तथा हि बहुकालं यावत् संसाररचना नैव सम्भवति।[१००] यदि चापरः पक्षस्तर्हि सङ्कल्पमात्रेणैव

कार्यकल्पनायां नियतदेशस्थायित्वेऽपीश्वरस्य नास्ति किञ्चिद्दूषणमतः सर्वगतत्वमस्य नैवाङ्गीकर्तव्यम्।[१०१]

अपि च, ज्ञानमात्रेणैवायं समस्तकार्योत्पत्तौ प्रभुरित्यत्रानुमानं प्रदर्शनीयम्।[१०२] यतो हि लोके न हि कश्चिदपि ज्ञानमात्रेण कार्योत्पत्तौ प्रभुर्भवति। एतदर्थं यद्यस्येच्छापि स्वीक्रियते तर्हि सेच्छा नित्या वाऽनित्या वेति? यदि नित्यत्वपक्षस्तदाऽनभिव्यक्तेयमिच्छा कुतः क्रियाहेतुः स्यात्? किञ्च कर्माभावेपीश्वरेच्छायाः स्वीकरणं नैव युज्यते।[१०३] ईश्वरीयज्ञानस्य नित्यत्वाच्च कार्याणां क्रमो न जायेत, कार्याणां क्रमभावित्वं तदैव सम्भाव्यते यदेश्वरो वा तदीयज्ञानं वाऽनित्यं स्यात् ईश्वरस्य, ईश्वरीयज्ञानस्य चोभयोः नित्यत्वात् सदैव कारणस्योपस्थिततत्वात् कार्याणां युगपद्भावित्वमेव स्यात्। न तु क्रमभावित्वम्।[१०४] परन्तु कार्याणां क्रमभावित्वं दृश्यतेऽतः ईश्वरस्य, तदीयज्ञानस्य च कारणत्वस्वीकारो नैव युक्तिसङ्गतः।

किञ्चेश्वरो मुक्तात्मवन्नैव जगत्कर्ता भवितुमर्हति अशरीरत्वात्। यदि चेत् सशरीरोऽयं जगत्सृजतीति स्वीक्रियते तर्हि भवदिष्टव्याघातः। सशरीरस्तु नाकर्मा सम्भवति यथा चाज्ञो जीवः सशरीरः, स च नाकर्मा तथैवेश्वरोऽपि सशरीरो नायमपि कर्मविरहितः भवितुमर्हति।[१०५] तथा चात्रोभावेव कल्पौ सम्भवतः-ईश्वरोऽयं शरीररहितो वा सशरीरो वा। प्रथमे कल्पे मुक्तात्मवदस्य न जगत्सर्जकत्वं द्वितीये च कल्पेऽज्ञजीववन्नास्याकर्मत्वं सम्भवति। अतो नेश्वरस्य जगत्सर्जकत्वम्।

अत्र जैनैः "जगदीश्वरयोरन्वयव्यतिरेकौ नैव गृह्येतेऽतो जगत् प्रतीश्वरस्य कारणत्वं स्वीकर्त्तुमयुक्तम्" इत्युक्तम्। तत्र नैयायिकः प्रष्टुं शक्नोति यद्यथा जगदीश्वरयोरन्वयव्यतिरेकौ नैव गृह्येते तथैव जगददृष्टयोरप्यन्वयव्यतिरेकौ नैव गृह्येते। तर्हि धर्माधर्मयोरपि (अदृष्टस्यापि) क्षित्यादिकं प्रति कारणता न स्यात्। अदृष्टस्य तु क्षित्यादिकं प्रति कारणता जैनैरपि स्वीक्रियत एव। एवमेकत्रान्वयव्यतिरेकानुविधानाभावेऽपि तत्र कारणत्वमङगीक्रियतेऽपरत्र चान्वयव्यतिरेकानुविधानाभावात् कारणत्वं नास्तीत्युच्यते इति कथमुपपद्यते? तदा जैनैः समाधीयते यज्जगतो वैचित्र्यस्यान्यथाऽनुपपत्त्याऽदृष्टस्य जगत्कारणत्वं स्वीक्रियतेऽन्यथा भूम्यादेः खलु सकलकार्यं प्रति साधारणत्वाददृष्टाख्यविचित्रं कारणमन्तरेण जगतो वैचित्र्यस्यानुपपत्तिः स्यात्।[१०६] ईश्वरस्य त्वन्वयव्यतिरेकानुविधानाभावेऽपि स्वीकरणे न काचिद्विनिगमना।

**अस्त्वीश्वरो जगत्सृष्टा परन्तु केन रूपेणायं जगत्सृजति?**

किञ्चिदपि कारणं किञ्चिदपि कार्यं प्रति केनचिद्रूपेणैव कारणं भवति

तद्रूपमेव कारणतावच्छेदकपदेन बोध्यते। क्षित्यादिकं प्रतीश्वरस्य कारणत्वं स्वीक्रियते नैयायिकैः तर्ह्येतस्याः कारणताया अवच्छेदकं किम्? केन रूपेणायमीश्वरो जगत्कारणम्?

(१) सत्तामात्रेण

(२) ज्ञानवत्त्वात्

(३) ज्ञानेच्छाप्रयत्नवत्त्वात्

(४) ज्ञानेच्छाप्रयत्नपूर्वकव्यापारवत्त्वात्

(५) ऐश्वर्याद्वा।

(१) यदि प्रथमः पक्षः अर्थात् यदि सत्तामात्रं कारणताया अवच्छेदकं तदा सत्तारूपस्य कारणतावच्छेदकस्य कुलालादावपि विद्यमानत्वात् तेषामपि जगत्कर्तृत्वमापद्यते।[१०७] कारणतावच्छेदकं यत्र यत्र भवति तस्य तस्य कारणत्वमिति नियमः। कारणतावच्छेदकीभूतायाः सत्तायाः कुलालादावपि विद्यमानतया कुलालादेरपि जगत्कर्तृत्वमापन्नं भवति।

(२) ज्ञानवत्त्वं यदि कारणतावच्छेदकम्, तदा ज्ञानवत्त्वात् योगिनामपि जगत्कर्तृत्वमापद्यते। जगन्निष्ठकार्यतानिरूपितकारणतावच्छेदकस्य ज्ञानवत्त्वस्य योगिपुरुषेष्वपि विद्यमानत्वात्।[१०८] योगिनामपि सर्वज्ञत्वस्य जैनमते सिद्धत्वात्।

(३) यदि तृतीयः पक्षोऽर्थात् ज्ञानेच्छाप्रयत्नवत्त्वस्य कारणतावच्छेदकत्वम्। सर्वपदार्थविषयकज्ञानवत्त्वस्य योगिषु सत्त्वेऽपि इच्छावत्त्वस्य प्रयत्नवत्त्वस्य चासत्त्वात् तेषु कारणतावच्छेदकं ज्ञानेच्छाप्रयत्नवत्त्वं नास्ति। अतो न योगिनां क्षित्यादिकारणत्वमा-पद्यते तर्हि नैषः पक्षोऽपि समीचीनतां भजतेऽशरीरस्येश्वरस्य ज्ञानेच्छाप्रयत्नाद्याश्रयत्वा-सम्भवात्।[१०९] लोके दृश्यते यत् सशरीर एव ज्ञानेच्छाप्रयत्नाश्रयो भवति नत्वशरीरः। यद्यशरीरोऽपि ज्ञानेच्छाप्रयत्नाश्रयो भवेत्तदा मुक्तात्मनोऽपि ज्ञानाद्याश्रयत्वमापद्यते। अतो न ज्ञानेच्छाप्रयत्नाश्रयत्वस्यापि कारणतावच्छेकदकत्वकल्पनं युज्यते।

(४) यदि ज्ञानेच्छाप्रयत्नपूर्वकव्यापारवत्त्वस्य कारणतावच्छेदकत्वमिति पक्षः। तर्हि नैतदपि युज्यते। ईश्वरस्याशरीरस्य कायवाक्कृतव्यापाराणामसम्भवात्। अतो नैवमपि ज्ञानेच्छाप्रयत्नपूर्वकव्यापारवत्त्वेनेश्वरस्य कारणता।[११०]

(५) यदि क्षित्यादिकारणताया अवच्छेदकमैश्वर्यं (ईश्वरत्वं) इति पक्षस्तदा प्रश्नोऽयं जायते यत् किमिदमैश्वर्यं नाम? तदपि ज्ञातृत्वं वा स्यात्, कर्तृत्वं वा स्यात्? अन्यद्वा। यद्याद्यः पक्षस्तदा प्रश्नो भवति ज्ञातृत्वमात्रं सर्वज्ञातृत्वं वेति। यदि ज्ञातृत्वमात्रं कारणतावच्छेदकं तदाऽसौ ज्ञातैव स्यात् नेश्वरः। यदि सर्वज्ञातृत्वं कारणतावच्छेदकं तदाऽप्यस्य सुगतादिवत् सर्वज्ञत्वमेव स्यान्नैश्वर्यम्।[१११] यदि

कर्तृत्वस्य कारणतावच्छेदकत्वमिति पक्षस्तर्हि कर्तृत्वस्य ज्ञानेच्छाप्रयत्नपूर्वकव्यापारवत्त्वात्मकतया तस्य च पूर्वमेव खण्डितत्त्वान्नास्यापि कारणतावच्छेदकत्वं सम्भाव्यम्। इत्येतेषु नहि कश्चिदपिः पक्षः सम्भवति। कारणतामात्रस्य सावच्छिन्नत्वं नैयायिकैः स्वीक्रियतेऽतोऽस्या अपि कारणतायाः सावच्छिन्नया भाव्यम्। कारणतावच्छेदकस्य असम्भवतया नेश्वरस्य क्षित्यादिकं प्रति निमित्तकारणत्वं सम्भाव्यते।

## जगन्निर्मापयतोऽस्य प्रयोजनं किम्?

प्रेक्षावतां प्रवृत्तिः प्रयोजनमूलिकैव भवति। अत ईश्वरस्य जगत्सर्जने प्रयोजनमूलिकैव प्रवृत्तिरिति स्वीकर्तव्यम्। यदीश्वरस्य क्षित्यादिकर्तृत्वं स्वीक्रियतेऽपि चेत् तत्र किं तावत् प्रयोजनमीश्वरस्य जगन्निर्मापयतः?

(१) यथारुचिः
(२) अदृष्टम्
(३) करुणा
(४) लीला
(५) पुरस्कारदण्डौ
(६) स्वभावः

(१) तत्र यदि यथारुचिप्रवृत्तिरीश्वरस्यायं पक्षस्तदा नैतद् युज्यते। यतो ह्येवं जगतो निरुद्देश्यत्वमेव स्वीकृतं भवति।[११२] एवं यथारुचि प्रवर्त्तमान ईश्वर उपास्योऽपि नैव भविष्यति।

(२) यदि जीवानां प्रारब्धवशादयं जगत्सृजति। तर्हि कुतोऽस्य जगत्कर्तृत्वम्। एवन्तु जीवकृतकर्मणामेवैश्वर्यं द्योतितं भवति।[११३]

(३) यदि करुणयाऽयं शरीरसर्गे प्रवर्तते इति पक्षस्तर्हि नैतदपि युज्यते। करुणा नाम परदुःखप्रहाणेच्छा। सर्गात् पूर्वं शरीरेन्द्रियविषयविरहितानां जीवानां कारणाभावात् कार्याभावः इति न्यायेन दुःखहीनत्वात् कस्य प्रहाणेच्छारूपं कारुण्यं स्यात्। सर्गोत्तरकाले दुःखिनोऽवलोक्य कारुण्यस्वीकारे तु दुरुद्धरोऽन्योन्याश्रयो दोषः कारुण्येन सृष्टिः, सृष्ट्या च कारुण्यम्।[११४]

अपि च यदि कारुण्यादयं सर्गे प्रवर्तते तर्हि सुखबहुलामेव सृष्टिं जनयेत् न तु दुःखबहुलाम्। करुणावतोऽप्यस्य यातनाशरीरोत्पादकत्वेन प्राणिनां दुःखोत्पादकत्वं नैव युज्यते।

यदि धर्माधर्मसहकारेणायं करुणया सर्गे प्रवर्तते, अतः सुखवद्दुःखमपि जनयत्ययम्। फलोपभोगेन च धर्माधर्मयोः प्रक्षये सति प्राणिनां मोक्षः स्यात्, एवं निग्रहस्याप्युपकारार्थत्वात् करुणया सर्गविधानेऽप्यस्य प्रवृत्तौ न किञ्चिद् बाधकम् इत्युच्यते। तदपि न युज्यते, तथा हि धर्माधर्मयोरीश्वरकारणत्वं न वा? यदि धर्माधर्मयोरीश्वरकारणत्वमस्ति इति पक्षस्तदाऽऽक्षेपो भवति-कुतोऽयं धर्माधर्मावुत्पादयति। उत्पाद्य च फलोपभोगद्वारा क्षयीकरोति। यदि क्षयीकरणमेव लक्ष्यं तर्हि नैव दृश्यत उत्पत्तिकरणायासस्य प्रयोजनम्। नहि कश्चित्प्रेक्षाकारी भूमिं खनित्वा पुनः समीकरोति।[११५] अपि च तदाऽपरिपक्वानामेव तेषां क्षयः कर्तव्यः तेन च जगदुपकृतं भविष्यति।[११६] यदि धर्माधर्मयोरीश्वरकारणत्वं नास्ति तदा तयोरीश्वराजन्यत्वात् कार्यत्वाच्च ईश्वरकर्तृकत्वसाधनस्य कार्यत्वहेतोः व्यभिचारित्वं स्पष्टमेव।[११७] अपि च धर्माधर्मयोरुत्पत्तौ यदि भगवतोऽव्यापारस्तदा विनाशेऽपि तद्व्यापारस्य काऽऽवश्यकता? कारणान्तरोत्पन्नसुखदुःखोपभोगेनैवानयोः क्षयसम्भवात्। ईश्वरस्यापि तत्फलोत्पादनादन्यत् तत् क्षयकर्तृत्वं नास्ति।

अपि च, अदृष्टापेक्षस्यास्य कार्यकर्तृत्वे स्वीकृतेऽनुपकारकस्यापेक्षायोगात् धमाधर्मकृतोपकारोऽस्यावश्यमेव स्वीकार्यः। अदृष्टस्य चेश्वराद्भेदे द्वयोः सम्बन्धासम्भवः, सम्बन्धकल्पनायाञ्चानवस्था। अदृष्टादीश्वरस्यैक्येऽदृष्टकरणे महेश्वर एव कृतो भवति ततश्चेश्वरस्य नित्यत्वं विलीयते।[११८] यदि भगवतः कश्चिदुपकारो नैव क्रियतेऽदृष्टेन किन्तु भगवददृष्टाभ्यामेकीभूय कार्यमेव विधीयते सहकारित्वञ्चैककार्यकारित्वरूपम् इति पक्षस्तर्हि नैतदपि युज्यते। यतो हि यद्यदा यज्जननसमर्थं तत्तदा तज्जनयतीति सिद्धान्तः। यथाऽन्त्यावस्थाप्तं बीजमङ्कुरजननसर्थं तद्बीजमङ्कुरं जनयति। कुसूलस्थं बीजञ्च नाङ्कुरजननसमर्थं न तदङ्कुरं जनयति। एवमेव महेश्वरः उत्तरकालभावि सकलं कार्यं पूर्वकार्योत्पत्तिसमये न जनयति, अतः उत्तरकालभाविकार्यं प्रति महेश्वरस्य नैव कारणत्वम्। तज्जननस्वभावोऽप्ययं सहकार्यभावात् पूर्वकार्योत्पत्तिसमये न भाविकार्यं जनयति इत्यपि नैव चोदनीयम्-समर्थस्वभावस्यापरापेक्षायोगात्। नैयायिकेनेश्वरः समर्थस्वभावः अदृष्टापेक्षश्चेति स्वीक्रियते विरुद्धञ्चैतत्। अतोऽदृष्टापेक्षमस्य सर्गे प्रवर्तनं नैव युज्यते।[११९] अपि चायमीश्वरः जीवानां दुःखं दूरीकर्तुं समर्थोऽसमर्थो वा? यदि जीवानां दुःखमपाकर्तुं समर्थोऽप्यं दुःखान्नैवापाकरोति तदा कीदृशी चास्य करुणा? यदि चायं जीवकृतकर्मफलानपाकर्तुमसमर्थस्तदा सर्वशक्तिमत्ता कीदृशी?

(४) लीलया सर्गे प्रवर्त्तनमस्येति पक्षे प्रश्नो भवति लीलायाः किं तात्पर्यम्? यदीयं लीला रहस्यपूर्णा मानवबुद्धेरविषया तदा नास्य वादचर्चायाः

विषयत्वम्। यदि च क्रीडारूपेयं लीला तदाऽस्याभिप्रायो भवति यत्ईश्वरः उद्वेजितः सन् मनोरञ्जनाय सर्गमिमं रचयति। एवं च सति नरत्वमारोपितं भवतीश्वरे, प्रतीयते चायं स्वस्मिन्नपूर्णोऽस्ति। यदि च लीलाया अभिप्रायो विद्यते यदयमीश्वरः स्वकीयया कार्यशक्त्याऽभिभूतः क्रियाशीलो भूत्वा सर्गे प्रवर्त्तते तदैतद्ध्वन्यते यदियं सृष्टिः स्वयमेवोद्देश्यं विनैव सञ्चालिता भवति। अतः ईश्वरकल्पनाया किञ्चिदपि प्रयोजनं नैव प्रतिभाति।

(५) पुरस्कारविधानार्थं दण्डविधानार्थञ्चास्य प्रवृत्तिस्वीकारोऽपि न युज्यते। तथा सति यथा लौकिको राजा सेवानुरोधेन फलं प्रददाति तथैवायमपि कर्मानुरोधेन फलं ददाति इति पक्ष आयाति। एवं च सति सेवायत्तफलप्रदस्य राज्ञो यथा रागादियोगो नैर्घृण्यं सेवायत्तता च विद्यन्ते तथैवेश्वरस्यापि स्यादेतत् सर्वम्।[१२०] एवं च मनुष्यत्वमेवारोपितं भवति भगवति।

(६) यदि स्वभावतः सृजति जगदिदमीश्वर इति पक्षस्तर्हि सृष्टौ निरुद्देश्यत्व-मापतितं भवति। यदि कर्तुः स्वीकारेऽपि निष्प्रयोजनत्वमेव जगतोऽन्ततः स्वीकर्तव्यमस्ति तर्हि कर्तुरस्वीकार एव कथं न क्रियते ये ये च भावाः सन्ति तेषां तेषां स्वभाववशादेव जगतः उत्पत्तिर्भवति एवं रीत्या नैव किञ्चिदपि प्रयोजनं सम्भवति, सृष्टिरचनायाः, निष्प्रयोजनस्य चेश्वरस्य क्षित्यादिकर्तृत्वं नैव युज्यते एवं दुःखबहुलायाः सृष्टेः प्रयोजनाभावात् द्रोहमकुर्वतः बुद्धिमानीश्वरः कुतो जीवान् भवक्लेशेन योजयेत्।[१२१]

## अदृष्टाधिष्ठातृतयापि नेश्वरसिद्धिः

नैयायिकानां सिद्धान्तो विद्यते यदचेतने चेतनमधिष्ठातारं विना स्थित्वा प्रवृत्तिर्न सम्भवति यथा वास्यादीनां चेतनमधिष्ठातारं विना स्थित्वा प्रवृत्तिर्न भवति। अदृष्टस्य स्थित्वा प्रवृत्तिर्भवति, अचेतनञ्च तत् अतः तेनापि चेतनेनाधिष्ठायकेन भवितव्यम्। तथाचानुमानप्रयोगः-अदृष्टं चेतनाधिष्ठितं कार्ये प्रवर्ततेऽचेतनत्वात् तन्त्वादिवत्। अनेनानुमानेनादृष्टस्याधिष्ठाता सिद्ध्यति। अस्मदात्मनोऽधिष्ठातृत्वस्या-सम्भवात्। अस्मदादीनामदृष्टपरमाण्वादिविषयकविज्ञानाभावात्। अकस्मादचेतनस्यापि प्रवृत्तिस्वीकारे निष्पन्नेऽपि कार्ये विवेकशून्यत्वादचेतनं प्रवर्त्तेत। अतोऽदृष्टस्या-धिष्ठाता कश्चित् स्वीकार्यः, अस्मदात्मनोऽधिष्ठातृत्वस्यासम्भाव्यतयेश्वरस्यैवादृष्टा-धिष्ठातृत्वं सिद्ध्यति।

अत्र जैनैः प्रतिविधीयते यदस्यादृष्टपरमाण्वादिविषयकज्ञानवत्त्वमेव सिद्धं नास्ति। क्षित्यादिकर्तृत्वादेव तद्विषयकज्ञानवत्त्वमङ्गीकर्तुं शक्यते सत्येवं अन्योन्याश्रय-दोषो भवति यतो हि यदा सकलजगदुपादानविषयकज्ञानवत्त्वमस्य सिद्ध्यति तदैवास्य

क्षित्यादिकर्तृत्वं सिद्धं भविष्यति। यदा च क्षित्यादिकर्तृत्वमस्य सिद्ध्यति तदैव चास्य जगदुपादानविषयकज्ञानवत्त्वं सिद्धं भविष्यति।[१२२]

अपि यथाऽचेतनस्य चेतनाधिष्ठितस्य प्रवृत्तिर्दृश्यते तथैव चेतनस्यापि चेतनान्तराधिष्ठितस्य प्रवृत्तिर्दृश्यते यथा च शिबिकादिवाहकानां चेतनान्तराधिष्ठितानां प्रवृत्तिर्भवति। अत एवं भगवतोऽपि चेतनान्तराधिष्ठितस्यैव प्रवृत्तिरिति आपद्यते। स्वामिनोऽनधिष्ठितस्यापि प्रवृत्तिरुपलभ्यते इति चेदुच्यते तर्ह्येतत्तु अंकुरादौ समानः।[१२३] अङ्कुरादीनामपि चेतनान्तरानधिष्ठितस्यैव प्रवृत्तिर्भवति न हि कश्चिदधिष्ठाता तत्रोपलभ्यते। यदि घटाद्युपादानस्य चेतनानधिष्ठितस्य प्रवृत्त्यनुपलम्भात् अङ्कुराद्युपादानस्यादृष्टादेश्च चेतनानधिष्ठितस्य प्रवृत्त्यनुपलम्भो यदि कल्प्यते तदा शिबिकावाहकादीनामपि स्वाम्यनधिष्ठितस्य प्रवृत्तेरनुपलभ्यमानतया महेश्वरेऽपि कश्चिदधिष्ठातृचेतनान्तरं कल्पनीयमित्यनवस्था आपद्यते। अतः कार्योपादानकारणादृष्टादेरचेतनस्यापि देशादिनियमो युक्तः। एतच्च भवता नैयायिकेनापि स्वीकर्तव्यमेव, अन्यथा सर्वत्र सर्वदा सर्वेषां कार्याणामुत्पत्तिः सञ्जायेत चेतनस्याधिष्ठातुरीश्वरस्य सर्वदा सर्वत्र सन्निधानात्।[१२६]

अतोऽदृष्टादेरचेतनस्यापि चेतनमधिष्ठातारं विना प्रवृत्तिर्भवतीत्येव स्वीकरणीयम्। जीवाः कर्माचरणे स्ववशाः सन्ति किन्तु कर्मफलोपभोगे परवशाः सन्ति यथा वृक्षारोहणे पुरुषः स्ववशो भवति किन्तु वृक्षादवतरणे परवशो भवति। कदाचित् कर्माणि जीववशानि भवन्ति कदाचिच्च जीवाः कर्मवशा भवन्ति यथा कदाचिदधमर्णो बलवान् भवति यावत् सः द्रव्यं नैव धारयति, कदाचिच्चोत्तमर्णो बलवान् भवति यदा चाधमर्णः धनं धारयति।[१२५] एवमदृष्टं चेतनमधिष्ठातारं विनैव फलं प्रददाति, अतोऽदृष्टाद्यधिष्ठातृतयाऽपि नेश्वरः सिद्ध्यति।

**आगमस्याप्रामाण्यान्न तत्प्रणेतृतयापि सर्वज्ञभगवत्सिद्धिः**

आगमस्य पूर्वापरविरुद्धार्थवचनोपेतत्वादसर्वज्ञप्रणीतत्वमेवास्ति तथा हि-"न हिंस्यात् सर्वभूतानि" इति प्रथममुक्त्वा "अग्निषोमीयं पशुमालभेत" इत्यादिभिर्वाक्यैः हिंसाया विधानं क्रियते। "नानृतं ब्रूयात्" इति अनृतभाषणं निषिध्यानन्तरं "न नर्मयुक्तं वचनं हिनस्ति" इत्यादिवाक्यैरनृतभाषणे दोषाभावः प्रदर्श्यते तथैव "परद्रव्याणि लोष्ठवत्" इत्युक्त्वा चौर्यं निषिध्यानन्तरं "यद्यपि ब्राह्मणो हठेन परकीयमादत्ते छलेन वा तथापि तस्य नादत्तादानम्" इत्यादिभिर्वाक्यैः हठेन परधनादानं विधीयते। एवमेव "अपुत्रस्य गतिर्नास्ति" इति लपित्वाऽन्यत्र च "अनेकानि सहस्राणि

कुमारब्रह्मचारिणाम्" इत्यादिभिर्वाक्यैः ब्रह्मचारिणां स्वर्गगमनं प्रतिपाद्यते। एवं पूर्वापरविरोधात् कथमागमानां प्रामाण्यं स्यात्?[१२६] अन्येऽपि दोषा एवमागमेषु विद्यन्तेऽतो वेदानामसर्वज्ञप्रणीतत्वमेव सिद्ध्यति न तु सर्वज्ञेश्वरप्रणीतत्वम्। सर्वज्ञेश्वरप्रणीतत्वे च कुत एवं विधा दोषाः सम्भाव्यन्ते।

**सम्प्रदायप्रद्योतकतयाऽपि न तत्सिद्धिः**

सर्गादौ व्यवहारस्यान्योपदेशपूर्वकतया उपदेशकत्वेन चेश्वरसिद्धिं वाञ्छन्ति नैयायिकाः न चैतदपि साधु। प्रलयस्यैव जैनमतेऽस्वीकारात् सर्गादेरप्रसिद्धतया कुत उपदेशकस्यावश्यकता? किञ्च सर्गादौ पुरुषाणां व्यवहारः अन्योपदेशपूर्वकः इत्यत्र किमन्योपदेशपूर्वकत्वमात्रं साधनीयम्? यदि केवलमन्योपदेशपूर्वकत्वमात्रं साधनीयं तदा सिद्धसाध्यता, अनादेर्व्यवहारस्यान्योपदेशपूर्वकत्वेन सर्वेषामपीष्टत्वात्। यदि चेश्वरोपदेशपूर्वकत्वं साध्यते तदा व्यभिचारः, ईश्वरोपदेशं विनापि व्यवहारे प्रत्यर्थनियतत्वस्य सम्भवात्। अपि चास्य मुखरहितत्वेनोपदेष्टृत्वमपि मुक्तात्मवत् नैव सम्भाव्यते।[१२७] अतो नैवमपि भगवतो महेश्वरस्य सिद्धिः।

**एवमेव नागमतोऽपीश्वरसिद्धिः**

यदि चागमतो नैयायिकः ईश्वरं साधयति "विश्वतश्चक्षुरुत" इत्यादिभिः प्रमाणैस्तर्हि नैतदपि शक्यम्। यतो आगमस्य प्रामाण्यं वक्त्रधीनम्। आगमानाञ्च भगवत्प्रणीतत्वमन्यप्रणीतत्वं वा? यदि भगवत्प्रणीतत्वमागमानां तदाऽन्योन्याश्रयः प्रसज्यतेयदा ह्यागमानां प्रामाण्यं सिद्ध्यति तदेश्वरसिद्धिः, यदा चेश्वरसिद्धिस्तदाऽऽगमानां प्रामामाण्यम्।[१२८] अपि चायमीश्वरः स्वयमेव वेदं निर्मीय स्वगुणवर्णनं करोति तच्च महतामनधिकृतम्। कश्चिदपि महात्मा स्वयमेव स्वगुणान् नोत्कीर्तयति। ईश्वरोऽयं "विश्वतश्चक्षुरुत" इत्यादिक्रमेण स्वयमेव स्वगुणान् कीर्तयति, हीयतेऽनेनास्य महत्ता।[१२९] अन्यच्च शास्त्रकर्तृत्वमपीश्वरस्य नैव सम्भवति। शास्त्रस्य वर्णात्मकत्वेन ताल्वादिव्यापारजन्यत्वात् सशरीरस्यैव कस्यचित् शास्त्रकर्तृत्वं युक्तम्। ईश्वरस्य तु शरीरराहित्याच्छास्त्रकर्तृत्वं कुतः स्यात्।?[१३०] ईश्वरस्य शरीरन्तु नाङ्गीकरोति नैयायिकः। यदि चागमस्यान्यप्रणीतत्वं स्वीक्रियते तदा सोऽन्यःसर्वज्ञो वाऽसर्वज्ञो वेति प्रश्नः उदेति। अन्यस्य च सार्वज्ञ्ये द्वैतापत्तिरीश्वरस्य, असार्वज्ञ्ये च कस्तस्य वचसि विश्वसेत्।[१३१]

**निष्कर्षः**

एवं न्यायाभिमतेश्वरस्य केनचिदपि प्रमाणेन नैव सिद्धिः सम्भवति। न हि

कश्चिदनादिसिद्धः परमात्मा विद्यते। सोऽयं न्यायाभिमतेश्वरः जैनदर्शनानुसारमलीक एव। विनाऽपि परमेश्वरं जागतिकव्यवस्थायाः सुष्ठुतरं सञ्चलनं सम्भवति। जगदुद्धाराय कस्यचिदीश्वरस्य कल्पनं द्रव्याणां निजं स्वरूपमेव परतन्त्रीकरोति। अनादिकालतो जडाश्चेतनाश्च पदार्थाः स्वकीयोत्पादव्ययध्रौव्यरूपेण स्वभावेन परस्परं सापेक्षाः सन्तोऽपि क्वचित् स्थूलया बाह्यसामग्र्या निरपेक्षा अपि स्वयमेव परिणमन्ते। नास्ति कस्यचिन्नियन्त्रकस्यावश्यकतैतदर्थम्।

## पादटिप्पणी

१. जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम्। तत्त्वार्थसूत्रम् १/४
२. चैतन्यलक्षणो जीवः। षड्दर्शनसमुच्चयः ४९ कारिका
३. उत्पादव्ययध्रौव्ययुक्तं सत् ।। तत्त्वार्थसूत्रम् ५/३०
४. तद्भावाव्ययं नित्यम्-तदेव ५/३१
५. उपयोगो लक्षणम्। तदेव २/८
६. षड्दर्शनसमुच्चयः गुणरत्नटीका, पृ० ७४
७. जीवोः उवओगमओ अमुत्ति कत्ता संदेह परिमाणो।
भोत्ता संसारत्थो सिद्धो सो विस्ससोड्ढगई।। द्रव्यसङ्ग्रहः गाथा २
८. प्रमेयरत्नमाला, पृ० २९७-२९८
९. स्पर्शरसगन्धवर्णवन्तः पुद्गलाः।। तत्त्वार्थसूत्रम् ५/२३
१०. एयरसबण्णगन्धं दो फासं सद्कारणमसद्दं। पञ्चास्तिकायः गा० ८१
११. षड्दर्शनसमुच्चयः गुणरत्नटीका, पृ० ६९-७०
१२. स्निग्धरूक्षत्वाद् बन्धः। तत्त्वार्थसूत्रम् ५/३३
१३. वर्तनापरिणामक्रियापरत्वापरत्वे च कालस्य च।। तत्त्वार्थसूत्रम् ५/२२
१४. भारतीयदर्शन (जैनदर्शन) बल० उपाध्याय, पृ० १४०
१५. जैनदर्शन-डॉ० महेन्द्रकुमार, पृ० १७२-१७३
१६. कायवाङ्मनः कर्मयोगः। स आस्रवः।। त०सू० ६/१-२
१७. सर्वदर्शनसङ्ग्रह, पृ० ७३-७४
१८. सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः ।। त० सू० ८/२
१९. मिथ्यादर्शनाविरतिप्रमादकषाययोगाः बन्धहेतवः।। त०सू० ८/१
२०. सर्वदर्शनग्रहः पृ० ७५-७६
२१. आस्रवनिरोधः संवरः।। त० सू० ९/१
२२. त० सू० ८/२-३
२३. स० द० सं०, पृ० ८०
२४. बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः। त० सू० १०/२

२५. न्या० वि० श्लो० ४६५
२६. तद्द्वेधा प्रत्यक्षेतरभेदात् ।। परीक्षामुखसूत्रम् २/१-२
२७. विशदं प्रत्यक्षम्।। तदेव २/३
२८. परीक्षामुखसूत्रम् २/४
२९. प्रमेयरत्नमाला, पृ० ७०
३०. इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम्।। परीक्षामुखसूत्रम् २/५
३१. प्रमेयरत्नमाला, पृ० ७४
सामग्रीविशेषविश्लेषिताखिलावरणमतीन्द्रियमशेषतो मुख्यम्।। प० मु० सू० २/११
३२. अशेषतो वैशद्ये किं कारणमिति चेत् प्रतिबन्धकाभाव इति ब्रूमः। प्र० र मा०, पृ० ८३
३४. ज्ञस्यावरणविच्छेदे ज्ञेयं किमवशिष्यते। न्यायविनिश्चयः, श्लो० ४६५
३५. आप्तपरीक्षा ९ श्लोक, पृ० ३२
३६. पिक्कम्मा अट्ठगुणा किंचूणा चरमदेहदो सिद्धा।
लोयाग्गठिदा णिच्चा उप्पादवएहि संयुत्ता।। द्रव्यसङ्ग्रहः गाथा १४
३७. कर्ताऽस्ति कश्चिज्जगतः स एकः स सर्वगः स स्ववशः स चैकः।
इमा कुहेवाकविडम्बनाः स्युस्तेषां न येषामनुशासकस्त्वम्।।अन्य०यो०व्य०श्लो० ६
३८. प्रमेयरत्नमाला, पृ० १०४-१०५
३९. "साधनं हि सर्वत्र व्याप्तौ प्रमाणेन सिद्धायां साधनं गमयेत्" इति सर्ववादिसम्वादः। स्याद्वादमञ्जरी, पृ० ३२
४०. न च जगदादौ भूविमानादीनां प्रत्यक्षेण कार्यत्वं प्रतीयते। न्यायावतारसूत्र वार्तिकवृत्तिः, पृ० ३८
४१. तत्राद्यपक्षेऽवयवसामान्येन नैकान्तिकोऽयं हेतुः तदवयवेषु वर्तमानमपि निरवयवमकार्यं च प्रोच्यते। गुणरत्नकृत षड्दर्शनसमुच्चय टीका, पृ० ११७
प्रथमपक्षे सामान्यादिनाऽनेकान्तः गोत्वादिसामान्यं हि सहावयवैर्वर्तते, न च कार्यम्। प्र० क० मा०, पृ० २७०
४२. प्र० क० मा०, पृ० २७०-२७१
४३. पृ० २७१
४४. द्वितीयपक्षे तु साध्यसमो हेतुः यथैव क्षित्यादेः कार्यत्वं साध्यं एवं परमाण्वाद्यवयवारभ्यत्वमपि। गुणरत्नकृत ष० द० स० टीका, पृ० ११७
४५. स हि अवयवसम्बन्धो भवेद्रचनाविशेषो वा? प्रमेयरत्नमाला, पृ० ११४
४६. प्र० र० मा० पृ० ११४
४७. तदेव
४८. अथ किमिदं रचनावत्? किं परमाणवः किं वाऽवयवी न तावदणवः तेषां नित्यत्वाभ्युपगात्। यथा हि जैनस्यावयविनमन्तरेणापि परमाणवः परिणमन्तः कार्यरूपतां

भजन्ते न तथा नित्याणुवादिनामिति। नाप्यवयवी, तस्याभावात्। न्यायावतारसूत्र वार्तिकवृत्तिः, पृ० ३८

४९. अथ रचनाविशेषस्तद् परं प्रति भागासिद्धत्वम् ---। प्र० र० मा०, पृ० ११५

५०. सावयवमिति बुद्धिविषयत्वमपि, आत्माऽऽदिनाऽनैकान्तिकं तस्याकार्यत्वेऽपि तत् प्रसिद्धेः। प्र० क० मा०, पृ० २७१

५१. सावयवार्थसंयोगान्निरवयवत्वेऽप्यस्य तद्बुद्धिविषयत्वमित्यौपचारिकं तदप्सङ्गतम्, तस्य निरवयवत्वे व्यापित्वविरोधात् परमाणुवत्। तदपि ह्यौपचारिकमेव स्यात्। तदेव पृ० २७१

५२. प्रमेयरत्नमाला, पृ० १०६-१०७

५३. ----- स हि समुत्पन्नानां भवेदुत्पद्यमानानां वा? यद्युत्पन्नानाम्, सतामसतां वा? न तावदसताम्, खरविषाणादेरपि तत्प्रसङ्गात्। सतां चेत् सत्तासमवायात्। स्वतो वा? न तावत्सत्तासमवायात्। अनवस्थाप्रसङ्गात्, प्रागुक्तविकल्पद्वयानतिवृत्तेः। स्वतः सतां तु सत्तासमवायानर्थक्यम्। प्र० र० माला, पृ० १०८

किं च सत्ता सती असती वा? यद्यसती, कथं तया वन्ध्यासुतयेव सम्बन्धादन्येषां सत्त्वम्? सती चेत् स्वतः अन्यसत्तातो वा? यद्यन्यसत्तातोऽनवस्था। स्वतश्चेत् पदार्थानामपि स्वत एव सत्त्वं स्यादिति व्यर्थं तत् परिकल्पनम्।। प्र० क० मा०, पृ० २७२

५४. प्रमेयरत्नमाला, पृ० १०९

५५. प्र० क० मा०, पृ० २७१

५६. ------ कृतसमस्य चेद् गगनादेरपि बुद्धिमद्धेतुकत्वं स्यात्, तत्रापि खननोत्सेचनात् कृतमिति गृहीतसंकेतस्य कृतबुद्धिसम्भवात्।। प्र० र० माला, पृ० ११५

५७. क्षित्यादिकं बुद्धिमद्धेतुकं न भवति, अस्मदाद्यनवग्राह्यपरिमाणाधारत्वाद् गगनादिवदिति प्रमाणस्य साधारणत्वात्। पृ० ११६ प्र०र०माला

५८. नाप्यकृतसमयस्य, असिद्धत्वादविप्रतिपत्तिप्रसङ्गाच्च। प्र० र० माला, पृ० ११६

५९. --- तथाप्यत्र यादृग्भूतं बुद्धिमत्कारणत्वेनाभिनवकूपप्रासादादौ व्याप्तं कार्यत्वं प्रमाणतः प्रसिद्धं यदक्रियादर्शिनोऽपि जीर्णकूपप्रासादादौलौकिकेतरयोः कृतबुद्धिजनकं तादृग्भूतस्य क्षित्यादावसिद्धेरसिद्धो हेतुः।। प्र० क० मा०, पृ० २७४

६०. प्र० क० मा०, पृ० २७५

६१. न्या० वा० ता० टी०, पृ० ११५१ तथा प्र० क० मा०, पृ० २७५ उद्धृत नैयायिकैस्त्वस्याः जातेरुत्कर्षापकर्षसमाभ्यां भेदो नाङ्गीक्रियते। कार्यसमायाश्चान्यत् लक्षणम्, न्या० वा० ता० टी०, पृ० ११५१

६२. तदनेन यदीश्वरनिराकरणायोक्तम्-"तनुगिरिसागरादीनामन्यत् कार्यत्वम्, अन्यच्च प्रासादाट्टालगोपुरादीनामिति, तदपि जात्युत्तरमेवोक्तं भवति। न्या०वा०ता०टी०, पृ० ११५१

६३. प्र० क० मा०, पृ० २७५

६४. यदि च घटादिलक्षणं विशिष्टं कार्यं तन्मात्रव्याप्तं प्रतिपद्याविशिष्टकार्यस्यापि क्षित्यादेस्तत्पूर्वकत्वं साध्यते, तर्हि पृथिवीलक्षणभूतस्य रूपरसगन्धस्पर्शवत्त्वं प्रतिपद्य भूतत्वादेव वायोरपि तत्साध्यताम्। अथात्र प्रत्यक्षप्रमाणबाधः सोऽन्यत्रापि समानः। प्र० क० मा०, पृ० २७५

६५. अभूत्वा भावित्वं हि भिन्नकालक्रियाधिकरणीभूते कर्तरि सिद्धे सिद्धिमध्यास्ते, क्त्वान्तपदविशेषितवाक्यार्थत्वाद् भुक्त्वा व्रजतीत्यादिवाक्यार्थवत्। प्र० र० मा०, पृ० ११२

६६. अविरोधे च तयोः पर्यायमात्रेणैव भेदो न वास्तव इति। तदेव

६७. न हि महीमहीधरकूपारामादयः प्रागभूत्वा भवन्तोऽभ्युपगम्यन्ते परैः, तेषां तैः सर्वथाऽवस्थानाभ्युपगमात्।। प्र० र० मा०, पृ० ११२-११३

६८. ष०द०स० गुणरत्नटीका, पृ० ११८

६९. कारणव्यापारानुविधायित्वञ्च कारणमात्रापेक्षया यदीष्यते तदा विरुद्धं साधनम्। कारणविशेषापेक्षया चेदितरेतराश्रयत्वात्-सिद्धे हि कारणविशेषे बुद्धिमति तदपेक्षया कारणव्यापारानुविधायित्वं कार्यत्वम्, ततस्तद्विशेषसिद्धिरिति। प्र० र० माला, पृ० ११७

७०. किं च कादाचित्कं वस्तु लोके कार्यत्वेन प्रसिद्धम्। जगतस्तु महेश्वरवत् सदा सत्त्वात् कथं कार्यत्वम्? गुणरत्नटीका ष० द० स०, पृ० ११८

७१. स्वरूपेण विशेषेण न सिद्धं भूधरादिषु।। १७ न्यायावतारसूत्रवार्तिकम्

७२. न खलु हेतुव्यापकं विहायाव्यापकस्यात्यन्तविलक्षणसाध्यधर्मस्य धर्मिणि प्रतिपत्तौ हेतोः सामर्थ्यम्। प्र० क० मा०, पृ० १७६

७३. ----तथा सति सर्वानुमानोच्छेदप्रसङ्गात्। आप्तपरीक्षा, पृ० ३७

७४. नन्वेवं क्षित्यादौ बुद्धिमत्कारणत्वासिद्धिरेव स्यादस्मदादेस्तन्निर्माणासामर्थ्यादन्यस्य च हेतुव्यापकत्वेन कदाचनाप्यप्रतिपत्तेः खरविषाणवत्, निराधारस्य च सामान्यस्यासम्भवात्। न हि गोत्वाधारस्य खण्डादिव्यक्तिविशेषस्यासम्भवे तद्विलक्षणमहिष्याद्याश्रितं गोत्वं कुतश्चित् प्रसिद्ध्यति। प्र० क० मा०, पृ० २७६

७५. तस्य कारणत्वमात्रेणैवाविनाभावनिश्चयात्, धूममात्रस्याग्निमात्रेणाविनाभावनिश्चयवत्।। पृ० २७६ तदेव।

७६. न हि धूमेनाप्यलौकिको वह्निःसाध्यते, तथेहापि दृष्टान्तदृष्टो विशेषः सिद्ध्यतु। न तु नित्यबुद्ध्यादियुक्तः। न्यायावतारसूत्रवार्तिकवृत्तिः, पृ० ४२

७७. घटादिलक्षणकार्यविशेषस्य तु कारणविशेषेणाविनाभावावगमः चान्दनादिधूमविशेष-स्याग्निविशेषेणाविनाभावावगमवत्। प्र० क० मा०, पृ० २७७

७८. द्विविधानि कार्याण्युत्पद्यन्ते कानिचिद् बुद्धिमत्पूर्वकानि यथा घटादीनि, कानिचित्तु तद्विपरीतानि यथाकृष्टप्रभवतृणादीनि। ष० द० स० गुणरत्नटीका, पृ० १२०

७९. ----अकृष्टोत्पत्तयश्च वने वनस्पतयः कर्तारमन्तरेणाप्युत्पद्यमाना दृश्यन्त इति कथं व्याप्तिः? न्यायावतारसूत्रवार्तिकवृत्तिः, पृ० ४२

८०. प्र० क० मा०, पृ० २७७

८१. तत्र शरीरमयोनिजं पिशाचादीनाम्। वायुनिरूपणप्रकरणम् न्या० सि० मु०

८२. प्र० क० मा०, पृ० २७७

८३. ननु किमदृश्यत्वात् किं वाऽभावात्तथेति संदिग्धविपक्षव्यावृत्तिको हेतुः न्यायावतारसूत्रवार्तिकवृत्तिः, पृ० ४२

८४. प्र० क० मा०, पृ० २७७

८५. दिनकरी, पृ० ३६-३७

८६. ननु शरीरत्वाविशेषेऽपि यथास्मदादिशरीरविलक्षणं तच्छरीरमभ्युपगम्यते तथा घटादिकार्यविलक्षणं भूरुहादिकार्यं कार्यत्वाविशेषेप्यभ्युपगम्यताम्। प्र० क० मा०, पृ० २७७

८७. ----तच्छरीरस्य शरीरत्वाविशेषेऽपि नित्यत्वलक्षणः स्वभावातिक्रमो यथाभ्युपगम्यते, तथा भूरुहादेः कार्यत्वे सत्यप्यकर्तृपूर्वकत्वलक्षणोप्यभ्युपगम्यताम्। प्र० क० मा०, पृ० २७८

८८. येन येन व्यभिचारः तस्य तस्य पक्षीकरणे न कश्चिदहेतुः स्यात्। न्यायावतारसूत्र-वार्तिकवृत्तिः, पृ० ४२

८९. प्रमाणाविषयत्वेऽपि स्थावरादौ कर्त्रभावानिश्चये गुणादौ रूपाद्यभावानिश्चयः स्यात्। प्र० क० मा०, पृ० २७८

९१. कुविन्दादेः बुद्धिमत एव दर्शनात् तस्यापि बुद्धिमत्त्वे, सशरीरत्वमपि स्यादविशेषात्। किमर्थं वा बुद्धिमतोऽपि तस्य तन्वादिकरणम्? न्या० वि० नि० वि०, पृ० २३०

९२. विरुद्धं चेष्टघातेन न कार्यं कर्तृसाधनम्।।८।। न्यायावतारसूत्रवार्तिकम्

९३. न्यायावतारसूत्रवार्तिकवृत्तिः, पृ० ४२

९४. प्र० क० मा०, पृ० २७९

९५. आप्तपरीक्षा, पृ० ४०-४१

९६. तदेव, पृ० ४१-४२

९७. ज्ञानमीशस्य नित्यं चेदशरीरस्य न क्रमः।
कार्याणामक्रमाद्धतोः कार्यक्रमविरोधतः।।२७।। आप्तपरीक्षा, पृ० ७१

९८. स्या० वा० मं०, पृ० ३४

९९. ष० द० स० टीका, पृ० १२४

१००. आद्ये पक्षे एकस्यैव भूभूधरादेः विधानेऽक्षोदीयसः कालक्षेपस्य सम्भवाद् बंहीयसाप्यनेहसा न वापरिसमाप्तिः। स्या० वा० मं०, पृ० ३५

१०१. द्वितीयपक्षे तु सङ्कल्पमात्रेणैव कार्यकल्पनायां नियतदेशस्थायित्वेऽपि न किञ्चिद्-दूषणमुत्पश्यामः। तदेव

१०२. ज्ञानशक्त्यैव निःशेषकार्योत्पत्तौ प्रभुः किल।
सदेश्वर इति ख्यानेऽनुमाननिदर्शनम्। १३, आप्तपरीक्षा, पृ० ६२

१०३. न वेच्छाशक्तिरीशस्य कर्माभावेऽपि युज्यते।। १२, तदेव, पृ० ५२

१०४. ज्ञानमीशस्य नित्यं चेदशरीरस्य न क्रमः।
कार्याणामक्रमाद्धेतोः कार्यक्रमविरोधतः।। २७, तदेव, पृ० ७१

१०५. सशरीरस्तु नाकर्मा सम्भवत्यज्ञजन्तुवत्।। ११, तदेव, पृ० ५०

१०६. जगद्वैचित्र्यान्यथानुपपत्त्या तयोस्तत्कारणत्वप्रसिद्धेः। भूम्यादेः खलु सकलकार्यं प्रति साधारणत्वात् अदृष्टाख्यविचित्रकारणमन्तरेण तद्वैचित्र्यानुपपत्तिः सिद्धा। प्र० क० मा०, पृ० २७८

१०७. तत्राद्यपक्षे कुलालादीनामपि जगत्कर्तृत्वमनुषज्यते सत्त्वाविशेषात्। ष० द० स० टीका, पृ० १२१

१०८. द्वितीये तु योगिनामपि कर्तृत्वापत्तिः। तदेव

१०९. तृतीयोऽप्यसाम्प्रतः अशरीरस्य पूर्वमेव ज्ञानाद्याश्रयत्वप्रतिषेधात्। तदेव, पृ० १२२

११०. चतुर्थोप्यसम्भाव्यः अशरीरस्य कायवाक्कृतव्यापारवत्त्वासम्भवात्। तदेव

१११. आद्यपक्षे ज्ञातैवासौ स्यान्नेश्वरः। द्वितीयेऽप्यस्य सर्वज्ञत्वमेव स्यान्नैश्वर्यं सुगतादिवत्।। तदेव।

११२. ष० द० स० गु० र० टी०, पृ० १२२

११३. ष० द० स० गु० र० टी०, पृ० १२२

११४. ---परदुःखप्रहाणेच्छा हि कारुण्यम्। ततः प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यम्? सर्गोत्तरकाले तु दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुद्धरमितरेतराश्रयम्। कारुण्येन सृष्टिः सृष्ट्या च कारुण्यम्। स्या० वा० मं०, पृ० ४१

११५. किं च धर्माधर्मौ निश्पाद्य पुनस्तयोः क्षयकरणे किमुत्पत्तिकरणप्रयासेन? नहि प्रेक्षाकारी खात्वा पुनः समीकरणेनात्मानमायासयति। प्र० क० मा०, पृ० २८१

११६. अपरिपक्वानामेव तर्हि तेषां क्षयः कर्तव्यम्। न्या० वि० वि०, पृ० २३१

११७. ----तयोरीश्वरानायत्तत्वे कार्यत्वे चाभ्यामेव कार्यत्वादेरनैकान्तिकत्वप्रसङ्गात्। तदेव

११८. तदेव, पृ० २८२

११९. तदेव, पृ० २८२-२८३

१२०. राज्ञो हि सेवायत्तफलप्रदस्य यथा रागादियोगो नैर्घृण्यं सेवायत्तता च प्रतीता तथेशस्याप्येतत् सर्वं स्यात्। प्र० क० मा०, पृ० २८२

१२१. तन्वादिकरणात् सत्त्वान् भवक्लेशेन योजयेत्।
बुद्धिमानीश्वरः कस्मात्स्वयं द्रोहमकुर्वतः।। सि० वि० नि० परि० ७

१२२. प्र० क० मा०, पृ० २७९

१२३. अचेतनवच्चेतनस्यापि चेतनान्तराधिष्ठितस्य विष्टिकर्मकरादिवत् प्रवृत्त्युपलम्भात्, महेश्वरेऽप्यधिष्ठातृचेतनान्तरं परिकल्पनीयम्। स्वामिनोऽनधिष्ठितस्यापि प्रवृत्त्युपलम्भोऽकृष्टोत्पन्नाङ्कुराद्युपादाने समानः। तदेव, पृ० २७९

१२४. प्र० क० मा०, पृ० २७९

१२५. कम्मं चिणंति सवसा तस्सुदयम्म उ परवस्सा होंति।
रुक्खं दुरुह इ सवसो विगलइ स परबसो तत्तो।।
कम्मब वा खलु जीवा जीववसाइं कहिंचि कम्माई।
कत्थइ धणिओ बलवं धारणि ओ कत्थई बलवं।।
कर्मसूत्रम् ५/७, समणसुत्तं

१२६. स्या० वा० मं०,पृ० ३८-३९

१२७. प्र० क० मा०, पृ० २८३-२८४

१२८. ---तत्प्रामाण्यप्रसिद्धौ महेश्वरसिद्धिः, तत्सिद्धौ च तत्प्रणीतत्वेनागमप्रामाण्य प्रसिद्धिः। ---प्र० क० मा०, पृ० २८१

१२९. तत्कृत एव चेत् तस्य सर्वज्ञतां साधयति तदा तस्य महत्त्वक्षतिः। स्वयमेव स्व-गुणोत्कीर्तनस्य महतामनधिकृतत्वात्। स्या० वा० म०, पृ० ३७

१३०. शास्त्रं हि वर्णात्मकम्। ते च ताल्वादिव्यापारजन्याः स च शरीरे एव सम्भवी। स्या० वा० म०, पृ० ३७-३८

१३१. स्या० वा० म०, पृ० ३८

# चतुर्थोऽध्यायः (भाग क)

## साङ्ख्यदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनम्

साङ्ख्यदर्शनमास्तिकदर्शनेष्वन्यतमं परन्तु न्यायाभिमतेश्वरस्यालोचनायामिदमपि दर्शनं बौद्धजैनयोर्दर्शनयोः सहैव स्थितमस्ति। यावान् विरोधो न्यायाभिमतेश्वरस्य बौद्धजैनदर्शनाभ्यां क्रियते तावानेवेदमपि दर्शनं करोति प्रथमं तावदेतत्रहस्यावगमाय साङ्ख्यदर्शनीया तत्त्वमीमांसा दृष्टिपथं नेया।

### साङ्ख्यदर्शनीया तत्त्वमीमांसा

साङ्ख्यदर्शनानुसारं पञ्चविंशति तत्त्वानि सन्ति येषां च तत्त्वज्ञानान् मोक्षाधिगमो भवति। एतेषां पञ्चविंशतितत्त्वानां चातुर्विध्यमस्ति-किञ्चित्तत्त्वम् प्रकृतिपदेनोच्यते यच्च कारणं भवति परन्तु कार्यं न भवति। किञ्चित्तत्त्वम् प्रकृतिविकृतिपदेनोच्यते यच्च कारणमपि भवति कार्यमपि भवति। किञ्चित्तत्त्वं विकृतिपदेनोच्यते यच्च कार्यं भवति न तु कारणम्। स्वयं तूत्पद्यते परन्तु नापरमुत्पादयति। किञ्चित्तत्त्वम् नैव कार्यं भवति न वा कारणं भवति न वोत्पद्यते न वापरमुत्पादयति स च पुरुषः पुष्करपलाशवन्निर्लेपः।

**साङ्ख्यतत्त्वानि**



एतेषु तत्त्वेषु मूलप्रकृतिः कारणं भवति परन्तु कार्यं न भवति। महत्तत्त्वमहङ्कारः पञ्चतन्मात्राणि कारणमपि भवन्ति कार्यमपि भवन्ति तथाहि महत्तत्त्वं प्रकृतिमपेक्ष्य कार्यं भवति, अहङ्कारमपेक्ष्य कारणमपि भवति। तथैवाहङ्कारपञ्चतन्मात्राण्यपि। अत एते प्रकृतिविकृतिपदेनोच्यन्ते। ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि, मनः, पृथिव्यादीनि पञ्चभूतानि च न कञ्चिदपेक्ष्य कारणीभूतानि, अहङ्कारमपेक्ष्य, तन्मात्राण्यपेक्ष्य च कार्याणि भवन्ति। अतः विकृतिपदेनोच्यन्ते। पुरुषस्तु न वा कञ्चिदपेक्ष्य कारणं भवति न वा कञ्चिदपेक्ष्य कार्यं भवति, अतो नासौ प्रकृतिर्न वा विकृति एवं साङ्ख्यदर्शने पञ्चविंशतितत्त्वानि भवन्ति।

**प्रकृतिः**

प्रकृतिःसत्त्वरजस्तमसां साम्यावस्था। प्रकृतौ सत्त्वरजस्तमांसि त्रयो गुणाः विद्यमानाः भवन्ति। अत एव त्रिगुणात्मकमिदं जगत् प्रवर्तते सत्त्वगुणः लघुः, प्रकाशः, आनन्दरूपो अत एवेष्टो भवति। रजोगुणः उपष्टम्भकः (प्रेरकः) सक्रियश्च भवति। तमश्च गुरुत्ववत्, आवरकं च भवति।[२] अत्र सत्त्वमानन्ददायकम्, रजः दुःखदायकं, तमश्च मोहजनकमस्ति। एकमेव वस्तु कमपि जनं सुखयति, कमपि वेदयति, कमपि च मोहयति संसारे सर्वेष्वपि पदार्थेषु त्रय एते गुणाः विद्यन्ते। त्रिगुणमिदं जगत् त्रिगुणप्रकृतितः प्रवर्त्तते। सेयं प्रकृतिः स्वतन्त्रा नैव कञ्चिदपरमाश्रयते स्वपरिणामात्मकाय व्यापाराय। स्वपरिणामात्मकेन व्यापारेणेयं प्रकृतिर्महदादिभूतपर्यन्तं संसारं प्रसूते। प्रलये च महदादिभूतपर्यन्तमस्यामेव प्रकृतौ लीयते। इयं प्रकृतिर्जडापि सती न स्वप्रवर्त्तनार्थं चेतनात्मकमधिष्ठातारमपेक्षते।

**प्रकृतिसिद्धौ प्रमाणम्**

प्रकृतिसिद्धावनुमानम् प्रमाणम्, तत्र हेतवः सन्ति (१) भेदानां परिणामात् जागतिकानां समेषां पदार्थानां परिमितत्वात् परतन्त्रत्वाच्चानुमीयते यदेतेषां मूलेन कारणेनावश्यमपरिमितेन स्वतन्त्रेण च भवितव्यम्। (२) त्रैगुण्यात् संसारस्य सर्वेष्वपि वस्तुषु सत्त्वरजस्तमसां सत्त्वं दृष्टगोचरीभवति सर्वमपि पदार्थजातं कमपि सुखयति, कञ्चित् वेदयति, कञ्चिच्च मोहयति। सर्वोपि पदार्थः सुखदुःखमोहजनकः। अत एतेषां कारणेनैतादृशेन भाव्यम् यश्च त्रिगुणो भवेत्। अनेनानुमानेन क्षित्यादिकारणीभूतस्य त्रिगुणस्य वस्तुनः सिद्धिर्जायते सैव च प्रकृतिः (३) तद्विपर्ययाभावादपि प्रकृतिसिद्धिः सञ्जायते। तथा हि यत्र तन्तवो भवन्ति तत्रैव पट उत्पद्यते, अन्ये तन्तवोऽन्यः पटो न भवति। प्रत्येकं कार्ये कारणमव्यक्तेन रूपेण स्थितं भवति। विशालञ्चेदं जगदात्मकं कार्यं कस्मिंश्चित् कारणे अव्यक्तरूपेण विद्यते इति प्रकृतिसिद्धि

र्भवति। (४) कार्यस्य कारणगुणात्मकत्वादपि प्रकृतेः सिद्धिः। लोके कारणं यदात्मकं भवति तदात्मकमेव कार्यमुत्पद्यते यथा कृष्णेभ्यस्तन्तुभ्यः कृष्णः पटो जायते। महदादि कार्यम् त्रिगुणमविवेकि विद्यते तादृशमेवाव्यक्तमपि सिद्धं भवति। तदेव च प्रकृतिपदेनोच्यते।[२]

## प्रकृतिविकृतयः

महत्तत्त्वम् (बुद्धिः) अहङ्कारः, पञ्च तन्मात्राश्च प्रकृतयो विकृतयोपि च सन्ति। महत्तत्त्वं प्रकृतितः प्रसूयतेऽतः विकृतिपदेनोच्यते, अहङ्कारञ्च जनयत्यतः प्रकृतिपदेनोच्यते। अहङ्कारो महत्तत्त्वात् प्रसूयतेऽतः विकृतिपदभाग् भवति, पञ्च तन्मात्राः एकादशेन्द्रियाणि च जनयत्यतः प्रकृतिपदभाग् भवति। पञ्चतन्मात्राः अहङ्कारात् प्रजायन्तेऽतः विकृतिपदभाजो भवन्ति पञ्च महाभूतानि जनयन्त्यतः प्रकृतिपदेनाप्युच्यन्ते। अत्र बुद्धितत्त्वं संसारस्य विकासे महत्त्वपूर्णं कारणमस्ति फलतो महद्विशेषणेन विशिष्यते। प्रत्येकं पुरुषे सैषा बुद्धिः प्रतितिष्ठति। अस्य बुद्धितत्त्वस्य कार्यं निश्चयोऽध्यवसायः। सेयं बुद्धिरात्मानं विषयांश्च प्रकाशयति। प्रकृतेः कार्यतया बुद्धिः स्वयं जडा विद्यते, परन्तु पुरुषचैतन्यमत्र प्रतिबिम्बितं भवति यस्माच्च चेतनैव प्रतीयते सर्वोपि लोकः "ममेदं कर्तव्यम्" इत्यादिरूपेण निश्चयं करोति। सोयं निश्चयः बुद्धिद्वारैव भवति।

"अहम्" "मदीयम्" एवमभिमान एवाहङ्कारः। अस्याहङ्कारस्यैव प्रभावेण पुरुषो भ्रान्तो भवति, आत्मानं कर्तेति भोक्तेति च मनुते। सेयमहङ्कारस्य भावना जगतः समेषां व्यवहाराणां मूलभूता। तन्मात्रपदार्थः सूक्ष्मतत्त्वम्। गन्ध, रस, रूप, स्पर्श, शब्दतन्मात्राणामुदयोऽहङ्काराज्जायते। एते तन्मात्राश्चानुमानगम्याः न तु प्रत्यक्षतोऽवगम्यन्ते सामान्यतः। योगिभिस्त्वेतेषां प्रत्यक्षः सञ्जायते। एते सप्त प्रकृतिविकृतयः सन्ति।

## विकाराः

घ्राण जिह्वा चक्षुस्त्वक्श्रोत्राणि ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि च कर्मेन्द्रियाणि, उभयात्मकं च मनः। एतानि चाहङ्काराज्जायन्ते गन्धरसरूपस्पर्शशब्द-तन्मात्राभिः क्रमशः पृथिवीजलतेजोवाय्वाकाशानां समुत्पत्तिर्भवति। एते च विकारपदेनोच्यन्ते।

## प्रकृतिभिन्नो विकृतिभिन्नश्च पुरुषः

पुरुषोऽयं चिन्मात्रः। अस्य स्वरूपं प्रकृत्यापि भिन्नमस्ति व्यक्तेभ्यश्च पदार्थेभ्यो

भिन्नमस्ति। अयं शरीरेन्द्रियादिभिर्भिन्नः स्वतन्त्रश्च। अयमपरिणामी, नित्यः सर्वव्यापी वास्ति। पुष्करपलाशवन्निर्लेपोऽयं निष्क्रियः। न तु प्रकृतिवत् सक्रियः। नास्य किञ्चित् कारणमस्ति नित्योऽयं प्रकृतिवदनाश्रितः, न हि क्वचिल्लीयते।

## पुरुषास्तित्वे प्रमाणम्

साङ्ख्यदर्शने पुरुषस्यास्तित्वं तर्कत एव साधने प्रयासः क्रियते, पुरुषस्यास्तित्वसाधनाय विभिन्नाः युक्तयः प्रदीयन्ते। प्रथमा युक्तिरस्ति महदादिसङ्घातस्य पदार्थत्वादस्ति पुरुषः। तथाह्यनुमानं महदादिसङ्घातः पुरुषार्थः अचेतनत्वात् पर्यङ्कवत् यो योऽचेतनः सङ्घातो भवति स स परार्थो भवति यथा गात्रोत्पलपादपीठतूली, प्रच्छादनपटादिसङ्घातः पर्यङ्कः परार्थो भवति, न ह्येतेषां किञ्चिदपि परस्परं प्रयोजनमस्ति। यः पर्यङ्कं शेते तदर्थं पर्यङ्को भवति। अतोऽवगम्यते यदस्ति महदादिसङ्घातस्य कश्चिद्भोक्ता पुरुषो यदर्थं महदादिसङ्घातः। एवं सङ्घातस्य परार्थत्वात् पुरुषस्य सिद्धिर्भवति न हि महदादिसङ्घातस्य किञ्चित् परस्परं प्रयोजनं भवति यस्माच्च परार्थत्वमसिद्धं स्यात्। अपरा युक्तिरस्ति त्रिगुणादिविपर्ययादस्ति पुरुषः तथा हि प्रकृतिः त्रिगुणा तस्याः विकाराश्च त्रिगुणाः तद्विपर्ययेणापि भाव्यम् केनचित् अतः त्रैगुण्यरहितस्य पुरुषस्य सिद्धिर्भवति। तृतीया युक्तिरस्ति अधिष्ठानात्। तथा ह्यचेतनं चेतनाधिष्ठितमेव कार्ये प्रवर्तते यथा रथः सारथिना चेतनेनाधिष्ठित एव प्रवर्त्तते तथैव शरीरमिदं पुरुषाधिष्ठितमेव प्रवर्तते। न हि शरीरे चेतनानधिष्ठिते प्रवृत्तिर्सम्भवति। अतोऽधिष्ठिानादपि पुरुषः सिध्यति। तुर्या युक्तिरस्ति भोक्तृभावात्। संसारस्य सर्वेप्यर्थाः भोग्याः सन्ति। अतोऽस्य भोक्ताऽपि कश्चिदवश्यमङ्गीकार्यः यश्चैतेभ्यः नितान्तं भिन्नो विलक्षणश्च भवेत्। मधुराम्ललवणकटुकषायतिक्तषड्रसोपबृंहितस्य भोजनस्य कश्चिद्विलक्षणो भोक्ता भवति न तु भोजनादिसमानधर्मा। एवमेव महदादेः भोक्तृत्वं नैव सम्भाव्यतेऽतः सिद्ध्यति यदस्ति पुरुषः यस्येदं भोग्यम्। पञ्चमा युक्तिरस्ति-कैवल्यार्थं प्रवृत्तेरस्ति पुरुष इति। लोके विदुषां कैवल्यावाप्तये प्रवृत्तिः संदृश्यते सैषा प्रवृत्ति महदादेः कस्यचिदपि नैव घटते तेषां स्वभावतः त्रिगुणमयत्वाद्दुःखसाधनत्वमेवास्ति, दुःखनिवृत्तिसाधनत्वं नैव सम्भवति कैवल्यार्थं प्रवृत्तिर्भवत्यतः प्रतीयते यदस्ति कश्चिदेतादृशः पदार्थो यः कैवल्यमवाप्तुं शक्नोति सोऽयं पदार्थः पुरुषः, एवमेभिः हेतुभिः पुरुषस्यास्तित्वं संसाध्यते।[४] पुरुषबहुत्वञ्च जननमरणादिप्रतिनियमादिभिर्हेतुभिः साध्यते।[५]

## ईश्वरस्य साङ्ख्यदर्शने स्थानम्

यद्यप्यनेकैः विद्वद्भिः साङ्ख्यदर्शनस्य सेश्वरत्वं स्वीक्रियते। साङ्ख्यदर्शने

यच्चेश्वरनिराकरणमुपलभ्यते तस्य चोपादानकारणीभूतेश्वरनिराकरणपरत्वमङ्गीक्रियते। परन्तु वस्तुतः साङ्ख्यदर्शनस्य निरीश्वरत्वमेवाङ्गीकर्तव्यम्, यतो हि साङ्ख्यदर्शने भगवतः स्वीकरणं निमित्तकारणत्वेनैव सम्भवति। उपादानकारणत्वेनेश्वरस्य स्वीकरणं नैव सम्भवति निश्चितमेवैतत् प्रकृतेरेवोपादानकारणत्वस्वीकारात्। उपादानभूतायां प्रकृतौ प्रवृत्त्यर्थमपीश्वरस्य स्वीकारोऽसम्भवः प्रकृतेः स्वत एव प्रवृत्तिशीलत्वात्। अतो निमित्तकारणत्वेनापीश्वरस्य स्वीकारोऽसम्भवः। साङ्ख्यदर्शनस्य साहित्यं स्वल्पमेवोपलभ्यतेऽतः तदाधारीकृत्य साङ्ख्यदर्शनं मूलतः ईश्वरवादि वाऽनीश्वरवादि वेति निश्चेतुमशक्यम्। साङ्ख्यकारिकाऽनुसारतः तस्याः टीकाग्रन्थानामनुरोधेन च साङ्ख्यदर्शनस्यानीश्वरवादित्वमेव स्वीकार्यम्। साङ्ख्यकारिकायाः अज्ञातकर्तृकायां युक्तिदीपिकाव्याख्यायां साङ्ख्यदर्शनस्य सेश्वरत्वमिति प्रतिपाद्यते तथाहि-श्रुतिरीश्वरस्य मूर्तिं "कृत्तिवासाः पिनाकहस्तो विततधन्वा नीलशिखण्डी" इति रीत्याऽऽचष्टे। न ह्यसतो मूर्त्तिमत्त्वमुपपद्यतेऽत ईश्वरस्यास्तित्वं सिद्धं भवति, मूर्तिमानीश्वरः परिगृह्यते श्रुतिवचनात्। एवं सति साङ्ख्यस्य स्वपक्षहानिरिति नैवाशङ्कनीयम् यतो हि साङ्ख्यैर्भगवतः शक्तिविशेषः नैव प्रत्याख्यायते माहात्म्यशरीरादिपरिग्रहात् परन्तु प्रकृतिपुरुषयोः प्रयोक्ता प्रकृतिपुरुषव्यतिरिक्तो नास्तीत्येतावन्मात्रमुच्यते।[६] परन्त्वेव-मीश्वरपरिग्रहे सतीश्वरस्य न वोपादानकारणत्वं न वा कर्तृत्वं न वा निमित्तकारणत्वं साङ्ख्यसिद्धान्तानुरोधेन सिद्धं भवति। अस्येश्वरस्यास्तित्वं केवलं सैद्धान्तिकमेव भवति। अत एतादृशेश्वरस्य स्वीकारेऽस्वीकारे वा नास्ति कश्चिद्विशेषः। अन्येषां दर्शनानामाचार्यैः शङ्कराचार्यैः कपिलप्रणीतस्य साङ्ख्यशास्त्रस्य निरीश्वरत्वं स्फुटं प्रतिपाद्यते।[७] अन्यैरपि पार्थसारथिमिश्रादिभिः विद्वद्भिः साङ्ख्यस्य निरीश्वरत्वमेव स्वीक्रियते।[८]

साङ्ख्यदर्शनस्यापरो महत्त्वपूर्णो ग्रन्थः साङ्ख्यसूत्रषडध्यायी विद्यते। एष ग्रन्थः कपिलप्रणीतः इति श्रुतिः। अतोऽनेन ग्रन्थेनात्यन्तं प्राचीनेन भवितव्यम्। परन्तु विदुषामनेकेषामभिमतमस्ति यदस्य ग्रन्थस्याधिकांशतः सामग्री यद्यपि प्राचीना परन्तु कृतिरेषाऽर्वाचीना विद्यते। यादृश एषो ग्रन्थ उपलभ्यते तादृशस्यास्य ग्रन्थस्य कालश्चतुर्दशशताब्द्या पूर्वं स्वीकर्त्तुं नैव शक्यते अस्मिन् ग्रन्थे भगवतो विषये विवेचनं पर्याप्तं क्रियते। ग्रन्थमिममनुसृत्यैव साङ्ख्यस्य सेश्वरत्ववादिन आचार्या ईश्वरास्तित्वं प्रतिपादयन्ति। अत्र ग्रन्थे प्रथमाध्याये "ईश्वरासिद्धेः"[९] इति सूत्रादारभ्य चतुर्भिः सूत्रैरीश्वरस्यास्तित्वं खण्ड्यते। साङ्ख्यस्य सेश्वरत्ववादिनः खण्डनमिद-मुपादानकारणीभूतेश्वरस्य खण्डनमित्यङ्गीकुर्वन्ति। अग्रे "ईदृशेश्वरसिद्धिः सिद्धा"[१०]

इति सूत्रेण प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः प्रतिपाद्यते। साङ्ख्यस्य सेश्वरत्ववादिनोऽनेन सूत्रेण प्रकृत्यधिष्ठातृतयेश्वरस्य सिद्धिमङ्गीकुर्वन्ति। परन्तु नैतन्मतं युक्तिसङ्गतं प्रतिभाति पुरुषाणामेव प्रकृत्यधिष्ठातृतया निर्वाहसम्भवे भगवत्कल्पनायाः निर्युक्तिकत्वात्। "नेश्वराधिष्ठिते फलसम्पत्तिःकर्मणा तत्सिद्धेः"[११] इत्यारभ्यैकादशभिः सूत्रैरत्रापीश्वरास्तित्वं खण्ड्यते। रीत्याऽनया साङ्ख्यसूत्रानुसारमीश्वरस्यास्तित्वं नैव स्वीकर्तुं शक्यते यथा साङ्ख्यप्रवचनभाष्ये विज्ञानभिक्षुणा प्रतिपाद्यते तथेश्वरास्तित्वाङ्गीकारेऽपि तस्य जन्यस्य प्रकृतिलीनस्यैवास्तित्वं सिद्धं भवति। साङ्ख्यदर्शने प्रकृतिः स्वतन्त्रा सती प्रवर्तते तस्या अधिष्ठातृत्वं यद्यपि पुरुषस्य परन्तु तदधिष्ठातृत्वं केवलं सन्निधिमात्रम्,[१२] भोक्तुः संयोगमात्रमेव। अयं संयोगश्च प्रकृत्यादीनां भोगहेतुभूतेषु परिणामेषु कारणं भवति।[१३] अतः संयोगविशेषेण परिणामकारणत्वमेवाधिष्ठातृत्वमस्ति।[१४] एतादृशञ्चाधिष्ठातृत्वं पुरुषाणामपि सम्भवति न त्वीश्वरस्य पङ्ग्वन्धदृष्टान्तस्यापि सामञ्जस्यमत एव प्रकृतिर्जडा संयोगमात्रादेव पुरुषेणाधिष्ठिता सती जगन्निर्मापयति प्रकृत्यधिष्ठानार्थं न हि किञ्चिदन्यमपेक्षितं भवति, यस्य पुरुषेऽभावादीश्वरस्य प्रकृत्यधिष्ठातृत्वं स्वीकृतं स्यात्। अतः पुरुषाधिष्ठानेनैव प्रकृतिप्रवृत्तिसम्भवे नैवेश्वरास्तित्वमावश्यकम्।

श्रुतिस्मृतिभ्यां य ईश्वरः प्रतिपाद्यते तस्यापि मुक्तात्मनः उपासनासिद्धस्य प्रशंसामात्रमेवाङ्गीक्रियते। न हि नित्यः कश्चिदीश्वरः स्वीक्रियते साङ्ख्यदर्शनानुसारम् यद्यपि साङ्ख्यदर्शने "ईश्वरासिद्धेः" इति सूत्रोपलब्ध्या केषाञ्चिदाचार्याणामाशयो विद्यते यत् साङ्ख्यदर्शने भगवतोऽस्तित्वं स्वीक्रियते। परन्तु नैतत् साधयितुं शक्यते केनचित् प्रमाणेनेत्येव स्थापनार्थमीश्वरसिद्धेरिति सूत्रं निरुच्यते। यदि वस्तुतः ईश्वरस्यास्तित्वमस्वीकृतं स्यात् तर्हि "ईश्वराभावात्" इत्येव सूत्रयितुमुचितम्।[१५] परन्तु नैतन्मतं रोचते। यदीश्वरसिद्धौ प्रमाणमेव नास्ति तर्हि कुत ईश्वरसिद्धिः सम्भवति मानाधीना हि मेयसिद्धिः। सिद्ध्यभावे च कुत ईश्वरस्यास्तित्वमङ्गीकर्तव्यम्। तर्कत ईश्वरस्य सिद्धिर्नैव सम्भवति इति यद्युच्यते तदा श्रुत्यादिना साधयितुं शक्यत ईश्वरः। परन्तु प्रमाणतो नेश्वरसिद्धिरित्युच्यमाने तु नैव कथञ्चिदपीश्वरस्वीकरणं सम्भवति प्रमितस्यैव स्वीक्रियमाणत्वात्। अत आचार्याणामाग्रहविशेष एवास्तीति प्रतीयते।

### न्यायदर्शनाभिमतेश्वरः-साङ्ख्यदृष्टिः

नैयायिका ईश्वरं जगतोऽस्य निमित्तकारणं स्वीकुर्वन्ति। सोऽयमीश्वरः नित्यः नित्यज्ञाननित्येच्छानित्यप्रयत्नविशिष्टः जीवकर्मानुरूपं जगत् करुणया निर्मिमीते।

करुणा चास्यैतादृश्येव यदिमे जीवा प्रलये सुषुप्तवत् स्थिताः अपवर्गपुरद्वार-प्रवेशमलभमानाः स्वस्वकर्मफलोपभोगेन क्षीणक्लेशाः तत्त्वज्ञानावाप्तिद्वारा मोक्षमधिगच्छन्त्विति अयमीश्वरः परमाणून् द्व्यणुकाद्युत्पत्तये संयोजयति साङ्ख्यदर्शने तु प्रकृतिरचेतना सती स्वयमेव जगदिदं धर्माधर्मात्मकादृष्टसहकारेण विरचयति। तत्र नास्ति कस्यचिन्नित्यज्ञानेच्छाकृतिमतो नित्यस्येश्वरस्यापेक्षा। यथा क्षीरमचेतनं वत्सविवृद्ध्यर्थं प्रवर्त्तते तथैवैषा प्रकृतिरपि जीवानामुपभोगार्थं प्रवर्तते।[१६] न्यायदर्शनानुसारमीश्वरः परमाण्वदृष्टादीनामधिष्ठाता परन्तु साङ्ख्यदर्शने पुरुष एव प्रकृतेरधिष्ठाता परन्त्वत्राधिष्ठितृत्वं नैव न्यायदर्शनेन समानम्। अदृष्टन्त्वनधिष्ठितमपि फलं जनयति किं वा जीवाधिष्ठितं फलं जनयति।

न्यायदर्शने कारणस्य त्रैविध्यमस्ति समवायिकारणम्, असमवायिकारणम्, निमित्तकारणञ्चेति। सर्गं प्रति परमाणवः समवायिकारणीभूताः, परमाणुसंयोगोऽसम-वायिकारणम्, ईश्वरश्च निमित्तकारणम्। साङ्ख्यदर्शने उपादानकारणं प्रकृतिरेव सर्गस्य। प्रयोजककारणं पुरुषाय भोगापवर्गप्रदानमेव एतदर्थमेव प्रकृतिः सर्गे प्रवर्त्तते। निमित्तकारणमेतावदेव करोति यद् यस्यां दिशि प्रकृत्या गतिमत्या भाव्यम् तस्याः, बाधायाः दूरीकरणमेव। यथा केदारे पूर्णं जलं कुतः प्रवहति यतः बाधाऽपसारिता भवति तदिदं निमित्तकारणत्वं धर्मादीनाम्। एतेषु प्रयोजककारणस्यैव प्राधान्यमस्ति। अत एव "पुरुषार्थ एव हेतुः"[१७] इत्युच्यते। अत्र नैवेश्वरस्य कारणत्वम् भवति। नैयायिकाः अनुमानेनेश्वरं साधयन्ति तत्र साङ्ख्यैरुच्यते यत् सम्बन्ध आवश्यको-ऽनुमानार्थम्, स एव च नास्ति। अतः कुत अनुमानेनेश्वरः साधयितुं शक्यते।[१८]

**स्रष्टृत्वेन नैवेश्वरसिद्धिः-**

नैयायिकाः जगतोऽस्य स्रष्टृत्वेन भगवन्तं साधयन्ति तथा ह्यनुमानप्रयोगः क्षित्यादिकं बुद्धिमत्कारणपूर्वकम् कार्यत्वात् घटवत् इति। किन्तु साङ्ख्याः नैतस्यानुमानप्रयोगस्य साधुतां स्वीकुर्वन्ति। प्रथमं तावत् साङ्ख्यैरुच्यते यत् कार्यत्वहेतुना सकर्तृकत्वं साधयितुं नैव शक्यते। यतो हि कार्यत्वं सकर्तृकत्वव्याप्यं नास्ति यत्र यत्र कार्यत्वमस्ति नहि तत्र तत्र सर्वत्र सकर्तृकत्वमस्ति। अङ्कुरादीनां कर्तुरदृश्यत्वात् प्रत्यक्षबाधः।[१९] यत्र ह्यदृष्टेऽपि कर्तरि कृतबुद्धिरुपजायते तस्यैव सकर्तृकत्वं स्वीकार्यम्।[२०] यथा च घटादेः कर्तर्यदृष्टेऽपि कृतबुद्धिरुपजायतेऽतोऽस्ति घटादेः सकर्तृकत्वम्, न तु वृक्षादौ कर्तर्यदृष्टेऽपि कृतबुद्धिरुपजायतेऽतः सकर्तृकत्वं नास्ति वृक्षादीनाम्। कार्यमात्रमेव सकर्तृकं न भवति किन्तु कार्यविशेष एव सकर्तृको भवति।[२१] अतः कार्यत्वहेतुना यदि सकर्तृकत्वसाधनाय प्रयासो विधीयते

चेत्तदा स्पष्टमेव हेतुनो व्यभिचारित्वम्। यदि च वृक्षादेरपीश्वरबुद्धिपूर्वकत्वं तदा दृष्टान्ताभाव:।[२२]

अपि चायमीश्वरो यश्च नैयायिकेन क्षित्यादिकर्तृतयाऽभिमत: स: मुक्तो वा भवेद् बद्धो वा? न ह्यनयोरतिरिक्त: कश्चित् कल्प: सम्भवति।[२३] मुक्तश्चेदीश्वर: तर्हि तस्य ज्ञानचिकीर्षाप्रयत्नाभावान्न कर्तृत्वं सम्भवति। बद्धश्चेदीश्वरस्तस्य धर्माधर्मयोगान्न जगत्कर्तृत्वं सम्भाव्यते।[२४] युगपच्चोपादानज्ञानाभावादपि न कर्तृत्वं सम्भवति।

अपि च यदीश्वरस्य जगत्कर्तृत्वं स्वीक्रियते तदा तस्य रागादिमत्त्वम-प्यङ्गीकृतं भवति यतो हि रागस्य निर्माणं प्रति कारणत्वमस्ति निर्माणरागयो: कार्यकारणभाव:।[२५] प्रवृत्तिं प्रति रागस्य कारणत्वमिति जगन्निर्मातृत्वं कथमीश्वरस्य सम्भवति। रागो नामेच्छा नित्यमुक्तस्येश्वरस्येच्छायोगो नैव घटते। यदि च प्रधानशक्तेरिच्छादेर्योगादैश्वर्यमस्य तदा सङ्गापत्ति:।[२६] श्रुत्या च "असङ्गो ह्ययं पुरुष:"[२७] इत्युद्घोष्यते। अत: श्रुतिविरोध:। सत्तामात्राच्चेदस्यैश्वर्यं (कर्तृत्वं) तदा समेषां पुरुषाणामेव सत्तामात्रात् कुतो नैश्वर्यं स्यात्।[२८] अत एक एवेश्वर इति सिद्धान्त: भज्यते। अतो यद्येकस्य भगवत: सिद्धिर्भविष्यति चेत्, तदा रागयुतस्यैव भविष्यति, न तु रागहीनस्य।[२९] एवमेव यदि सर्गस्य कर्ताऽभ्युपेयस्तदा शरीरी एवाभ्युपेय: घटादौ शरीरिण एव कर्तु: दर्शनात्।[३०]

अपि च, जगत: प्रधानकार्यत्वप्रतिपादिका: श्रुतयो विद्यन्ते। श्रुतिप्रमाणतां स्वीकुर्वन्नैयायिक: कुतोऽस्य जगत ईश्वरकार्यत्वमङ्गीकरिष्यति? तथा हि "अजामेकां लोहितशुक्लकृष्णां बह्वी: प्रजा: सृजमानां सरूपा:"[३१] इत्यादय: श्रुतय: जगत: त्रिगुणात्मकप्रकृतिजन्यत्वं प्रतिपादयन्ति।[३२] वेदविरुद्धेन च प्रमाणेन वेदप्रामाण्यवादी नैयायिक: कथं जगत: ईश्वरसत्तां साधयेत्? साङ्ख्यास्तु श्रुत्यनुसारं जगतोऽस्य प्रकृतिजन्यत्वमेव स्वीकुर्वन्ति। साङ्ख्यानाञ्चात्रायं सिद्धान्त:-प्रकृतिश्चेतनाऽपि सती जगदिदं प्रसूते यथा च वत्सविवृद्ध्यर्थं क्षीरं प्रवर्तते तथैव प्रकृतिरपि पुरुषविमोक्षार्थं प्रवर्तते। प्रकृतिर्जडा पुरुषश्चेतनस्तयो: पङ्ग्वन्धवत्संयोग: भवति तस्माच्च संयोगात् सर्ग: भवति। अत्र नैयायिकानां प्रबल आक्षेपो यत् प्रकृतिर्जडा सती कथं प्रवर्तते यथा च लोके जडं वास्यादि न स्वयमेव प्रवर्ततेऽपितु पुरुषेणाधिष्ठितमेव प्रवर्तते तथैवैषा प्रकृतिरपि जडा कुत: स्वयमेव प्रवृत्ता भविष्यति। केनचिच्चेतनेनाधिष्ठात्रा-ऽवश्यमेव भाव्यम् यदधिष्ठिता प्रकृति: प्रवृत्ता भवेत्। पुरुषस्य तु सर्वविषयकं ज्ञानमेव नास्त्यतो न पुरुषस्य प्रकृत्यधिष्ठातृत्वं सम्भाव्यते। अत: प्रकृतेरधिष्ठातेश्वर:

स्वीकार्य:। अत्र च साङ्ख्यैः प्रतिविधीयते यत् यश्चाधिष्ठाता भवति स व्यापारवान् भवति न हि निर्व्यापारस्तक्षा वास्यादीनामधिष्ठाता भवति यश्चेश्वरो भवता प्रकृत्यधिष्ठातृत्वेन स्वीक्रियते स तु निर्व्यापार:, कुतोऽस्य प्रकृत्यधिष्ठातृत्वम्? अतो नेश्वरस्य प्रकृत्यधिष्ठातृत्वम्।[३३] अचेतनमपि प्रयोजनवशाच्चेतनानधिष्ठितमपि प्रवर्त्तते। यथा च गोक्षीरं वत्सविवृद्ध्यर्थं स्वत एव प्रवर्तते।

अपि च, प्रवृत्तिः प्रेक्षावतां स्वार्थवशात् कारुण्यवशाद्वा भवति। नहीश्वरप्रवृत्तौ स्वार्थं वा कारुण्यं वा प्रयोजनं पश्यामः। अवाप्तसकलेप्तिस्येश्वरस्य जगत्सृजतो नहि किञ्चिदभिलषितं प्रतीयते स्वार्थवशान्नातोऽस्य जगतः सर्गः।[३४] यदि कारुण्यमस्य प्रवृत्तौ प्रयोजकमिति पक्षः; नैतदपि युज्यते सर्गात् प्राग् जीवानां शरीरेन्द्रियविषयरूप-दुःखकारणाभावात् कस्य प्रहाणेच्छारूपं कारुण्यमस्य सम्भवति? यदि दुःखं स्यात्तदानीं तदा तत्प्रहाणेच्छारूपं कारुण्यमस्य सम्भाव्यते तस्यैव चाभावात् कारुण्यमपि नास्ति सर्गे प्रयोजकम्। सर्गोत्तरकालं दुःखिनो विलोक्य कारुण्यस्वीकारे स्पष्टमन्यो-न्याश्रयरूपं दूषणम् कारुण्येन सृष्टिः, सृष्ट्या च कारुण्यम्।[३५]

अपि च, करुणया प्रेरितः सर्गं कुर्वन्नीश्वरः सुखिन एव प्राणिनः सृजेन्नतु कांश्चित् सुखिनः, कांश्चिद्दुःखिनः, कांश्चिच्च मोहिनः इति विचित्रान् प्राणिनः सृजेत्।[३६] यदि च कर्मवैचित्र्यात् सृष्टेः वैचित्र्यम् तथा च प्राणिनां धर्माधर्मपरिग्रहात् हीनमध्यमोत्कृष्टगुणवयोजातिस्वभावयोगो युज्यते। नाऽयमपराध ईश्वरस्य इति पक्षस्तर्ह्येतदपि न युक्तम् यतो हीश्वरोऽयं धर्माधर्मोत्पत्तौ कारणीभूतो न वेति? यदि चेश्वरो धर्माधर्मयोरुत्पत्तौ समर्थस्तदा धर्ममेव प्राणिनां सुखहेतुभूतं जनयेत्, अधर्मोत्पत्तौ प्रयोजनाभावान्न तदुत्पादयेत्। यदि स्वाभाविकी धर्माधर्मयोरुत्पत्तिः स्वकारणादेव, तदा सर्वस्येश्वरबुद्धिकत्वमिति नैयायिकोक्तः पक्षः खण्डितो भवति।[३७] अपि च धर्माधर्माधिष्ठानेन स्रष्टृत्वेऽस्य प्रेक्षावत ईश्वरस्य कर्माधिष्ठाने किं प्रयोजनम्? तदाधिष्ठानमात्रादेवाचेतनस्याऽपि कर्मणः प्रवृत्तिरुपपद्यते। प्रकृतेस्त्वचेतनायाः न स्वार्थं, न वा कारुण्यं प्रयोजकमपितु पारार्थ्यमात्रमेव प्रयोजकम्।[३८] तच्चोपपद्यत एव।

अपि च यदीश्वरोऽस्य जगतः सर्जकः स्यात् तदा धर्मार्थकाममोक्षाधिगमोपायाः दुःखमयाः नैव स्युः सुखोपायाः एव स्युः। धर्मार्थकाममोक्षाधिगमोपायाः दुःखमया एव विद्यन्ते न तु सुखमयाः। अतोऽवगम्यते यदबुद्धिपूर्वकेयं सृष्टिः प्रकृतिकृता, केनचिच्चेतनेन नैव कृतेति।[३९]

साङ्ख्यदर्शने प्रकृतिपुरुषसंयोगात् सर्गः भवतीति सिद्धान्तः। अत्रापि नैयायिकः

ईश्वरसाधनायैवमाक्षिप्तुं शक्नोति यत्-प्रकृतिपुरुषसंयोगः चेतनकृतः चेतनाचेतनयोरभिसम्बन्धत्वात्, चेतनाचेतनयोश्च योऽभिसम्बन्धः स चेतनकृतः यथा गोशकटयोरभिसम्बन्धः। प्रकृतिपुरुषयोरभिसम्बन्धोऽपि चेतनाचेतनयोरभिसम्बन्धोऽस्ति तस्मादनेनापि चेतनकृतेन भाव्यम्। यत्कृतश्चायं सम्बन्धः स एवेश्वर इति सम्भवतीश्वरसिद्धिः।[४०]

अत्र च साङ्ख्यैः प्रतिविधीयते यद्भवता नैयायिकेनोच्यते न तत् साधु। यतोहि योऽयं दृष्टान्तो भवता प्रदीयते गोशकटयोरभिसम्बन्धः चेतनकृतः इति। तत्र दृष्टान्तेऽपि चेतनकृतत्वं साधनीयमेव। यतो हि केनायं सम्बन्धः कृतः? यदि चैत्रेण तदा न तस्य चैतन्यम् सिद्धम्भवति, तस्य कार्यकारणसङ्घातरूपत्वादचैतन्यमेव।[४१] यदि भवतोच्यते यच्चैत्रशब्दवाच्यस्य पिण्डस्याधिष्ठाताऽऽत्मा चैत्रपदेनोच्यते तत्कृतोऽयं गोशकटयोरभिसम्बन्धः इति, तदपि साध्यमेव न ह्यस्माकं साङ्ख्यानां मते पुरुषकर्तृत्वं सिद्धमस्ति व्यवहारश्च वादे उभयपक्षप्रसिद्धेनैव भवति।[४२] अतः दृष्टान्तस्यैव साध्यशून्यतया न तेन दृष्टान्ने प्रकृतिपुरुषसंयोगस्य चेतनकृतत्वं साधयितुं कथमपि शक्यते।

अपि चैवमनवस्थाऽप्यापद्यते। नैयायिकः चेतनाचेतनयोरभिसम्बन्धस्य चेतनकृतत्वं वक्ति, ईश्वरकार्यकारणयोरभिसम्बन्धस्याप्येवं चेतनकृतत्वमापद्यते। येन चेतनेन कृतः तस्यापि अभिसम्बन्धस्य चेतनकृतत्वं प्राप्तं भवति सति चैवं स्पष्टमेवानवस्थाऽऽपद्यते।[४३] अनया रीत्या न स्रष्टृत्वेन रूपेणेश्वरः सिद्ध्यति त्रिगुणात्मिका प्रकृतिरेव सुखदुःखमोहान्वितं जगदिदं सृजति।

**अदृष्टाधिष्ठातृतयपि नेश्वरसिद्धिः**

नैयायिकाः अदृष्टानुसारिणमिमं सर्गक्रममङ्गीकुर्वन्ति। अदृष्टं चाचेतनं नह्यचेतनं चेतनानधिष्ठितं कार्यसम्पादने क्षममिति नैयायिकानां राद्धान्तः? अदृष्टं चाचेतनं कुतः चेतनमधिष्ठातारं विना कार्यसम्पादने सक्षमं स्यात्। अतोऽदृष्टाधिष्ठाता परमेश्वर इति स्वीकुर्वन्ति। साङ्ख्याः यद्यपि कर्मणोऽदृष्टस्य जगत्कारणत्व- मङ्गीकुर्वन्ति यतो हि यदि कर्मणो जगत्कारणत्वं न स्यात्तदा प्रकृतेर्नित्यत्वात् प्रकृतेः स्वभावस्य चैकविधत्वात् विचित्राणां कार्याणां समुपपत्तिर्न स्यात्। अतः प्रकृतिकार्यवैचित्र्याददृष्टस्यापलापः कर्तुं नैव शक्यते इति साङ्ख्यानामाशयः।[४४] श्रुत्याऽनुमानेन चादृष्टस्य जगत् प्रति कारणता सिद्धा भवति।[४५] परन्त्वस्यादृष्टस्याधिष्ठाता न हि कश्चिच्चेतन आवश्यकः साङ्ख्यमते। अत्र नास्ति कश्चिदेतादृशो

नियमो चदचेतनं चेतनाधिष्ठितमेव कार्यसम्पादने क्षमं भवति। प्रकृतिरचेतनापि चेतनमधिष्ठातारं विना जगत् सृजति, तथैवादृष्टमपि चेतनमधिष्ठातारं विनैव फलसम्पादने सक्षममस्ति। अतोऽत्र पक्षे नेश्वराधिष्ठिते फलसम्पत्तिः, केवलेन कर्मणैव फलसम्पत्तेः सिद्धत्वादीश्वरोऽन्यथासिद्धः।[४६] यश्चेश्वरमङ्गीकरोति तन्मतेऽपि कर्मण आवश्यकत्वं फलत ईश्वरस्यान्यथासिद्धता स्फुटैव। लोके च यः कश्चिद्यमधि-तिष्ठति स सर्वः स्वोपकारार्थमेवाधितिष्ठति यदि चायमीश्वरोऽदृष्टमधितिष्ठेच्चेत् तदा स्वोपकारार्थमेवाधितिष्ठेत्। न हि नित्यस्यावाप्तसकलेप्सितस्य परमेश्वरस्य स्वोपकारः कश्चित् सम्भवति।[४७] अतो नायमदृष्टमधितिष्ठति पक्षोऽयं सुदृढता-मधिगच्छति। यदि चास्य कश्चित् स्वोपकारो विद्यते, तदा लौकिकेश्वरवत् सोऽपि संसार्यसर्वज्ञोऽपूर्णकाम एव स्यात्।[४८] संसारित्वेऽपि चेदीश्वरत्वं तदा पारिभाषिकं संज्ञामात्रमेवेदम् पुरुषस्य न हि वस्तुतः कश्चिदीश्वरो विद्यते।[४९] इति रीत्याऽदृष्टा-धिष्ठातृतया नैवेश्वरस्य सिद्धिः सम्भवति।

## श्रुतिप्रणेतृत्वमपि नेश्वरस्य

न्यायदर्शनानुसारं वेदानां वाक्यत्वाद् वेदत्वाद्वा पौरुषेयत्वमनुमीयते। मीमांसकैश्च वेदानां नित्यत्वमपौरुषेयत्वं च स्वीक्रियते। साङ्ख्यास्तु वेदानामपौरुषेयत्वमङ्कुर्वन्ति, परन्तु नैव वेदानां नित्यत्वम् न वा पुरुषप्रणीतत्वं वा स्वीकुर्वन्ति। अत्र च साङ्ख्यानामयमभिप्रायः–श्रुतिस्तावदस्ति वेदानां कार्यत्वविषयिणी "स तपोऽतप्यत, तस्मात्तपस्तेमानात् त्रयो वेदा अजायन्त" (श०प० १३/५/८/३)[५०] अतो न सम्भवति नित्यत्वं वेदानाम्।[५१] यदि च नास्ति वेदानां नित्यत्वं तर्हि पौरुषेयत्वं प्राप्तं भवति। अत्रोच्यते वेदकर्तुः पुरुषस्याभावात् वेदानां पुरुषप्रणीतत्वमपि नास्ति।[५२] ईश्वर एव सम्भवति वेदकर्ता स च प्रतिषिद्धः इति वेदानां पौरुषेयत्वमपि न सम्भवति। न हि वेदकर्तृत्वं मुक्तस्य सम्भवति न वाऽमुक्तस्य पुरुषस्य।[५३] मुक्तस्य तावदसङ्गत्वेन न वेदनिर्मातृत्वं, बद्धस्य चासर्वज्ञत्वादेव न वेदप्रणेतृत्वम्। मुक्तामुक्ताति-रिक्ता न हि काचिदन्या कोटिः सम्भाव्यते। सति चैवं पौरुषेयत्वाभावाद्वेदानामपौरुषेयत्वं सिद्ध्यति, अपौरुषेयत्वाच्च नित्यत्वमापद्यते। अत्र समाधीयते साङ्ख्यैः–यथाऽङ्कुरादीनां पौरुषेयत्वाभावेऽपि न नित्यत्वं भवति तथैव वेदानामपि पौरुषेयत्वराहित्येऽपि नैव नित्यत्वम्। अपौरुषेयत्वनित्यत्वयोश्चाङ्कुरादौ व्यभिचारान्नास्ति व्याप्तिः।[५४] यदि चाङ्कुरादीनामपि कार्यत्वात्सकर्तृकत्वं साध्यते तदा दृष्टबाधः न हि अङ्कुरादीनां कश्चित् कर्ता प्रत्यक्षत उपलभ्यते। अपि च सशरीरी कर्तैवाभ्युपेयः यतो हि यत्

पुरुषकृतं तत् शरीरजन्यमेवेति व्याप्तिर्लोके दृश्यते तस्य दृष्टस्य बाधस्तु स्वीकरणीय एव भविष्यति। अतो नाङ्कुरादीनां सकर्तृकत्वसिद्धिः।[५५] यस्मिन् अदृष्टेऽपि कर्तरि कृतबुद्धिरुपजायते तदेव पौरुषेयम्। न हि वेदेऽदृष्टेऽपि कर्तरि कृत बुद्धिरुपजायतेऽतो वेदानां नहि पौरुषेयत्वं सिद्धं भवति वाक्यत्वेन वेदत्वेन वा हेतुना। कल्पादौ सिद्धेनादिविदुषा धर्मज्ञानवैराग्यैश्वर्यसम्पन्नेन कपिलेन कल्पान्तराधीतश्रुतिस्मरणाद् वेदोपदेशः क्रियते। न तु वेदानां प्रणयनमनेन क्रियते यथा च सुप्तबुद्धो जनः पूर्वस्मिन् दिनेऽवगतानर्थानपरस्मिन् दिने स्मरति तथैव कपिलोऽपि पूर्वकल्पेऽधीतान् वेदानपरस्मिन् कल्प उपदिशति।[५६] कल्पान्तरानुभूत-स्यापि प्रकृष्टयोगजधर्मबलेन भवति स्मरणम्। अत्र नास्ति कश्चित् सन्देहलेशः। अतो नास्ति वेदानां कश्चित् प्रणेता पुरुष ईश्वरो वाऽपितु कपिलो वा हिरण्यगर्भो वा कल्पान्तराधीतान् वेदानस्मिन् कल्पे स्मृत्वा पुनरपि तादृशानुपूर्वीविशिष्टानेव वेदानुपदिशति। वेदानां नित्यत्वचर्चाऽपि वेदानुपूर्व्याः प्रवाहाविच्छेदेनैव लाक्षणिकी न तु वास्तविकी।[५७] अनया श्रुतिप्रणेतृतयाऽपि नेश्वरस्य सिद्धिः सम्भवति।

**निष्कर्षः**

एवं साङ्ख्यदर्शने न न्यायदर्शनाभिमतस्य क्षित्यादिकर्तुः वेदप्रणेतुरदृष्टाधिष्ठातुः कस्यचिदीश्वरस्यास्तित्वम् विद्यते। प्रकृतिरेव क्षित्यादेरस्योपादानं कारणं स्वतन्त्रत्वेन वा कर्तृपदेनाप्युपदिश्यते। अदृष्टस्य चाचेतनस्यापि चेतनमधिष्ठातारं विना कार्यसम्पादने सक्षमत्वात् न तदधिष्ठाता कश्चिदीश्वरः स्वीकार्यः। वेदानाञ्च पौरुषेयत्वाभावान्न तत्प्रणेतृताऽपि भगवतः सम्भवति वेदानाञ्च केवलमुपदिष्टत्वमेवास्ति न प्रणीतत्वम्।[५८] एवञ्चेश्वरस्यैव न्यायाभिमतस्यासिद्धतया तस्य विशेषणान्येकत्वसर्वज्ञत्वादीन्यपि कस्मिन्नधिकरणे स्थातुं शक्नुवन्ति? न हि साङ्ख्यदर्शने न्यायाभिमतस्येश्वरस्य किञ्चिदस्तित्वम्। यदि कश्चिदीश्वरोऽत्र विद्यते तर्हि सः पारिभाषिक एव। जन्य एवेश्वरः सम्भवति न तु कश्चिन्नित्य ईश्वरः। अत एव "ईश्वरासिद्धेः" इति साङ्ख्यदर्शन-स्योद्घोषः।

## पादटिप्पणी

१. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः।

२. सत्त्वं लघु प्रकाशकमिष्टं चलञ्च रजः।
   गुरु वरणकमेव तमः:----------॥ १३ ॥ सां०का०

३. सां० का० १४-१५, गौड़पादभाष्यम्

४. सां० का० १७
५. तदेव १८
६. यु० दी०, पृ० ९९
७. साङ्ख्यशास्त्रं द्विधाभूतं सेश्वरं च निरीश्वरम्।
चक्रे निरीश्वरं साङ्ख्यं कपिलोऽन्यत् पतञ्जलः ।। स० सि० सं० (सां० म०)
८. शा० दी०, पृ० ३२०, स० म० सं०, पृ० १९
९. सां० सू० १/९२
१०. तदेव ३/५७
११. तदेव ५/२
१२. तत्सन्निधानादधिष्ठातृत्वं मणिवत्। सां० सू० ३/९६
१३. अधिष्ठानं हि भोक्तुः संयोगः, स च प्रकृत्यादीनां भोगहेतुपरिणामेषु कारणम्।
१/१४२ सां० प्र० भा०
१४. संयोगविशेषेण परिणामहेतुत्वमधिष्ठातृत्वम्। वृ० सा० १/१४२
१५. अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैव। अत एवेश्वरासिद्धेरित्युक्तं न त्वीश्वराभावादिति बोध्यम्। १/९२ वृत्तिसारः।
अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढिवादेनैव प्रागेव प्रतिपादितम्। अन्यथा हीश्वराभावादित्येवोच्येत। १/९२ सां० प्र० भा०
१६. सां० का० ५७
१७. सां० का० ३१
१८. सम्बन्धाभावान्नानुमानम्। सां० सू० ५/११
१९. ५/४९ सां० सू० वृ०
२०. यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम्। सां० सू० ५/५०
२१. न कार्यमात्रं सकर्तृकम् किं तु कार्यविशेषः सां० सू० वृ० ५/५०
२२. सर्वस्येश्वरबुद्धिपूर्वकत्वे दृष्टान्ताभावः। सां० का० यु० दी०, पृ० ९८
२३. सां० सू० १/९३
२४. बद्धस्य धर्माधर्मयोगान्नेश्वरत्वम्। मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावान्न कर्तृत्वमिति नेश्वरसिद्धिः। सां० सू० वृ० १/९३
२५. न रागादेव जगन्निर्मातृत्वसिद्धिः, निर्माणरागयोः कार्यकारणभावात्। वृ०सा० ५/६
२६. सां० सू० ५/८
२७. बृ० उ० ४/३/१६
२८. सां० सू० ५/९
२९. सां० सू० ५/६

३०. यत्कार्यं तत्चेतनकर्तृकमिति व्याप्त्या शरीरी कर्ता स्यात्। सां० सं० (सां० त० प्रदीपिका पृ० ९३)

३१. श्वे० उप० ४/५

३२. श्रुतिरपि प्रधानकार्यत्वस्य सां० सू० ५/१२

३३. नेश्वराधिष्ठितप्रकृतिकृतः, निर्व्यापारस्याधिष्ठातृत्वासम्भवात् न हि निर्व्यापारस्तक्षा वास्याद्यधितिष्ठति। सां० त० कौ०, पृ० ४६०

३४. न ह्यवाप्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति। सां० त० कौ०, पृ० ६४

३५. सां० त० कौ०, पृ० ४६४

३६. तदेव, पृ० ४६४-४६५

३७. ईश्वरश्चेद्धर्माधर्मयोरुत्पत्तावीष्टे धर्ममेव प्राणिनां सुखहेतुत्वादुत्पादयेत्, नाधर्मं प्रयोजनाभावात्। अथ मतं स्वाभाविको धर्माधर्मयोः स्वकारणादुत्पत्तिः यदुक्तं सर्वमीश्वरबुद्धिपूर्वकं व्यक्तमिति तु तस्य व्याघातः तस्मादीश्वरो न कारणम्।। सां० का० यु० दी०, पृ० ९८

३८. प्रकृतेस्त्वचेतनायाः प्रवृत्तिर्न स्वार्थानुग्रहा, न वा कारुण्यं प्रयोजकमिति नोक्त दोषप्रसङ्गः। पारार्थ्यमात्रं तु प्रयोजकमुपपद्यते। सां० त० कौ०, पृ० ४६५-४६६

३९. बुद्धिपूर्वकश्चेदयं कार्यविशेषः स्याद्धर्मार्थकाममोक्षप्राप्तयः सुखोपायाः स्युः, दुःखोपायाश्च तस्मादबुद्धिपूर्वकः। सां० का० यु० दी०, पृ० ९८

४०. किं चान्यत् चेतनाचेतनोरभिसम्बन्धस्य चेतनकृतत्वात् इह चेतनाचेतनयोरभिसम्बन्धश्चेतनकृतो दृष्टः तद्यथा गोशकटयोः। अस्ति चायं चेतनाचेतनयोः शरीर-शरीरिणोरभिसम्बन्धः। तस्मादनेनापि चेतनकृतेन भवितव्यम्। यत् कृतोऽयं स ईश्वरः।। सां० का० यु० दी०, पृ० ९७

४१. यदि चैत्रेण, तस्य कार्यकारणसङ्घातत्वादचैतन्यम्। तदेव पृ० ९८

४२. न हि पुरुषकर्तृत्वमस्मत्पक्षे प्रसिद्धमुभयपक्षप्रसिद्धे न व्यवहारः। तदेव

४३. चेतनाचेतनयोरभिसम्बन्धस्य च चेतनकृतत्वं ब्रुवतः प्राप्तमीश्वरकार्यकारणयोरभि-सम्बन्धस्य चेतनकृतत्वम्। तथाचानवस्थाप्रसङ्गः। तदेव

४४. न धर्मापलापः प्रकृतिकार्यवैचित्र्यात्। सां० सू० ५/२०

४५. सां० सू० ५/२१

४६. नेश्वराधिष्ठिते फलसम्पत्तिः कर्मणा तत्सिद्धेः। सां० सू० ५/२

४७. स्वोपकारादधिष्ठानं लोकवत्।। सां० सू० ५/३

४८. लौकिकेश्वरवदितरथा। सां० सू० ५/४

४९. परिभाषिको वा। सां० सू० ५/५

५०. सां० सू० ५/४५ वृत्तिद्वारा उद्धृत
५१. न नित्यत्वं वेदानां कार्यत्वश्रुतेः।। सां० सू० ५/४५
५२. न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात्। सां० सू० ५/४६
५३. सां० सू० ५/४७
५४. नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत्। सां० सू० ५/४८
५५. सां० सू० ५/४९ एवं वृत्तिः, भाष्यञ्च
५६. आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः। पृ० १७६, सां० त० कौ०
५७. वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि।
-----------वेदस्य नेश्वरो भवेत् कर्ता। सां० प्र० भा० (सां० सू० ५/४५)
५८. उपदेष्टैव स्यात् सर्वज्ञः किं स विस्मरेद् वेदान्।। स०म०सं०, पृ० १९

## चतुर्थोऽध्यायः (भाग ख)

# योगदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनम्

साङ्ख्यदर्शनस्य समानतन्त्रं योगदर्शनम्। साङ्ख्ययोगयोः सिद्धान्तेष्वत्यन्तं साम्यम्। उभयोः दर्शनयोः तत्त्वमीमांसा प्रायशः समानैव। यदि साङ्ख्ययोगयोः तत्त्वमीमांसा भिद्यते चेत्तदा परमेश्वरविषय एव। साङ्ख्ययोगयोरुभयोरपि दर्शनयोः अतः साङ्ख्य-संज्ञा प्रदीयते, साङ्ख्यदर्शनं निरीश्वरसाङ्ख्यपदेनाभिधीयते, योगदर्शनं सेश्वरसाङ्ख्यपदेन। एवं योगदर्शनेऽपि तानि एव तत्त्वानि सन्ति यानि च साङ्ख्यदर्शनेऽङ्गीक्रियन्ते। केवलं चेश्वरनामकं तत्त्वमधिकं भवति। षड्विंशतितत्त्वान्यङगीक्रियन्ते योगदर्शने एवं योगदर्शनीया तत्त्वमीमांसा साङ्ख्यदर्शनीया च न भिद्येते परस्परमाधिक्येन। तत्त्वमीमांसायां यद्यन्यः कश्चिद्भेदोऽस्ति चेत् स एष एव यत् साङ्ख्यदर्शने प्रकृते-र्महत्तत्त्वम्, महतोऽहङ्कारः, अहङ्कारात् पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि उभयात्मकं मनः, पञ्च तन्मात्राणि च जायन्ते। योगदर्शने च प्रकृतेर्महत्तत्त्वम्, महत्तत्त्वाच्च पञ्च तन्मात्रणि अहङ्कारश्च जायते। अन्यश्च सर्गक्रमः समान एव। एवमवगन्तुं शक्यन्ते योगदर्शनस्य तत्त्वानि-




**योगदर्शने परमेश्वरः-**

योगदर्शने परमेश्वरस्य स्थानं महत्त्वपूर्णं विद्यते। न हि केवलमयं परमेश्वरः

मोक्षकारणीभूतस्येश्वरप्रणिधानस्य विषयीभूतोऽपितु सृष्टिप्रक्रियायामपि महत्वपूर्णां भूमिकामङ्गीकरोति। अस्य लक्षणं क्रियते-"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"[१] अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः, धर्माधर्माः कुशलाकुशलानि कर्माणि, तयोः क्लेशकर्मणोः विपाकः फलं जात्यायुर्भोगाः, आशयः तदनुगुणा वासना एतैरपरामृष्टः सदैवाव्यपदिष्टः पुरुषविशेष एवेश्वरः। अविद्या नाम अनित्ये नित्यत्वबुद्धिः अशुचौ शुचित्वबुद्धिः, दुःखे सुखत्वबुद्धिः, अनात्मनि शरीरादौ आत्मत्वबुद्धिः।[२] दृक्शक्ति, दर्शनशक्त्योरेकात्मताऽस्मिता पदेनोच्यते तथाहि "ज्ञाताहं" इत्यत्र प्रत्यये विशुद्धो ज्ञाता दृक्, अस्मिन् प्रत्यये च दृश्याभिमान-रूपेणाहंपदवाच्येन जडेन सह ज्ञातुरेकत्वं प्रतीयते। अयमेकत्वप्रतिभास एवास्मिता पदेनोच्यते।[३] सुखविषयकः यः लोभः सुखसाधनविषयको वा यः लोभः स एव रागपदेनोच्यते।[४] दुःखविषयकः दुःखसाधनविषयकश्च यः क्रोधः जिघांसा स एव द्वेषपदेनोच्यते।[५] सर्वस्यैव प्राणिनो जातमात्रस्य मा न भूवं भूयासमित्येषाऽऽत्माशीर्भवति न चाननुभूतमरणधर्मकस्यैषाऽत्माशीर्भवितुं शक्नोति अनया च पूर्वजन्मः प्रतीयते। अयमेवाभिनिवेशः मूर्खविद्वज्जनसाधारणः सर्वमपि लोकं तापयति।[६] न हि संसारी कश्चिदेतादृशो जीवो विद्यते य एतैः क्लेशैर्विमुक्तः स्यात्। अयं परमेश्वरस्त्वेतैः पञ्चभिः क्लेशैर्हीनो न कदाचिदपि परामृष्टः क्लेशैः। शुभैरशुभैश्च कर्मभिः पुण्यजनकैरपुण्यजनकैश्चापरामृष्टोऽयम्। जाति, आयुः भोगाश्च विपाकपदेनोच्यन्ते। जातिपदेन जन्म, योनिः गृह्यते यथा मनुष्ययोनिः। आयुः शतवर्षादि। भोगश्च सुखदुःखसाक्षात्कारः। विपाकानुगुणाः वासनाः आशयपदेनोच्यन्ते। एतैरव्यपदिष्टः पुरुषविशेष ईश्वरः। ये च मुक्ताः पुरुषाः तेऽपि हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ताः तेषां पूर्वा बन्धकोटिः ज्ञायते, ये च प्रकृतिलीनाः तेषामग्रे बन्धनं भवति, उत्तरा बन्धकोटिः प्रज्ञायते, ये च बद्धाः तेषां वर्त्तमाना बन्धकोटिः परिज्ञायते। परमेश्वरस्य तु न हि पूर्वा बन्धकोटिः विद्यते, न वोत्तरा बन्धकोटिः, न वा वर्तमाना। सोऽयमीश्वरः सदैव मुक्तः। पुरुषाः क्लेशकर्मविपाकाशयैः परितप्यन्ते नैवमीश्वरः क्लेशादिभिः सम्बद्धो भवति। अत्राशङ्केयं जायते यत् पुरुषाणामपि क्लेशकर्मविपाकाशयैरपरामृष्टत्वं विद्यते यतो हीमे क्लेशकर्मविपाकाशयाः बुद्धेः धर्माः न तु पुरुषस्यातो नेमे क्लेशादयः बुद्धिधर्माः कथञ्चिदपि पुरुषं परामृशन्ति। इति पुरुषेष्वीश्वरलक्षणस्यातिव्याप्तिः, पुरुषपदेनैव क्लेशकर्मविपाकाशयापरामृष्टत्व-लाभाद् विशेषणवैयर्थ्यञ्च। अत्र समाधीयत एतत् यदिमे यद्यपि मनस्येव विद्यन्ते परन्तु पुरुषेऽपि व्यपदेशो भवत्येतेषाम्, कस्मात्? पुरुषो हि तेषां फलानां स्वस्मिन् प्रतिबिम्बितानां भोक्तेति पुरुषेऽपि व्यपदिश्यन्ते क्लेशादयः। यथा योद्धषु विद्यमानो

जयः पराजयो वा स्वामिनि व्यपदिश्यते तथैव पुरुषेऽवर्त्तमानो मनसि वर्तमानो क्लेशादिः पुरुषेऽपि व्यपदिश्यते।[७] यश्च क्लेशकर्मफलस्य भोक्तृभावेनापरामृष्टोऽव्यपदिष्टः स एव पुरुषविशेष ईश्वरः। सोऽयमीश्वरः सर्वज्ञः, सर्वेषामपि गुरुः, एकः, ऐश्वर्यस्य काष्ठाप्राप्तिर्विद्यते। अस्य च शाश्वतिक उत्कर्षः प्रकृष्टसत्त्वोपादानादस्ति प्रकर्षश्च सार्वज्ञ्यम् सत्त्वं नाम बुद्धिः। तथा चास्येश्वरस्य सार्वज्ञ्ययुतबुद्धेर्योगात् शाश्वतिकः उत्कर्षः।[८] अयमीश्वरः प्रकृष्टं चित्तसत्त्वमुपादत्ते परन्तु न हि पृथग् जनस्येव चित्तसत्त्वेनाऽविद्यानिबन्धनः स्वस्वामिभावः, अपितु तापत्रयपरीतान् प्रेत्यभावसंसारसागराज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन, ज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेण च न ज्ञानधर्मोपदेशः सम्भवति, ज्ञानक्रियाशक्तिसम्पत्तिश्च न हि विशुद्धसत्त्वोपादानं विना सम्भवति, इत्यालोच्य अविद्ययाऽपरामृष्टोऽपि अवद्याऽभिमानीव स्वयमेव सत्त्वमयं प्रधानमुपादत्ते। यथा च नटो रामत्वमारोप्य तास्ताश्चेष्टाः प्रदर्शयन् न भ्रान्तो भवति तथैवायमपि सत्त्वमयं प्रधानमुपाददानोऽविद्वान् न भवति। अत्र चाशङ्का भवति यज्जगदुद्दिधीर्षयाऽयं भगवान् सत्त्वमुपादत्ते, सत्त्वोपादानाच्चोद्दिधीर्षा सम्भवति, उद्दिधीर्षाया इच्छात्मकत्वेनेच्छायाश्च प्रकृतेः चित्तसत्त्वस्य गुणत्वात्। तथा च स्पष्टमेवान्योन्याश्रयो भविष्यति। अत एव शाश्वतिक उत्कर्ष इत्युच्यते। अस्य चायमाशयो यदनादिरयं संसारस्य सर्गसंहारप्रबन्धः सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधाय भगवान् जगत् संहरति। एवं चेश्वरचित्तसत्त्वं प्रणिधानेन वासितं सत् प्रधाने लीनमपि प्रलयावधौ परिपूर्णे सति प्रणिधानवासनावशात् तथैवेश्वरचित्तसत्त्वभावेन परिणमते। एवमेवेश्वरः प्रलयकाले तम उपादत्ते। अत्र चोदाह्रियते यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति प्रणिधानसंस्कारात्। एवमीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्याश्रयः।[९]

## ईश्वरः सर्गे निमित्तकारणम्

ईश्वरोऽयं सर्गं प्रति निमित्तकारणं भवति। योगदर्शने प्रकृतिः सृजतीश्वरेक्षणक्षुभिता। ईश्वरेच्छावशादस्यां क्षोभः सञ्जायते तस्माच्च सर्गः।[१०] प्रकृतेर्द्वे शक्ती विद्येते साहजिके सृष्टिशक्तिर्लीलाशक्तिश्च। यदा चेश्वरः सत्त्वं परिगृह्णाति तदा सृष्टिशक्तिरुद्‌बुद्धा भवति यदा च तम उपादत्ते तदा लयशक्तिरुद्‌बुद्धा भवति।[११] तत्तच्छक्त्युद्‌बोधे त्वनादिवासनासहकारेण प्रकृतिस्तत्तत् कर्मानुरूपं परिणमते। अस्माद्धेतोर्न वैषम्यनैघृण्ये परमेश्वरस्य प्रसज्येते। ईश्वरस्य च प्रकृतेः प्रेरकतया सर्गं प्रति निमित्तकारणत्वम्। प्रधानप्रेरकता च परमेश्वरस्य लोकानामुद्दिधीर्षया चित्तसत्त्वात्मिकायाः प्रकृतेरङ्गीकारादेव।[१२] प्रकृतिश्चेयं न हि परमेश्वराधिष्ठिता

प्रवर्ततेऽपितु स्वातन्त्र्येणैवोपादानकारणीभवति परमेश्वरस्तु निमित्तकारणमेव केवलम्।[१३] परमेश्वरस्य च केवलं निमित्तकारणत्वान्न प्रकृतेः स्वातन्त्र्यमत्र दर्शने हीयते। यथा घटं प्रति कुलालस्य कारणत्वेऽपि न हि दण्डादेः स्वातन्त्र्यं हीयते तथैव परमेश्वरस्य कारणत्वेऽपि न हि प्रकृतेः स्वातन्त्र्यं हीयते।[१४] यतो हि न निमित्तकारणं प्रकृतीनां प्रयोजकं भवति यथा च क्षेत्रिकः, केदारादपाम्पूरणात् केदारान्तरं पिप्लावयिषुः नापः पाणिनाऽपकर्षति केवलमवरोधकमेव जलस्य दूरीकरोति।[१५] अवरोधके च दूरीकृते स्वयमेव जलं क्षेत्रान्तरमाप्लावयति। तथैव निमित्तकारणीभूतः परमेश्वरोऽपि न हि प्रकृतिं प्रेरयति सर्गं प्रति, केवलं गुणक्षोभमेव विदधाति तस्माच्च प्रकृतिः स्वयमेव सर्गं विदधाति। अतः न प्रकृतिस्वातन्त्र्यहानिः।

## ईश्वरः पूर्वेषामपि गुरुः

सोऽयमीश्वरः पूर्वेषामपि हिरण्यगर्भादीनामपि गुरुः। पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्माविष्णुमहेश्वरादीनामपि गुरुः विद्यया ज्ञानचक्षुप्रदश्च कालेनानवच्छेदात्। यथाऽस्मिन् सर्गेऽस्य सिद्धिर्भवति तथैवापरस्मिन्नपि सर्गेऽतिक्रान्तसर्गेप्यस्य सिद्धिर्भवति। अतो नित्यमुक्तोऽयं परमेश्वरः।

## वेदानाम् प्रणेता

अयमीश्वरः लोकानामुद्दिधीर्षया चित्तसत्त्वमुपादत्ते तस्माच्च प्रकृतिरियम-चेतनाऽपि सर्गे प्रवर्तते। तस्येश्वरस्य किं प्रयोजनम्, चित्तसत्त्वोपादाने न हि किञ्चित् प्रयोजनं स्वोपकारात्मकमस्य सम्भवति। भूतानुग्रह एवास्य प्रवृत्तौ प्रयोजनम्, शब्दाद्युपभोगविवेकख्यातिरूपं कार्यं कृत्वा चित्तं निवर्तते तस्माच्च पुरुषो मुक्तो भवति। अस्मै प्रयोजनायैवायं प्रवर्तते। अतस्तस्मै प्रयोजनाय कारुणिकोऽयं परमेश्वरः विवेकख्यात्युपायं कथयति ज्ञानधर्मोपदेशेन संसारिणो पुरुषानुद्धरिष्यामीति परमेश्वरस्य विचारः। एतदर्थमेवास्य प्रवृत्तिः।[१६] वेदादिशास्त्राणि प्रकृष्टसत्त्वनिमित्तानि। औषधिभेदानां मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैः लौकिकप्रमाणद्वाराऽन्वयव्यतिरेकौ ग्रहीतुं नैव शक्यतेऽतः परमेश्वरः कारुण्येन वेदान् करोति ज्ञानधर्मोपदेशार्थम्।[१७]

## योगिनामनुग्राहकः

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वकोऽसम्प्रज्ञातः समाधिर्भवति श्रद्धा नाम चेतसः सम्प्रसादः, तेन च वीर्यमुपजायते, वीर्ये च समुपजाते स्मृतिरुपतिष्ठते, स्मृत्युपस्थाने

च चित्तमनाकुलं समाहितं भवति, समाहितचित्तस्य प्रज्ञाविवेकस्य चाभ्यासाद् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति।[१८] अस्य असम्प्रज्ञातसमाधेरन्यदपि साधनं विद्यते परमेश्वरप्रणिधानम्। परमेश्वरप्रणिधानेनाऽपि आसन्नतमः समाधिर्भवति। चन्द्रिकाकारास्त्वस्य सुगमोपायत्वमङ्गीकुर्वन्ति।[१९] ईश्वरो हि प्रणिधानेनाराधितः "मां जानातु" इति संसाराङ्गारे तप्यमानं पुरुषमिच्छामात्रेणानुगृह्णाति। तया चासन्नतमः समाधिर्भवति समाराधकस्य न ह्यन्यो व्यापारोऽपेक्षितो भवति योगिनोऽनुग्रहणार्थम्। पुष्करपलाशवन्निर्लेपस्यापि पुरुषस्य तापकस्य रजसः सत्त्वेनोपपद्यते। बुद्ध्यात्मना परिणते सत्त्वे तप्यमाने तदभेदावगाहनतत्परः पुरुषोऽपि तप्यत इति लक्षणया व्यवह्रियते।[२०]

## ईश्वरसत्त्वे प्रमाणम्

योगदर्शने परमेश्वरास्तित्वसाधनायामनुमानं प्रमाणं शब्दप्रमाणं च विद्येते। अनुमानन्तावदिमं सिद्धान्तमाधारीकृत्य प्रयुज्यते यत् परिमितस्य विद्यमानतयाऽपरिमितस्य कस्यचिदस्तित्वं द्योत्यते। यदिदमतीतानागतवस्तुविषयकमतीन्द्रियाणां विषयाणां ग्रहणं दृश्यते तदेव सर्वज्ञस्यानुमापकम्। एतद्धि वर्द्धमानं यत्र काष्ठां प्राप्नोति स सर्वज्ञः, तथाहि ज्ञानतारतम्यं क्वचिद्विश्रान्तं सातिशयत्वात् परिमाणतारतम्यवत्। यथा परिमाणतारतम्यं गगने विश्रान्तं भवति तथैव ज्ञानतारतम्यमपि वर्द्धमानं क्वचिद्विश्रान्तमिति सिद्धं भवति। एषा च विश्रान्तिर्नास्मदादीनां पुरुषाणां चित्तस्य सम्भवति यत्र च चित्ते एतत्तारतम्यविश्रान्तिर्भवति तच्चित्तवान् पुरुषः सर्वज्ञः इति सिद्धं भवति। यत्र चेतसि ज्ञानशक्तेर्निरतिशयत्वं तच्चित्तवान् सर्वज्ञः पुरुष ईश्वर इत्यनुमानेन सामान्यत ईदृशः परमेश्वरोऽस्तीति निश्चयो भवति। सामान्यमात्रनिश्चयं जनयित्वाऽनुमानं निवृत्तं भवति। तस्य परमेश्वरस्य संज्ञादिविशेषप्रतिपत्तिः शास्त्रतोऽवगन्तव्या।[२१] अनेन चैतत् प्रतीयते यत् यादृश ईश्वरो योगदर्शनेऽङ्गीक्रियते। तादृश ईश्वरो नह्यनुमानेन प्रमाणेन साधयितुं शक्यते। केवलं सर्वज्ञस्य कस्यचित् पुरुषस्यैव सिद्धिर्भवत्यनुमानेन, अपराणि च यानि विशेषणानि परमेश्वरस्य तानि सर्वाण्यागमतोऽवगन्तव्यानि। अनेनेश्वरे शास्त्रमेव प्रामुख्येन प्रमाणमिति सिद्ध्यति। श्रुत्या परमेश्वरस्य सत्ता सिद्ध्यति। सोऽयं सर्वज्ञः परमेश्वरः पूर्वेषामपि गुरुः[३] अस्य परमेश्वरस्य शाश्वतिक उत्कर्षेऽपि शास्त्रं प्रमाणमस्ति। शास्त्रं हि प्रत्यक्षानुमानपूर्वम् भवति। ईश्वरस्य सत्त्वप्रकर्षे कस्यचिदपि प्रत्यक्षमनुमानं वा नास्ति। शास्त्रमेव विद्यते परमेश्वरस्य सत्त्वप्रकर्षे प्रमाणभूतम्। शास्त्रस्य च प्रामाण्यं सत्त्वप्रकर्षनिमित्तत्वादस्ति। एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे विद्यमानयोरनादिः सम्बन्धः।

ईश्वरबुद्धिसत्त्वं प्रकर्षप्रतिपादकाच्छद्स्त्राज्ञायते यदयमीश्वरः सदैव मुक्तः। तच्च तस्यैश्वर्यं सार्वज्ञ्यं साम्यातिशयविनिर्मुक्तमस्ति न हीश्वरस्यैश्वर्यमैश्वर्यान्तरेणातिशय्यते। यत्रैश्वर्यस्य काष्ठाप्राप्तिः स एवेश्वरः न हि ब्रह्मादीनामैश्वर्यस्य काष्ठाप्राप्तिरस्ति। न हीश्वरस्य समानमैश्वर्यमपि कस्यचिदपि विद्यते। अत्र प्रमाणं नास्ति किञ्चित् कल्पना गौरवं तु विद्यते। यतो द्वयोस्तुल्ययोरेकस्मिन् अर्थे युगपत् कामिते कस्यचिदेकस्य प्रसिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्राप्तं भवति। यदि तयोरविरुद्धेच्छतेति स्वीक्रियते प्रत्येकं चेश्वरत्वं स्वीक्रियते तदैकेनैवेश्वरेण निर्वाहसम्भवेऽन्यैरीश्वरैः किं कृतं भवति? यदि च सम्भूय कारित्वं समेषामीश्वराणां तदा कस्यचिदपि परमेश्वरत्वं न स्यात् परिषदादिवत् यथा परिषदि न हि कश्चिदेकः ईश्वरो भवत्यपितु सम्भूय परिशद ईश्वरत्वम् तथैवात्रापि सिद्धं भवति। अतः परमेश्वरोऽयमेक एवेति स्वीकरणीयं भवति।[२२] परमेश्वरस्वीकारस्य प्रयोजनमस्ति-संसाराङ्गारेषु भृशं तप्यमानानां प्राणभृताम-नुग्रहः। नहि परमेश्वरानुग्रहं विना जीवाः संसारदुःखात्त्रातुं शक्नुवन्त्यात्मानम्, अतः स्वेच्छया निर्माणकायमधिष्ठाय परमेश्वरो लौकिकवैदिकसम्प्रदायान् प्रवर्तयति।[२३]

## न्यायादर्शनीयेश्वरस्यालोचना

यद्यपि योगदर्शनाभिमत ईश्वरो न्यायादर्शनाभिमतेनेश्वरेणात्यन्तं तुल्यतामावहति। प्रशस्तपादभाष्ये श्रीमता श्रीधरेण न्यायकन्दल्यां व्याख्यायां पतञ्जलेः सूत्रम् "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" उद्ध्रियते न्यायवैशेषिकाभि-मतेश्वरस्वरूपस्य नित्यमुक्तत्वस्य पुष्ट्यर्थम्।[२४] न्यायदर्शन ईश्वरो नित्यमुक्तः भोगादिभिश्चापरामृष्टः आत्मसजातीयश्च स्वीक्रियते। पातञ्जलसूत्रे यदुक्तमस्ति परमेश्वरविषये तत्सर्वमपि न्यायाभिमते परमेश्वरे सङ्घटते। अन्यदपि च सर्वज्ञत्वादिकं निमित्तकारणत्वञ्च परमेश्वरे विद्यते न्यायदर्शनाभिमते।

परन्त्वत्र भेदा अपि विद्यन्ते केचन। न्यायदर्शने परमेश्वरः क्षित्यादिकर्ता, परमाणूनां संयोजकः अदृष्टाधिष्ठाता सम्प्रदायप्रवर्तकश्च स्वीक्रियते। परन्त्वत्र दर्शने न हि परमेश्वरः क्षित्यादिकर्ताऽपितु प्रकृतिरेव कर्त्री परमेश्वरस्तु केवलं निमित्तमात्रम्। योगदर्शने परमाणुजसृष्टेरेवास्वीकारान् न परमाणूनां संयोजक ईश्वरो भवितुमर्हति। परमाणुजन्यायाः सृष्टेः श्रुत्या बाधितत्वेन साङ्ख्यवद् योगिनोऽपि प्रकृतिसृष्टिमेवाङ्गी-कुर्वन्ति।[२५] अदृष्टस्याचेतनत्वेऽपि प्रकृतिरिव साङ्ख्यसिद्धान्तानुसारमत्रापि फलसम्पाद-कत्वं चेतनानधिष्ठितस्यैव सम्भवति। न ह्यत्र न्यायदर्शनानुसारमचेतनस्य चेतनान-धिष्ठितस्य प्रवृत्तिर्नभवति। एवमेव प्रकृतिरपि परमेश्वरानधिष्ठितैव प्रवर्तते, परमेश्वरेण

निमित्तकारणीभूतेन प्रकृतेर्गुणक्षोभो विधीयते तस्माच्च प्रकृतिः स्वतन्त्रा सती प्रवर्तते सर्गार्थम्। न्यायदर्शने परमेश्वरः सम्प्रदायप्रवर्तकः, योगदर्शने च सम्प्रदाय-प्रद्योतकः। तथा हि न्यायदर्शनानुसारमीश्वरेच्छात्मिका शक्तिः पदे विद्यमाना पदार्थं बोधयति सेयमीश्वरेच्छात्मिका शक्तिः परमेश्वरात् प्रवर्त्तते। योगदर्शने च नित्यः शब्दार्थसम्बन्धः शक्त्या सह शब्दः प्रलयकाले प्रधानसाम्यमुपगच्छति, पुनराविर्भवंस्तच्छक्तियुक्त एवाविर्भवति भगवता व पूर्वसम्बन्धानुसारेण सङ्केतः क्रियते।[२६]

न्यायदर्शनेऽपि परमेश्वरः आत्मसजातीयः (आत्मविशेषः) एव न हि तस्मादन्यः कल्पः सम्भवति, योगदर्शनेऽपि परमेश्वरः पुरुषविशेष एव। परन्तूभयोः दर्शनयोरात्म-स्वरूपस्य भिन्नत्वेनानयापि रीत्योभयोः स्वरूपेऽन्तरमायाति। न्यायदर्शने आत्मा पञ्चभिः सामान्यगुणैः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराख्यैः नवभिर्विशेषगुणैश्च युक्तः स्वीक्रियते। तत्सजातीयोऽपि परमेश्वरः न ह्येतैः चतुर्दशभिर्गुणैर्युक्तोऽपितु परमेश्वरे पञ्च सामान्यगुणाः नित्यं ज्ञानं, नित्येच्छा, नित्या कृतिश्च स्वीक्रियन्ते। साङ्ख्ये योगे च न हि पुरुषस्य ज्ञानेच्छादयो गुणाः, अपितु बुद्धेरेवैते गुणाः। पुरुषस्तु पुष्करपलाशवन्निर्लेपः चिन्मात्रम् साक्षी, द्रष्टा, आत्यन्तिकदुःखत्रयाभावयुक्तः उपकारापकारशक्तिरहितः अकर्ता च।[२७] ईश्वरस्यापि पुरुषविशेषतया तस्यापि पुष्करपलाशवन्निर्लिप्तत्वादिकं प्राप्तं भवति। अतः सार्वज्ञ्यादिकं न हीश्वरस्य सम्भाव्यते परन्तु सार्वज्ञ्यमीश्वरीयचित्तसत्त्वे विद्यते। तस्य चित्तसत्त्वस्य स्वामितया परमेश्वरस्यपि सार्वज्ञ्यं लाक्षणिकं व्यवह्रियते न तु वास्तविकम् एवमेव कर्तृत्वादिकमपि नैव परमेश्वरे सम्भवति।

**निष्कर्षः**

योगन्यायदर्शनाभिमतेश्वरयोः स्वरूपे नाधिको भेदः। वस्तुतः पातञ्जलदर्शनीयेश्वरः न्यायदर्शनीयैश्वरस्यैकेनैव लक्षणेन लक्षितुं शक्यते तल्लक्षणञ्चेदम्-"क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"। उभयत्रापि भगवतः नैकमात्रा परमसत्ता प्रकृतिपरमाणूनां सत्त्वं विद्यते। अन्यत् यत्सर्वमुभयेऽपि दर्शने परमेश्वरस्वरूपविषये वैमत्यम् तत् सृष्टेः समवायिकारणस्य भिन्नतया सञ्जायते। न्यायदर्शने परमाणूनामुपा-दानकारणत्वम्। परमाणुषु च स्वतः सृष्ट्यनुकूला प्रवृत्तिर्नैव सम्भवति। अतः न्यायदर्शनाभिमत ईश्वरः परमाणूनधिष्ठाय प्रेरयति। योगदर्शने च प्रकृतेरुपादानकारणत्वम् प्रकृतेश्च स्वतः प्रवृत्तिशीलत्वात् केवलमीक्षणेन प्रकृतेः गुणक्षोभमसावीश्वरो विदधाति

तेनैव च सृष्टिर्भवति। एवमीश्वरस्योरुभयत्र निमित्तकारणत्वेऽपि सिद्धान्तभेदवशात् स्वरूपे भेदः। उभयदर्शनयोरीश्वरस्य स्वरूपेऽत्यन्तं सादृश्यम्।

## पादटिप्पणी

१. योगसूत्रम् १/२४
२. योगसूत्रम् २/५
३. योगसूत्रम् २/६
४. योगसूत्रम् २/७
५. योगसूत्रम् २/८
६. योगसूत्रम् २/९
७. ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, सहि तत्फलस्य भोक्तेति, यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते। व्या० भा०, पृ० ६५-६६
८. योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः। व्या० भा०, पृ० ६८-६९
९. तत्त्ववैशारदी, पृ० ६८-६९, यो० सू० १/२४, नागोजीभट्टवृत्तिः, मणिप्रभा
१०. सेश्वरसाङ्ख्ये प्रकृतिः सृजतीश्वरेक्षणक्षुभिता। स० म० सं०, पृ० २०
११. तत्र प्रकृतेर्द्वे शक्ती साहजिके सृष्टिशक्तिर्लयशक्तिश्चेति। तत्रेश्वरेण सत्त्वपरिग्रहे सृष्टिशक्तेरुद्बोधः। तमः परिग्रहे च योगनिद्रेत्युच्यते। यो० सू० १/२४ नागोजीभट्टवृत्तिः
१२. एतावतैव प्रधानप्रेरकतास्य यत् लोकोद्धरणेच्छया तदङ्गीकारः। तदेव
१३. -----समानं साङ्ख्यानामिवात्रापि परमेश्वरानधिष्ठितस्य प्रधानस्य स्वातन्त्र्येणोपादानत्व-प्रतिपादनात्, परमेश्वरस्य निमित्तमात्रत्वाङ्गीकाराच्च। ब्रह्मसूत्रवृत्तिः कौस्तुभप्रभा, पृ० १२२
१४. अस्य निमित्तकारणत्वान्न प्रकृतिस्वातन्त्र्यक्षतिः। घटे कुलालवद् दण्डादीनां कारणत्वेऽपि तद्वदेवास्य स्वतन्त्रत्वमपि। यो० सू० १/२६ नागोजीभट्टवृत्तिः
१५. योगसूत्रम् ४/३
१६. योगसूत्रम् १/२५ व्यासभाष्यम् एवं नागोजीभट्टवृत्तिः
१७. तत्त्ववैशारदी, पृ० ७०-७१
१८. यो० सू० १/२० एवं व्यासभाष्यम्
१९. सुगमोपायोऽयं भक्तिविशेष ईश्वरे सर्वकर्मार्पणम् वा। यो० सू० १/२३ चन्द्रिकावृत्तिः
२०. यो० सू० १/२३, योगसुधाकरवृत्तिः
२१. व्यासभाष्यम्, पृ० ७४-७७
२२. व्यासभाष्यम् तत्त्ववैशारदी, पृ० ७०-७२

२३. संसाराङ्गारेषु तप्यमानानां प्राणभृतामनुग्रहार्थं षड्विंशतत्त्वस्य परमेश्वरस्य स्वीकारात्। योगमञ्जरी, पृ० ३१

२४. प्रशस्तपादभाष्यम् न्यायकन्दली, पृ० १४२

२५. परमाणुजसृष्टेश्च श्रुतिबाधात् प्रकृतिसृष्टिमेवाहु:। स०म०सं० (नारायण), पृ० १९

२६. यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भवंस्तच्छक्तियुक्त एवाविर्भवति ----- तेन पूर्वसम्बन्धानुसारेण सङ्केतः क्रियते भगवतेति। तत्त्ववैशारदी पृ० ८२

२७. सां० का० १९

## चतुर्थोऽध्यायः ( भाग ग )

# मीमांसादर्शनदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

पूजार्थकमानधातुना जिज्ञासायां "मानेर्जिज्ञासायाम्" इति वार्तिकसाहाय्येन अथवा मानार्थकमाङ्धातुना निष्पन्नो भवति मीमांसाशब्दः। तथा च मीमांसापदार्थः भवति कस्यचिदपि वस्तुनो यथार्थस्य स्वरूपस्य निर्णयविषयिणी जिज्ञासा तद्विषयको विचारश्च। वेदस्य भागद्वयं विद्यते कर्मकाण्डः ज्ञानकाण्डश्च। कर्मकाण्डविषयिणीयं मीमांसा वेदस्य पूर्वभागेन सम्बद्धतया कर्ममीमांसा, पूर्वमीमांसापदाभ्यां अभिधीयते। ज्ञानकाण्डविषयिणी मीमांसा ज्ञानमीमांसा या च वेदान्तनाम्नाऽभिधीयते। सेयं पूर्वमीमांसा मुख्यतः कर्मकाण्डस्य विषये विचारं करोति, कर्मकाण्ड एवास्य मुख्यः प्रतिपाद्यः। अत एवानेके विद्वांसोऽस्याः दार्शनिकं पक्षमपेक्षयाऽर्वाचीनं मन्यन्ते।[१] मीमांसायाः दार्शनिकःपक्षः कुमारिलभट्टप्रभाकरादिभिः पोषमधिगम्यास्तिकेषु दर्शनेष्वन्यतमं स्थानं दधाति। दर्शनमिदं वस्तुवादि परमामास्तिकतां धारयन्नपि नहीश्वरमङ्गीकरोति मूलरूपेण। यद्यपीदं हास्यास्पदमेव प्रतिभाति।

### पूर्वमीमांसायास्तत्त्वमीमांसा

दर्शनमिदं प्रपञ्चस्य नित्यतां स्वीकरोति। अस्य दर्शनस्य प्रमुखास्त्रय आचार्याः कुमारिलभट्टः, प्रभाकरः, मुरारिमिश्रश्च। पदार्थकल्पनायामेतेषु त्रिषु मतभेदो दरीदृश्यते। कुमारिलभट्टः पदार्थान् द्विधा विभजते भावात्मकोऽभावात्मकश्च। भावात्मकस्य पदार्थस्य च चतुर्विधत्वं द्रव्यजातिगुणक्रियाभेदेन स्वीकरोति।[२] न्यायवैशेषिकसम्मतेषु नव द्रव्येषु शब्दान्धकारौ योजयित्वा द्रव्याणामेकादशविधत्वम्। न्यायवैशेषिकदर्शने शब्दस्य गुणेष्वन्तर्भावो भवत्यन्धकारस्य च तेजोऽभावरूपत्वम्। पृथिवीजलतेजोवायूनां प्रायशः वैशेषिकदर्शनसम्मतमेव स्वरूपमस्मिन् दर्शने। आकाशकालदिशां नित्यत्वं विभुत्वं निरवयवत्वञ्चास्मिन् दर्शने। इयानत्र विशेषः आकाशकालदिशां प्रत्यक्षसिद्धत्वम्।[३] आत्मा चैतन्याश्रयः प्रायशो वैशेषिकदर्शनाभिमत एव। मनसः सुखादिप्रत्यक्षसाधनेन्द्रियत्वं कल्पयन्ति मीमांसकाः किन्तु क्रियारहितं विभुपरिमाणं च मनः इत्यङ्गीकुर्वन्ति।[४] तमसः स्पर्शराहित्यं नीलरूपवत्त्वं चाङ्गीकुर्वन्ति भट्टपादाः।

शब्दस्तु श्रोत्रेन्द्रियमात्रग्राह्यः शब्दत्वजात्याश्रयः सर्वगतः नित्यश्च।[५] जातिश्च नित्या प्रत्यक्षज्ञानविषया वैशेषिकदर्शनाभिमतजातिस्वरूपा। गुणानां चतुर्विंशतित्वमत्र दर्शने, तत्र वैशेषिकदर्शनाभिमतेषु गुणेषु शब्दधर्माधर्मत्यागेन ध्वनिप्राकट्यशक्तियोगेन च गुणानां चतुर्विंशतित्व्। अत्र गुणानां प्रायशो वैशेषिकदर्शनाभिमतमेव स्वरूपम्। ध्वनिश्च न शब्दात्मिका किन्तु शब्दाभिव्यञ्जको वायुगुणः।[६] प्राकट्यनामा गुणः विषयव्यवस्थापकः सर्वद्रव्यवर्ती सामान्यो गुणः, संयुक्ततादात्म्यसम्बन्धेन च प्रत्यक्षविषयो भवति।[७] शक्तित्वजातिमान् द्रव्यगुणकर्मनिष्ठः शक्तिनामको गुणः[८] सैषा शक्तिः श्रुत्यर्थापत्तिभ्यां गम्यते। द्विविधत्वं चास्याः लौकिकी वैदिकी च। लौकिकी शक्तिरग्न्यादीनां दाहकत्वशक्तिः, वैदिकी पुनः यागादीनां स्वर्गादिसाधकत्व-शक्तिः। कर्मणामत्रापि वैशेषिकदर्शनानुसारं पञ्चविधत्वम्। अभावस्यापि वैशेषिकरीत्या चातुर्विध्यं कुमारिलः स्वीकरोति।

प्रभाकरमते पदार्थाः द्रव्यगुणकर्मसमान्यपरतन्त्रताशक्तिसादृश्यसङ्ख्याभेदेनाष्ट-विधाः।[९] अत्र द्रव्यगुणकर्मणां स्वरूपं वैशेषिकदर्शनानुसार्येव सामान्यस्यास्तित्वं व्यक्तिभ्यः पृथङ्नैवाङ्गीक्रियते। समवायस्थाने प्रभाकरः परतन्त्रतामभिसिञ्चते। अयं जातिव्यक्त्योः सम्बन्धः। किन्तु नायं सम्बन्धः समवायवन्नित्यः किन्तु पदार्थेष्व-नित्येष्वपि विद्यमानत्वादनित्यः। शक्तिसम्पन्नामेव कार्यजनकत्वं द्रव्यगुणकर्मणां पदार्थानां भवति अस्याः शक्तेः कुमारिलवदत्रापि लौकिकवैदिकभेदेन द्वैविध्यमस्ति। सादृश्यमपि पदार्थान्तरम्, संख्या च गुणभिन्नं पदार्थान्तरम्।

मीमांसायास्तृतीयस्य सम्प्रदायस्य प्रवर्तको मुरारमिश्रः। न ह्यस्य विषये किञ्चिदधिकं ज्ञायते अस्य पदार्थकल्पना वेदान्तदर्शनानुसारिणी। ब्रह्मैवैकः पदार्थः परमार्थतः परन्तु लौकिकव्यवहारोपपत्तयेऽन्येऽपि चत्वारः पदार्थाः स्वीक्रियन्ते(१) धर्मिविशेषः यश्चाश्रयो नियतो भवति, नियमतो यस्याश्रयत्वम् यथा घटत्वस्याश्रयो घटः। (२) धर्मविशेषः यश्च नियत आधेयो भवति यथा घटस्य घटत्वम्। (३) आधारविशेषः अनियत आधारः यथा "इदानीं घटः" "तदानीं घटः" इत्यादि-प्रत्यक्षविषयः कालः, इदानीं तदानीं पदौ कालबोधकौ स चानियत आधारः। (४) प्रदेशविशेषः दैशिक आधारः यथा "गृहे घटः" "मठे घटः" इत्यादौ गृहम्, मठश्च घटस्य दैशिकौ अनियतौ आधारौ विद्येते।[१०]

## मीमांसायामीश्वरस्य स्थानं न्यायाभिमतेश्वरे मीमांसादृष्टिश्च

मीमांसादर्शनसूत्रकारो जैमिनिः। द्वादशाध्यायेषु प्रविभक्तानि मीमांसासूत्राण्यस्य

दर्शनस्य मूलभित्तिरूपेण समवस्थितानि। अनन्तरमेतेषु वृत्तिभाष्यवार्तिकानामनेकेषां रचना कृताऽनेकैः विद्वद्भिः। दर्शनस्यास्येश्वरविषयकः कः सिद्धान्तः? विवादास्पदोऽयं प्रश्नः। यादृशी च परम्परा श्रूयते तयाऽस्य दर्शनस्य निरीश्वरवादित्वमेव स्फुटीभवति। यद्यपि केचन विद्वांसो जैमिनेर्निरीश्वरवादित्वं नैव स्वीकुर्वन्ति। "लोके कर्मणि वेदवत्ततोऽधिपुरुषज्ञानम्" "अपराधेऽपि च तैः शास्त्रम्" "आशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यान्नवप्रकल्पकं? तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत्, देवताश्रये च" "सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात्" "तदकर्मणि च दोषस्तस्मात् विशेषः स्यात् प्रधानेनाऽपि सम्बन्धात्" इत्यादीनां सूत्राणामनुरोधेन मीमांसासूत्रकारस्य जैमिनेः सेश्वरत्वं प्रतिपादयन्ति।[११] परन्तु वस्तुतः मीमांसादर्शनस्य सेश्वरत्वं नहि स्वीकार्यम् यतोहि मीमांसादर्शनस्याचार्यैः कुमारिलादिभिः परमेश्वरः तीव्रेण वेगेन निरस्तः। जैमिनिः परमेश्वरं स्वीकरोति न वा स्वीकरोति अत्रास्तु विवादस्यावसरः किन्तु एतन्निर्विवादमेव विद्यते यज्जैमिनिसिद्धान्तेषु कुत्रचिदपि परमेश्वरस्यावश्यकता नैवानुभूयते। यद्यपि नैकानां देवानां यज्ञाहुतीनामर्पणायास्तित्वं स्वीक्रियते तथापि नैतेषां देवानामस्तित्वं वास्तविकं प्रतिभाति। काल्पनिकत्वं देवानां प्रतीयते। अत्र बलं दीयते मीमांसादर्शने यद्देवेभ्यः आहुतिप्रदानेन पुरस्कारस्य प्राप्तिः सुनिश्चिता, मास्तु सत्त्वं तदुद्देशेन मन्त्रेभ्योऽतिरिक्तम्[१२] मूलरूपेण मीमांसादर्शनम् परमेश्वरविषये तादृशमेव ताटस्थ्यं धारयति यादृशं ताटस्थ्यं बौद्धदर्शनं बुद्धकालिकं धारयति। बुद्धोऽपि नहीश्वरविषयिणीं चर्चामपि करोति जैमिनिरपि तथैव नेश्वरविषयिणीं चर्चां करोति। मीमांसाभाष्यकारः शबरस्वामी कुमारिलभट्टः, प्रभाकरादयश्चानेकेऽर्वाचीनाः दार्शनिकाः परमेश्वरविरोधिनीः युक्तीः प्रस्तुन्वन्ति।

मीमांसकमूर्धन्यः कुमारिलभट्टः श्लोकवार्तिकमारभन् आदौ विश्वेश्वरनमस्कारात्मकं मङ्गलमाचरति-

**"विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।**
**श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे।।"** इति।[१२]

यद्यप्यनेन कुमारिलभट्टस्येश्वराङ्गीकर्तृत्वं नैव स्फुटीभवति यतोह्यस्यार्थो यज्ञपक्षेऽपि सङ्गच्छते यथा च न्यायरत्नाकरे पार्थसारथिमिश्रः प्रतिपादयति-"विशुद्धं मीमांसया संशोधितं ज्ञानमेव देहो यस्य। त्रिवेद्येव दिव्यं चक्षुः प्रकाशकं यस्य। सोमस्य अर्धं स्थानं ग्रहचमसादि तद्धारिणे इति यज्ञपक्षेऽपि सङ्गच्छते"। अग्रे च सम्बन्धाक्षेपपरिहारश्लोकवार्तिके न्यायाभिमतेश्वरस्य प्रबलं खण्डनमपि विदधाति। संसारप्रबन्धस्यानादितया न तत्कर्तृत्वमीश्वरस्य। एवमेव वेदकर्तृतापीश्वरस्य नास्तीति

प्रतिपादयति। ईश्वरविरोधविषये मीमांसकशिरोमणिः कुमारिलः बौद्धानां जैनानां च पक्ष एवावस्थितः। तन्त्रवार्तिके भट्टपादः-

**"तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रितः।**
**इज्यते वरिणा नित्यं यः खं ब्रह्मेति चोदितः॥"**[१३]

एवं रूपेण परमेश्वरविषयिणीं चर्चां करोति। अनेके मीमांसकाः ग्रन्थमिमं परमेश्वरसत्ताविषये प्रमाणीभूतमङ्गीकुर्वन्ति। भाट्टार्के श्रीनीलकण्ठभट्टः मीमांसा-दर्शनेऽपि परमेश्वरोऽस्ति इति प्रतिपादयन् प्रमाणतयेमं ग्रन्थं वदति।[१४] मीमांसाशास्त्र-कुतूहलेऽपि अनेन श्लोकेन भट्टः परमेश्वरमङ्गीकरोत्येतत् प्रतिपाद्यते।[१५] तत्रैव तन्त्रवार्तिके-

**शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।**
**तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥"**

इत्यनेनापि परमात्मनोऽस्तितां सूचयति कुमारिलः। पार्थसारथ्यादयोऽन्येऽपि मीमांसकाः प्रायशः ग्रन्थारम्भे परमेश्वरनमस्कारात्मकं मङ्गलाचरणं विदधति। तन्त्रवार्तिकस्य न्यायसुधानाम्न्यां टीकायां सोमेश्वरभट्टो यादृशं विवेचनं करोति तेन कुमारिलभट्टपादानापि सेश्वरत्वमेव सिद्ध्यति। तत्र सोमेश्वरभट्ट एवं वदति-यथा भौतिकेषु पार्थिवाप्यतैजसवायवीयाकाशीयेशु शरीरेषु आत्माधिष्ठानाच्चैतन्याख्यं ज्ञानमस्ति तथैव ऋग्वेदादयोऽपि देहत्वेन श्रुतौ कथिताः देहाश्चात्मयोग्याः भवन्ति, ज्ञानं विना च नहि भोगः सम्भवत्यात्मनोऽतः चैतन्याख्यज्ञानान्विताः वेदा अपि।[१६] परन्तु प्रतीयते यदत्र श्लोकेषु परमात्मपदेन नहि परमेश्वरो विवक्षितः यतो हि तन्त्रवार्तिकस्य तस्य ग्रन्थस्य पूर्वापरग्रन्थविलोकनेन प्रतीयते यत् कुमारिलभट्टः परमात्मपदेन जीवमेव परामृशति। तथाहि तं ग्रन्थं प्रारभन् प्रतिपादयति यद् व्याख्यातृगतमेव विवक्षितत्वमविवक्षितत्वं वा, वेदेऽप्यस्त्येतादृशं विवक्षितत्वम-विवक्षितत्वं च। अथवा ऋग्वेदादिसमूहेषु ये क्षेत्रज्ञाः प्रतिष्ठिताः सन्ति तेषां क्षेत्रज्ञानां विवक्षाविवक्षयोः वाऽयमभिप्रायोऽस्ति।[१७] सामान्यतः क्षेत्रज्ञपदेन जीवात्मन एव परामर्शो भवति अग्रे परमात्मपदेन स्पष्टतः जीवात्मानमभिदधाति। तथाहि-

**"देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः।**
**प्रकृत्यारम्भवैचित्र्याद् दृश्यन्ते परमात्मनाम्॥**[१८]

अत्र न हि परमात्मपदेन परमेश्वरपरामर्शः सम्भवति परमेश्वरस्य बहुत्वायोगेन

बहुवचनासम्भवात्। तथैवात्र-पार्थिवाप्यतैजसवायवीया: देहा: सन्ति। तेषु पार्थिवावयवप्राया: देहा: जरायुजादिभेदेन चतुर्विधा: सन्ति। भूतान्तरानुबद्धेन जलेन निर्मिता: स्वच्छाङ्गलक्षणा: देहा: वारुणे लोके श्रूयन्ते। अन्तरिक्षे च वातनिर्मितै: सूक्ष्मै: देहै: भूम्याद्यनुग्रहाल्लघुभि: भ्रमन्ति बहव: प्राणिन:। स्वलोके भानवीयेन विप्रकीर्णेन तेजसाऽऽप्यायन्ते शुद्धप्रभान्विता: तेजसप्राया: देहा: इति प्रतिपादयति कुमारिल:।[१९] अनन्तरं "तथा व्योमशरीरोऽपि" इत्यादिना व्योमीयशरीरस्य परमात्मनोऽप्यस्तित्वमस्ति इति प्रतिपादयति। अत: प्रसङ्गानुसारं परमात्मपदेन जीवात्मन एव परामर्शो भवति। "अपि" शब्दव्यत्यासेन "तथा व्योमशरीर: परमात्माऽपि" एवं कृतेऽन्वये परमात्मपदेनेश्वरस्य परामर्शोऽपि कर्त्तुं शक्यते। एवं संशयास्पदमेवैतत् यत्कुमारिल ईश्वरमङ्गीकरोति न वा?

प्रभाकरानुयायिनो भवनाथमिश्रा: परमेश्वरस्यानुमानिकत्वं स्पष्टत: खण्डयन्ति। प्रभाकरविजयप्रणेता नन्दीश्वरोऽपि परमेश्वरस्यानुमितिसिद्धत्वं निराकरोति। उभावप्येतौ स्पष्टत एतदप्युद्घोषयन्ति यत्प्रभाकरगुरुभि: परोक्तमनुमानमेव खण्ड्यते न त्वीश्वरोऽपि।[२०] भवनाथमिश्रस्तु-"एकदा कृत्स्नसृष्टिप्रलयौ मानशून्यौ प्रत्युत यथादर्शनं क्रमेण तदनुमा इति जगतीश्वरकर्तृकेऽपि न गुरुनयविरोध इति गुरोरवधीरणम्"[२१] एवं प्रतिपादयन् गुरुमते जगत्कर्तृत्वमपीश्वरस्य स्वीकर्तव्ये नास्ति काचित् सिद्धान्तभङ्गभीतिरिति स्पष्टयति। नारायणप्रणीते सर्वमतसङ्ग्रहे कुमारिलप्रभाकरयो: समानतां प्रदर्शयता ग्रन्थकारेणोच्यते यदनयोरुभयोरपि मतेऽनुमितिसिद्ध ईश्वरो नास्ति नास्ति च सृष्टिप्रलययो: सत्त्वम्, वेदानां च स्वत: प्रामाण्यमस्ति तत्सिद्धस्त्वीश्वरोऽनयोरुभयोरपि स्वीक्रियते।[२२] परन्त्वेवं स्वीक्रियमाणेऽपि परमेश्वरे न हि किञ्चिद्व्यावहारिकं प्रयोजनं सम्भवति भट्टप्रभाकरयो: सिद्धान्तेषु परमश्वेरस्य। वेदानामपौरुषेयत्वात्, अदृष्टस्य च स्वयमेव फलदाने सामर्थ्यात्, सृष्टिप्रलययो: प्रमाणशून्यत्वात् स्रष्टृतयाऽपि नेश्वरस्य किञ्चिद् व्यावहारिकं प्रयोजनम्। केवलं सैद्धान्तिकमेवास्तित्वं सम्भवतीश्वरस्यैवम्।

अत एवार्वाचीनै: मीमांसकैरापदेवादिभि: स्पष्टत: ईश्वरस्य स्वीकार: क्रियते। आपदेव: स्वकीये मीमांसान्यायप्रकाशनामके ग्रन्थे परमेश्वरस्य वेदोपदेशकत्वं स्फुटं प्रत्यपीपदत् वेदानामपौरुषेयत्वेऽपि तदुपदेशकत्वमीश्वरस्य सम्भवति "य: कल्प: स कल्पपूर्व:" इति न्यायेन संसारोऽयमनादि:, परमेश्वरश्च सर्वज्ञ:, अत: गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशत्येतावतैवोपपन्नं भवति सर्वम्। परमेश्वरश्च पूर्वकल्पीयवेदानुसारमेवैतत्कल्पीयं वेदमुपदिशत्यत: पौरुषेयत्वमपि प्रमाणान्तरेणार्थमु-

पलभ्य विरचितत्वरूपं नैवापद्यते वेदानाम्।[२३] श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्य धर्मस्य च निःश्रेयसहेतुत्वमपि प्रतिपादयत्यस्मिन् ग्रन्थे।[२४] अर्थसङ्ग्रहकारो लौगाक्षिभास्करोऽपि परमेश्वरार्पणबुद्ध्या क्रियमाणस्य धर्मस्य निःश्रेयसहेतुत्वं प्रतिपादयति। ईश्वरार्पणबुद्ध्या धर्मानुष्ठाने प्रमाणमपि "यत्करोषि यदश्नासि" इत्यादिगीतावचनमिति च स्फुटीकरोति।[२५] भाट्टार्के श्रीनीलकण्ठभट्टः श्रुत्या निर्गुणस्योपास्यस्य परमेश्वरस्य सिद्धिर्भवतीति प्रतिपादयति।[२६] कुमारिलमार्गानुसारिणि मानमेयोदयनामके ग्रन्थे वैदिकस्य परमकारुणिकस्यास्माकमनुगुणस्येश्वरस्य प्रतिपादनं क्रियते।[२७] परन्तु मीमांसादर्शने परमेश्वरो नहि पुरुषकृतकर्मणां फलान् प्रददाति तर्हि कीदृशी चास्येश्वरस्य करुणा? नैतत् स्पष्टीभवति।

श्रीवेङ्कटनाथवेदान्तदेशिकः सेश्वरमीमांसाग्रन्थं निर्माय मीमांसादर्शनस्य परमेश्वराङ्गीकारित्वं प्रतिपादयति। ग्रन्थेऽस्मिन् मीमांसादर्शनस्य वेदान्तदर्शनेन साकं समन्वयार्थं सुमहान् प्रयासो विहितः। तत्र वेदोपदेशकत्वं परमेश्वरस्य प्रतिपादयत्याचार्यो वेदान्तदेशिकः। तत्र ब्रवीति–यल्लोके कः कर्तेत्युच्यते? ग्रन्थविषये यथा पुरुषान्तरोच्चरितम् अहमपि तथैवोच्चारयामि इत्यभिसन्धिं विना स्वातन्त्र्येण स्वकीयेच्छाविषयीभूतेन क्रमेण पदानि वाक्यतया यो निबध्नाति स एव वाक्येषु कर्ता इत्युच्यते।[२८] परन्तु "यः कल्पः स कल्पपूर्वः" इति न्यायेन सर्वस्यैव कल्पस्य कल्पपूर्वकत्वात् परमेश्वरेणापि पूर्वकल्पस्थितानुपूर्वीस्मरणपूर्वमेवोच्चारणं वेदस्य क्रियतेऽतः वेदानामपौरुषेयत्वं सिद्धं भवति।[२९] "अहमपि तथैवोच्चारयामि" इत्यभिसन्धिनोच्चारणे सति नोच्चारणकर्तुः कर्तृत्वं भवति तथा हि रघुवंशादीनामस्मदाद्युच्चार्यमाणत्वेऽपि नह्यस्मदादिकर्तृकत्वं रघुवंशादेः भवति न वाऽस्मदाद्युच्चरिततया पौरुषेयत्वव्यवहारस्तेषां भवति किन्तु कालिदासादिनोच्चारणविषयतया पौरुषेयत्वं भवति। "धाता यथापूर्वमकल्पयत्" इति श्रुतिबलात् यथा ब्रह्माण्डादीनामेकरूता स्वीक्रियते तथा तद्धेतुवैदिककर्मकलापस्याप्येकरूपता स्वीक्रियते। अतः वेदानामप्येकानुपूर्वीकत्वमेवास्ति। मीमांसापादुकायामीश्वरस्य विश्वकर्तृत्वमपि स्वीक्रियते, उद्घोष्यते च वेदेष्वीश्वरस्याचार्यत्वमितरेषु च कर्तृत्वम्। तन्त्रन्यायाच्च विश्वकर्ताऽपि स्वीक्रियते।[३०]

एवं विधया रीत्या विवेचनेन स्पष्टं भवतीदम् यत् मीमांसादर्शने यदि सर्गप्रलयावभ्युपेयेते तदाऽपि केवलमुपदेशकस्यैवास्ति काचिदावश्यकता वेदानाम् न तु कर्तुः काचिदावश्यकताऽस्ति। एवं यदि सर्गप्रलयौ नाङ्गीक्रियेते यथा च कुमारिलभट्टप्रभाकरादिभिः नाङ्गीक्रियेते तदा वेदाध्ययनस्य परम्पराविच्छेदाभावात्

नहि काचिदुपदेशकस्यावश्यकताऽनुभूयते। सर्गप्रलययोस्तु मानशून्यत्वमस्ति फलतः सर्गप्रलयाभावान्न हि कर्तुरपि कस्यचिदावश्यकताऽनुभूयतेऽस्मिन् मते। अदृष्टस्य तु परमेश्वरानधिष्ठितस्यैव फलप्रदायकत्वमस्ति। एवं मूलतः मीमांसादर्शनैः न्यायाभिमतस्येश्वरस्य सम्पूर्णत एवास्वीकारो विधीयते। यश्च मीमांसादर्शनेऽर्वाचीने आपदेवादिभिः परमेश्वरस्य प्रवेशः क्रियते स सर्वोऽपि मीमांसादर्शनस्य शून्यतामवलोक्यैव वेदान्तादिदर्शनानुसारं कृतः। प्रतीयत एतत् यन्मीमांसायामीश्वरस्य प्रवेशः वेदान्तदर्शनप्रभावेणैव कृतः, मूलतो मीमांसादर्शनं निरीश्वरमेवास्ति। यद्यपि सम्भवत्येतदपि यज्जैमिनिसूत्राणां कर्मकाण्डविचारमूलकतया नास्ति तत्रेश्वरस्य निर्देशः, कर्मकाण्ड ईश्वरोल्लेखस्यानावश्कत्वात्। कर्मकाण्डमीमांसावसरे च नास्ति परमेश्वर-कीर्तनस्यौचित्यम्। एवमेव मोक्षस्यापि मीमांसासूत्रेषु नास्ति समुल्लेखः। अतो जैमिनिना यः मोक्षेश्वरयोः समुल्लेखो न कृतः मीमांसासूत्रेषु तेन तयोः प्रतिषिद्धत्वं नाङ्गीकर्तव्यम्। न हि केवलमनुल्लेखादनङ्गीकारनिश्चयो युक्तिसङ्गतः। न्यायप्रकाश-स्यार्थदर्शन्यां टीकायां "परमतमप्रतिषिद्धमनुमतं भवति" इति तन्त्रयुक्त्या तन्त्रान्तर-सिद्धयोः मोक्षेश्वरयोः जैमिनिना स्वीकरोऽस्ति प्रतिपाद्यते एतत्।[३१] तत्रैव पार्थसारथि-मिश्रविरचितशास्त्रदीपिकाग्रन्थस्य संवादोऽपि प्रदर्श्यते। यत् पार्थसारथिना शास्त्र-दीपिकायां वैशेषिकसम्मतौ मोक्षेश्वरौ मीमांसकसम्मताविति प्रतिपाद्यते।[३२] परन्तु शास्त्रदीपिकायामस्माभिर्नेदृशाभिप्रायकः ग्रन्थ उपलब्धः। मूलकारस्य चाशयः भाष्यवार्तिकाद्यनुसारमेव स्फोरणीयः, श्रीमन्तः कुमारिलभट्टपादाः न्यायाभिमतेश्वरस्य विरोधे यावद् बद्धपरिकरास्तेन तेषामीश्वरानङ्गीकर्तृत्वमेव स्फुटीभवति। परमेश्वरं स्वीकुर्वन्नपि चेदयमीश्वरविषयिकाः युक्तीः खण्डयति चेत् तदा तत्रैवानेन परमेश्वरोऽस्तीत्येवं प्रतिपादनीयम् किन्तु न तस्य सिद्धिः युक्तितः सम्भवति। किन्तु कुमारिलः न हि स्पष्टतः कुत्रचिदपीश्वरमुल्लेखं करोति। अस्तु वा कुमारिलमतेऽपीश्वरः श्रुतिसिद्धः नात्रात्मानं विवादे पातयामः। किन्तु न्यायाभिमतेश्वरविरोधे कुमारिलः प्रभाकरः अन्ये च भवनाथपार्थसारथ्यादयः तदनुयायिनो मीमांसकाश्चैकसिद्धान्ताः यन्नेश्वरस्यानुमानिकत्वम्।

## अनुमानतो न क्षित्यादिकर्तृतयेश्वरसिद्धिः

क्षित्यादीनां सकर्तृकत्वं नानुमातुं शक्यम्, कुत इति प्रश्ने कुमारिलो वदति यत् सर्गादौ क्रिया नास्ति सर्गकालस्याभावात्।[३३] सृष्टिवत्प्रलयस्याप्यप्रामणिक-त्वादभावः।[३४] अतः क्षित्यादीनां सकर्तृकत्वमसम्भाव्यमेव। कुमारिलोऽत्र परमेश्वरस्यास्तित्वं खण्डयन्नाक्षिपति परमश्वेरो जगन्निर्मापयन् कया रीत्या जगन्निर्मिमीते?

कुत आद्या प्रवृत्तिः भगवतः जगन्निर्माणे? यदीच्छामात्रेणैव भगवतो जगदिदं निष्पन्नं भवतीत्युच्यते, तर्हि नैतदपि शक्यम् शरीरादिरहितस्यास्य न हीच्छा सम्भवति।[३५] यदि च शरीरादेरपि स्वीकारोऽस्य क्रियते इच्छासम्पत्तये तदा नैतदपि शक्यम्, यतो ह्येवं स्वीकरणीयं भविष्यति यत् परमेश्वरीयस्य शरीरस्य समुत्पत्तिः परमेश्वरकृता नास्ति। यदि परमेश्वरशरीरमीश्वरकृतं नास्ति तर्हि तथैवाऽन्येषामपीश्वरकृतत्वाभाव आपद्यते। यदि चेश्वरशरीरस्य नित्यत्वमिति पक्षस्तर्हि प्रश्नो भवति यत् पृथिव्यादीनां समुत्पत्तेस्तदानीमभावात् किम्मयमीश्वरस्य शरीरमस्ति?[३६] अपि च "ईश्वरदेह उत्पत्तिमान् देहत्वात् अस्मदादिदेहवत्" अनुमानेन ईश्वरशरीरस्य जन्यत्वमपि सिद्धं भवति।[३७] नैयायिकानां पक्षं समुपस्थापयन्तः कुमारिलभट्टपादाः वदन्ति-यो हि सन्निवेशविशिष्टानां देहादीनां समुत्पत्तिं गृहाद्युत्पत्तिमिव चेतनाधिष्ठितां साधयति तथा ह्यत्र नैयायिकानामयमनुमानप्रयोगः- "तनुतरुमहीधरादयः चेतनाधिष्ठानोत्पत्तयः सन्निवेशविशिष्टत्वात् गृहादिवत्" तस्येदं प्रत्युत्तरं दीयते-भवता नैयायिकेनाधिष्ठातृतया कस्यचिद् हेतुत्वमेव केवलमिष्यते, तदाऽदृष्टद्वारा तादृशं हेतुत्वं जीवानामपि सम्भवति तथाहि सर्वमपि कार्यजातं प्रति अदृष्टस्य कारणता स्वीक्रियतेऽदृष्टं प्रति च जीवानामेव हेतुत्वम्। एवं विधयाऽदृष्टद्वारा जीवानामेवाधिष्ठातृत्वं सम्भवति न पुनरीश्वरस्य सिद्धिरनेनानुमानेन।[३८] यदि च चेतनेच्छापूर्वकत्वमधिष्ठातृत्वमिति पक्षस्तदाऽपि जीवेच्छानां कर्म प्रति कारणत्वेन जीवेच्छापूर्वकत्वमपि सिद्धमेवास्ति। तथा चैवमपि सिद्धसाधनमापतितं भवति। इच्छानन्तरसिद्धिर्यद्यत्रापेक्ष्यते तदा साध्यहीनो दृष्टान्तः, गृहादिष्वपि इच्छानन्तर्यं नास्ति।[३९] अत्रायमपि प्रश्नो भवति यदयमीश्वरः सशरीरो वाऽशरीरो वा? यदि सशरीरस्तदा परमेश्वरीये शरीरे हेतुर्व्यभिचारी भवति,[४०] ईश्वरशरीरस्य चेतनान्तराधिष्ठितत्वाभावात्। तत्र उत्पत्तिमत्त्वे सति सन्निवेशविशिष्टत्वरूपं हेतुरस्ति किन्तु साध्यं चेतनाधिष्ठितत्वं नास्ति। यदि चेश्वरशरीरस्योत्पत्तिमत्त्वं नाङ्गीक्रियते तदा नैतदपि सम्यग् नैयायिकोक्तरीत्यैव सन्निवेशविशिष्टत्वेनैवेश्वरशरीरस्याप्युत्पत्तिमत्त्वं सिद्धं भवति।[४१] यदि चेश्वरस्याशरीरत्वं स्वीक्रियते यथा च नैयायिकानां सिद्धान्तः तदा मुक्तात्मवदस्याप्यधिष्ठातृत्वं न सम्भवति शरीररहितस्य।[४२] दृष्टानुसारी भवति सिद्धान्तः लोके कुलालादेः प्रयत्नवशाद् घटादिनिर्माणेन घटाद्यधिष्ठातृत्वं भवति। शरीरसंयोगापेक्षत्वात् प्रयत्नस्य, नाशरीरस्य प्रयत्नः सम्भवति। सर्वगतानामप्यात्मनां शरीरप्रदेश एव प्रयत्नो दृश्यतेऽतः शरीरसंयोगापेक्षत्वं प्रयत्नस्य सिध्यति। यद्यस्य प्रयत्नो नित्य इति स्वीक्रियते न्यायसिद्धान्तानुसारं तदा नैतदपि शक्यम् ईश्वरप्रयत्नस्याप्यनित्यत्वमस्मदादिप्रयत्नवत् प्रयत्नत्वेनानुमेयम्।[४३] कुमारिलोऽत्र

दृष्टान्तमपि विकल्पयति यत् यद्भवता घटादिदृष्टान्तेन भूधरादीनां चेतनाधिष्ठित्वं साध्यते तदा घटादौ कस्याधिष्ठानमस्ति कुम्भकारो घटमधितिष्ठति परमेश्वरो वा? यदि प्रथमः पक्षस्तदा कुम्भकाराधिष्ठितत्वमेवास्ति घटादौ न त्वीश्वराधिष्ठिततत्वम्, एवं दृष्टान्तेन च पक्षेऽपि नेश्वराधिष्ठितत्वं सिद्धं भविष्यति यदि च घटादावपीश्वराधिष्ठितत्वं विद्यत इति मतं तदा साध्यहीनो दृष्टान्तः न हि घटादीनामीश्वराधिष्ठितत्वमुभयवादिसिद्धम्।[४४] यदि चेश्वरानीश्वरसाधारण्येन चेतनाधिष्ठितत्वमात्रं साध्यते तत्र च घटादेः दृष्टान्तत्वं सम्भवतीति नैयायिकस्याशयः तदा यथासिद्धेन दृष्टान्तेन हेतुः विरुद्धः सन् नहि साध्यं प्रसाधयेत्। घटस्यानीश्वरकुम्भकारकर्तृकत्वमस्ति घटदृष्टान्तेन च देहादीनामप्यनीश्वरकर्तृकत्वं सिद्धं भविष्यति। यथा "देहादयः चेतनकर्तृका सन्निवेशविशिष्टत्वात् घटादिवत्" इति प्रयुज्यते तथैव "देहादयः नेश्वरकर्तृकाः चेतनोपादानत्वात् घटादिवत्" इत्यपि वक्तुं शक्यते। यदि च घटस्याप्यस्तीश्वरकर्तृकत्वं न ह्येकस्यानेककर्तृकत्वे काचित् क्षतिः तदा देहादीनामप्यनेककर्तृकत्वं घटादिदृष्टान्तबलेन शक्यमेव प्रसाधयितुम्। अनेकचेतनाधिष्ठानानुमाने च नेश्वरस्यैक्यं सिद्धं भविष्यति।[४५] अपि च घटादीनां कर्ता कुलालादिः व्यापारवान् भवति व्यापारवता कुलालेन घटाधिष्ठातृत्वं युक्तम्। यदि चेश्वरस्य देहादीनां कर्तृत्वं स्वीकर्तुं भवति यत्नस्तदा परमेश्वरेणापि देहाधिष्ठानार्थं व्यापारवता भाव्यम्। न चेश्वरस्य व्यापारोऽङ्गीकर्तुं शक्यते। व्यापाररहितस्येच्छामात्रेणाधिष्ठातृत्वन्तु न युज्यते। चेतनो भृत्यादिः राजेच्छामात्रेण प्रवर्तते न त्वचेतनः इच्छा- मात्रेण प्रवर्तते तर्हि कथमचेतनाः परमाणवश्चेतनेच्छामात्रेण प्रवर्तेरन्?[४६] अत इच्छामात्रेणाधिष्ठानायोगात् नेश्वराधिष्ठितत्वं सिद्धं भवति।

यद्यपि सर्गसंहारौ निष्प्रमाणकौ किन्तु यदि सर्गसंहारयोः स्वीकारः क्रियतेऽपि तदा केनचित् प्रयोजनेनानेन भवितव्यम्। बुद्धिमतः प्रवृत्तिः प्रयोजनपूर्विकैव भवति। जगदारम्भमाणस्येश्वरस्य किं नामेष्टमस्ति? यदि च क्रीडार्था प्रवृत्तिरिति पक्षस्तदा नराणां क्रीडा विनोदजन्यसुखाय भवति। ईश्वरस्य चावाप्तसुखत्वस्वीकारान्न विनोदजन्यसुखार्थाऽस्य क्रीडा सम्भवति समस्तभूधरादिनिर्माणविषयकेन महाव्यापारेण कीदृश्यस्य क्रीडा सम्भाव्यते? एवं समस्तभूधरादिनिर्माणे च बहुतरो भवेत् क्लेशोऽस्य न तु विनोदजन्यं सुखमस्य सम्भवति।[४७] यदि च करुणया सृजतीश्वरो जगदिदमिति पक्षस्तदाप्युच्यते यत् यद्यनुकम्पाप्रयुक्ता सिसृक्षा तदा संजिहीर्षाऽस्य किं प्रयुक्ता? सापि चेदनुकम्पाप्रयुक्ता तर्हि नैतच्छक्यम् विरुद्धयोः सिसृक्षासंजिहीर्षयोरेकहेतुकत्वापातात्।[४८] किञ्चानुकम्पा दुःखदर्शननिमित्ता भवति, शरीररहितानां जीवात्मनां च मुक्तात्मनामिव नास्ति किञ्चिदपि दुःखम्, दुःखस्य शरीरसत्त्व एव सम्भाव्यत्वात्।

अतोऽनुकम्प्याभावान्नास्यानुकम्पा सम्भाव्यते। अनुकम्पाप्रयुक्तस्येश्वरस्य सर्गप्रवृत्तौ नाशुभास्य सृष्टिरुपपद्यते, अनुकम्पया सृजन् नाशुभं सृजेत् शुभमेव केवलं सृजेदीश्वरः।[४९] यदि च प्रयोजनं विनैवास्य प्रवृत्तिर्भवति तदाऽस्य चैतन्येन को लाभः? अचेतनत्वेऽपीश्वरस्य न हि काचित् क्षतिः।[५०] एवं सर्गप्रलययोः निष्प्रयोजनत्वान्न बुद्धिमत्कारित्वं तयोः सम्भवति। सर्गप्रलययोश्चासत्त्वमपि प्रामणेन सिद्ध्यति। प्रमाणञ्च सर्गप्रलयोरसत्त्व एतदेव यत् प्रलयेऽदृष्टवतां जीवात्मनां तद्भोगरहिता स्थितिः स्वीकरणीया तच्च युक्तिसङ्गतं नास्ति।[५१] कर्मान्तरेण निरुद्धदाद् हि कर्मान्तरात् फलं न स्यात्, प्रवृत्तफलेन कर्मान्तरेणावरुद्धं कर्मान्तरं फलं न प्रददाति परमेश्वरेच्छया तु सर्वेषां कर्मणां फलमददतां स्थानन्तु नास्ति प्रामाणिकम्। सर्वफलानुपभोगस्तु नास्ति कस्यचिदपि कर्मणः फलम् यत्प्रतिबन्धेनान्यानि कर्माणि फलं न दद्युः।[५२] एवं विधया रीत्या कुमारिलभट्टपादाः न्यायाभिमतस्येश्वरकर्तृत्वस्य खण्डनं कुर्वन्ति। अर्वाचीनैः मीमांसाकैरेतासां युक्तीनामप्युपद्योगः क्रियते काचिदन्या अपि युक्तयः प्रदीयन्ते। मुख्यतो मीमांसकैर्न्यायाभिमतेश्वरनिरासायैतासां युक्तीनां प्रदर्शनं क्रियते-(१) सर्गप्रलययोः प्रमाणेन सिद्ध्यभावात् न क्षित्यादिकर्तृत्व मीश्वरस्य। (२) ईश्वरसाधनाय प्रयुज्यमानमनुमानं दुष्टमस्ति। (३) क्षित्यादीनां कर्त्रा शरीरिणा भाव्यम् (४) क्षित्यादिनिर्माणे न हि कस्यचित् प्रयोजनस्य सम्भावना (५) ज्ञानेच्छाप्रयत्नानां नित्यत्वमेकत्वं च न युक्तिसङ्गतम्। क्रमश इमा युक्तयः प्रदर्श्यन्ते।

## (१) सर्गप्रलययोरभावात् न क्षित्यादीनां कश्चित् कर्ता

मीमांसकशिरोमणिः कुमारिलभट्टः मीमांसामते सर्गप्रलययोः स्वीकारो न सम्भवतीति प्रतिपादितवान् श्लोकवार्तिके। प्रकरणपञ्चिकायां शालिकनाथोऽप्यत्र सर्गप्रलययोरस्वीकारे युक्तिं प्रदर्शयति नैयायिकास्तावत् सावयवत्वेन हेतुना तनुतरुमहीधरादीनां कार्यत्वं साधयन्ति शालिकनाथोऽत्र वदति-भवतु सावयवं तनुतरुभूधरादि, सावयवस्य समुत्पत्तिरवयवसंयोगद्वारा भवति, अवयवसंयोगनाशे च सति सावयवस्य विनाशो भवति। अतः सावयवत्वेन कार्यत्वं सिद्ध्यति तन्वादीनाम्। तथाप्येकदैव सकलस्य वस्तुमात्रस्य समुदयो विनाशश्च नैवाङ्गीकर्तुं शक्यते नास्त्यत्र प्रमाणं किञ्चित्। सावयवत्वं हि सकलस्य सावयवस्य वस्तुमात्रस्य कार्यत्वमेव साधयति न तावदेकदा समुदयं विनाशं च। अतः यथा लोके दृश्यते कस्यचित् वस्तुनः समुत्पत्तिर्भवति तदैव कस्यचिदपरस्य वस्तुनो विनाशो भवति। एवं हि क्रमश एव समुदयः क्रमशश्च विलय इत्येव स्वीकर्तव्यम्। न त्वेकदैव

समेषां समुदयविनाशात्मकौ सृष्टिप्रलयौ स्वीकार्यौ।[५३] अत्रापरामपि युक्तिं शलिकनाथो दर्शयति–अधुना जनानां मातापितृसंयोगनिमित्ता शरीरोत्पत्तिर्भवति। अतः "पूर्वकालीना अपि जनाः मातापितृसंयोगनिमित्तात्मलाभाः जनत्वात् आधुनिकजनवत्" इत्यनुमानमत्र प्रदर्शयितुं शक्यं, अनेनानुमानेन च पूर्वेषामपि जनानां मातापितृसंयोगनिमित्तोत्पत्तिसिद्धौ सति सर्गस्य स्वीकारो नैव घटते।[५४] सर्गस्वीकारे च सर्गकालीनस्य जनस्योत्पत्तिस्तदानीं मातापित्रोरभावात् न मातापितृसंयोगनिमित्ता सम्भवति। अतः प्रमाणविरोधो भवति। यथा संस्वेदजानां धर्माधिपत्येन मातापितृसंयोगं विनोत्पत्तिर्भवति न तथा योनिजानां मातापितृसंयोगात्मकं निमित्तं विनोत्पत्तिः सम्भवति, न हि लोके जरायुजानामण्डजानां च मातापितृसंयोगं विनोत्पत्तिर्दृश्यते। सर्वत्रैवानुमानं दृष्टानुसार्येव भवति। नहि कश्चित् पाण्डिममात्रेण वह्निमनुमिनोति, अपितु यादृशे पाण्डुरद्रव्ये सति वह्निः नियमेनोपलभ्यते तादृशेन धूमादिनैव वह्निमनुमिनोति। अतः सर्गाद्यकाले जनानामिदानीं योनिजोत्पत्तिकानां समुत्पत्तिर्न मातापितृसंयोगात्मकं निमित्तं विना सम्भवति। अतो न सर्गस्वीकारः सम्भवति, सर्गस्वीकाराभावे च न प्रलयोऽपि स्वीकर्तुं शक्यते। सर्गप्रलययोरस्वीकारे च कुमारिलभट्टानामपि युक्तयो विलोकनीयाः।

## (२) ईश्वरसाधनाय प्रयुज्यमानमनुमानं दुष्टम्

क्षित्यादीनां सकर्तृकत्वं साधयद्भिर्नैयायिकैः कार्यत्वं हेतुः प्रदीयते। तत्र मीमांसकानां प्रश्नो भवति यत् यदि कार्यत्वेन कर्तृत्वेन च कार्यकारणभावः स्यात् तदेव कार्यत्वहेतुना कर्तुः सत्त्वं साधयितुं शक्यम्। परन्तु नैवमस्ति, घटं प्रति कुलालस्य कारणता, पटं प्रति तन्तुवायस्य कारणता एवं रीत्याऽवश्यमेव येषां र्काकारणभावः कल्पनीयोऽस्ति तेनैव निर्वाहसम्भवे कार्यत्वेन कर्तृत्वेन च कार्यकारणभावे नास्ति किञ्चित् प्रमाणम्। यदि कार्यत्वेन कर्तृत्वेन च कार्यकारणभावः स्वीक्रियते तदापि घटत्वेन कुलालत्वेन च कार्यकारणभावः स्वीकार्य एव। अतः विशेषरूपेणैव कार्यकारणभावोऽङ्गीकार्यः, न तु सामान्यतोऽपि। अत्राशङ्केयं सम्भवति यत् घटत्वेन दण्डत्वेन च कथं कार्यकारणभावः? अत्रापि तद्घटत्वेन तद्दण्डत्वेनैव विशिष्य कार्यकारणभावः सम्भवति तत्र समाधीयते यदत्र यद्यपि तद्घटत्वेन तद्दण्डत्वेन च कार्यकारणभावोऽस्ति किन्तु सामान्यतो घटार्थिनो दण्डमात्रविषयिकोपादित्सा भवति, अतः घटत्वेन दण्डत्वेन कार्यकारणभावो-ऽप्यङ्गीक्रियते। अत्र तु कार्यार्थिनः कर्तृमात्रविषयिण्युपादित्सा न भवति, अतः कार्यत्वेन कर्तृत्वेन कार्यकारणभावस्वीकारे नास्ति किञ्चित् प्रमाणम्।[५६] एवं

कार्यत्वेन कर्तृत्वेन कार्यकारणभावस्याभावेनानुमानमिदं व्यभिचारशङ्कानिवर्तकतर्क-शून्यत्वादप्रयोजकम्।

अनुमाप्रयोगे चायं नियमो भवति यत् यो हेतुः यादृशविशेषणविशिष्टेन साध्येन दृष्टान्तस्थलेषु नियतः दृश्यते स हेतुः तादृशविशेषणविशिष्टं साध्यं पक्षे साधयति यदि साध्यं तद्विपरीतविशेषणं भवति तदा स हेतुः तं विपरीतं विशेषं स्वयमेव बाधयति, निर्विशेषस्य च साध्यस्य सम्भाव्यतैव नास्ति। अतः सोऽयं हेतुः साध्यं न साधयति।[५७] तथाहि शरीरिचेतनकर्तृकत्वेन घटादिषूत्पत्तिमत्त्वं व्याप्तं दृष्टमस्ति, देहाङ्कुरादीनां च चेतनकर्तृकत्वसाधनायोत्पत्तिमत्त्वं हेतुः दीयते, सोऽयं हेतुः विपरीतं विशेषमशरीरित्वं स्वयमेव बाधयति। नैयायिकाश्च क्षित्यादि-कर्तुरशरीरित्वं स्वीकुर्वन्ति। एवमशरीरित्वे बाधिते सशरीरत्वस्य चास्वीकारात् सशरीराशरीरोभयभिन्नस्य तु चेतनस्यासम्भाव्यत्वात् न हि चेतनकर्तृकत्वमङ्कुरादीनां सिद्धं भवति।[५८] चेतनकर्तृकत्वे चासिद्धे कुत ईश्वरसिद्धिः?

अपि चेदं कार्यत्वं "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्" इति प्रयुक्ते "क्षित्यादिकं ईश्वरकर्तृकं न भवति घटवत्" "नित्यज्ञानेच्छाप्रयत्नजन्यं न भवति घटवत्" इत्यनुमानप्रयोगावपि बुद्धावारोप्यौ।[५९] इदं कार्यत्वं हि यथा सकर्तृकत्वेन व्याप्तमस्ति तथैव सकर्तृकत्वानुमानेन साधनीयस्येश्वरकर्तृकत्वस्याभावेनापि व्याप्तमस्ति। तथा च विरुद्धाव्यभिचारित्वमस्य हेतोः स्फुटमेव। यद्यपि नैयायिकाः घटस्यापीश्वर-कर्तृकत्वं स्वीकुर्वन्ति फलतो नैवं विरुद्धाव्यभिचारित्वं हेतोः सम्भवति, किन्तु तथापि घटं प्रति कुलालस्यापि कर्तृत्वमस्ति, ईश्वरस्यापि कर्तृत्वमस्ति। एवं घटस्य न केवलेश्वरकर्तृकत्वमस्ति तथा चैवमनुमानं प्रयोक्तुं शक्यते-क्षित्यादिकं न केवलाशरीर्यात्मकर्तृकं कार्यत्वात् घटवत्, वस्तुत्वात् आकाशवद्वा। सत्प्रतिपक्षता-ऽप्यस्यानुमानस्य सकर्तृकत्वसाधकस्य। तथाहि प्रयोक्तुं शक्यतेऽनुमानमेवं "क्षित्यादिकं न बुद्धिमत्कर्तृकम् शरीरिकर्तृकत्वविरहात् व्योमवत्" इति।[६१] उपाधिरप्यत्रावतिष्ठति यादृशसन्निवेशविशिष्टत्वेन घटादौ सकर्तृकत्वमवधारयन्ति नैयायिकाः न हि तादृशसन्निवेशविशिष्टत्वं क्षित्यादीनामस्ति।[६२] तथा हि यत्र यत्र सकर्तृकत्वं घटादौ तत्र तत्र कृतबुद्धिजनकसन्निवेशविशेषविशिष्टत्वमस्ति। किन्तु यत्र यत्र कार्यत्वमस्ति नाहि तत्र सर्वत्र कृतबुद्धिजनकसन्निवेशविशेषविशिष्टत्वमस्ति। कार्यत्वन्तु तत्रापि विद्यते। एवं कार्यत्वस्य हेतोः सोपाधिकत्वात् व्याप्यत्वासिद्धत्वं स्फुटम्। एवं सकर्तृकत्वसाधनेन उपादानोपकरणसम्प्रदानप्रयोजनज्ञधीमत्कर्तृकत्वं साधनीयम्। सर्वेषामप्युत्पत्तिमतां चादृष्टमप्युकरणमस्ति, न हि तज्ज्ञः कुलालादिरिति यत्र यत्र

कार्यत्वं तत्र तत्र सकर्तृकत्वमिति व्याप्तिरसिद्धा दृष्टान्तश्च साध्यशून्यः। बालोन्मत्तादिश्च प्रयोजनाद्यज्ञोऽपि कर्ता भवति।[६३] अत एवं दोषदुष्टतया न क्षित्यादेः सकर्तृकत्वानुमानं कर्तुं शक्यम्।

## (३) क्षित्यादीनां कर्त्रा शरीरिणैव भाव्यम्

मीमांसाकैराक्षिप्यते यत् यदि क्षित्यादीनां कश्चित् कर्ता सिद्ध्यति चेत् तर्हि शरीरी कर्ता सिद्ध्यति नत्वशरीरी। यतोहि शरीरित्वमपि व्याप्तावनुप्रविशति। कर्तृत्वं शरीरव्याप्यमस्ति, न ह्यशरीरिणः कर्तृत्वं भवति। अशरीरिणः कर्तृत्वे व्यापारवत्त्वमपि तस्य स्वीकार्यं भविष्यति। कर्तृत्वं नाम व्यापाराश्रयत्वमेवास्ति। नैयायिकाः कृत्याश्रयत्वं कर्तृत्वमिति सिद्धान्तयन्ति, कृतिश्चात्मवृत्तिर्विशेषो गुणः। किन्तु मीमांसको वदति यत् कर्तृत्वं नाम व्यापाराश्रयत्वं न तु कृत्याश्रयत्वम्। अत एव ब्राह्मणक्षत्रियवैश्यशूद्राणां कर्मविधानं सङ्गतं भवति, चैत्रो गच्छतीत्यादिप्रयोगाणां च साधुत्वं भवति। विप्रत्वचैत्रत्वादीनां शरीरनिष्ठतयाऽऽत्मनः कर्तृत्वपक्षे ब्राह्मण-क्षत्रियादिनां कर्मविधिरसङ्गता स्यात्।[६४] ब्राह्मणेन हि कर्मणो विधानं, न हि ब्राह्मणस्य कर्तृत्वमिति ब्राह्मणादिपदानां तदधिष्ठायके लक्षणा भवतीति भवान् वदति चेत्? नैतच्छक्यम् शक्यसम्बन्धरूपा लक्षणाऽन्वयस्यानुपपत्तौ तात्पर्यस्य वाऽनुपपत्तौ भवति। यदि कदाचित् चेतनमात्रे कर्तृव्यवहारः स्यात् तदाऽत्र लक्षणेति कल्पयितुं शक्यते, नास्ति चैवम् किन्तु चेतनोपहितेदेहे कर्तृव्यवहारो भवति।[६५] अतः कर्तृत्वमीदृशमेव स्वीकार्यम् यच्च देहे स्यात् तादृशं च कर्तृत्वं व्यापाराश्रयत्वरूपमेव।

अपि च न्यायदर्शनानुसारमीश्वरः परमाणुषु द्व्यणुकाद्यारम्भकसंयोगानुकूलां क्रियां जनयति। तद्द्वारा च क्षित्यङ्कुरादिकं जनयति। परमाणुषु स्पन्दस्य नहीच्छामात्रेण प्रयत्नं विना सम्भवत्युत्पत्तिः। इदानीमपि इच्छाकारितप्रयत्नवशेन शरीरस्पन्दोत्पत्ति-र्भवतीति दृश्यते। नैयायिको वदति यदस्तीश्वरस्य प्रयत्नोऽपि तर्हि मीमांसक उत्तरयति न ह्यशरीरस्य प्रयत्नं सम्भाव्यते। सर्वस्मिन्नपि प्रदेशे संयुक्ता आत्मानो नहि सर्वत्रैव प्रयत्नमारभन्ते। केवलं न शरीरप्रदेश एवात्मानः प्रयत्नमारभन्ते न बहिः प्रदेशे प्रयत्नमारभन्ते। अतोऽवगम्यते यत् जीवात्मनां प्रयत्नः शरीरापेक्षो भवति, न शरीरनिरपेक्षः।[६६] ईश्वरस्यातो यदि कर्तृत्वसम्पत्तये प्रयत्नोऽस्ति चेत् तदा परमेश्वरेणापि सशरीरेण भाव्यम्। एवमेवाशरीरस्येच्छाऽपि न सम्भवति यथा चाशरीराणां मुक्तात्मनामिच्छा न भवति एवमेवेन्द्रियादेरभावात् ज्ञानमपि न सम्भवत्यशरीरस्य। यदि चेश्वरस्य शरीरं स्वीक्रियते तर्हि किं तच्छरीरं अनित्वं

नित्यं वेति? यदि तावदीश्वरशरीरमनित्यं तदा प्रलयकाले सर्वेषां कार्याणां प्रलयादीश्वरोऽयमशरीरः कथं सर्गार्थं प्रयतेत?[६७] यदि नित्यमीश्वरशरीरं स्वीक्रियते, नित्यस्य चेश्वरशरीरस्य प्रलयेऽपि कार्यत्वाभावात् सावयवत्वं कार्यत्वव्यभिचारि भवति। कुतोऽयं व्यभिचारी हेतुः साध्यं कार्यत्वं साधयेत्?[६८] एवं रीत्या यदि कदाचिदीश्वरः सिद्ध्यति चेदनुमानेन तर्ह्यसौ सशरीर एव सिद्ध्येत्, न तु न्यायदर्शनाभिमतोऽशरीरीति।

## (४) क्षित्यादिनिर्माणे न हि कस्यचित् प्रयोजनस्य सम्भावना

नैयायिकाः परमाणूनामचेतनत्वात् अचेतनस्य च चेतनाधिष्ठितस्यैव कार्यसम्पादने सक्षमतया परमाणूनामधिष्ठायकः कश्चिदस्ति स एव कर्तेति। मीमांसकाः कथयन्ति यद् भवान् अचेतनत्वात् चेतनाधिष्ठितत्वानुमानमिच्छति, वयं हि प्रयोजनाभावाच्चेतनानधिष्ठानानुमानमिच्छामः। तथा हि नैयायिकैः "परमाणवः चेतनाधिष्ठिताः प्रवर्तन्तेऽचेतनत्वात् वास्यादिवत्" एवं प्रयुक्ते "परमाणवः चेतनानधिष्ठिताः प्रवर्तन्ते प्रयोजना- भावात्" इति मीमांसकैः प्रयोक्तुं शक्यते। अत्र कस्यानुमानस्य बलवत्त्वमिति विचारणीयम्। लोके हि यस्य किञ्चित् प्रयोजनमुपलभ्यते तस्यैव चेतनाधिष्ठितत्वं प्रतीयते, यस्य च किञ्चित् प्रयोजनं नोपलभ्यते न तस्य चेतनाधिष्ठानं ज्ञायते। अतः लोके यथा दृश्यते तथैव यत्र प्रयोजनं तत्रैव चेतनाधिष्ठितत्वमिति व्याप्तिः स्वीकार्या।[६९] एवञ्च परमाणूनां प्रवृत्तौ न हि किञ्चित् प्रयोजनमुत्पश्यामो वयम्। परमाणुषु प्रवर्तमानेषु सर्गोत्पत्तिस्वीकारेऽपि न हि सर्गस्य किञ्चित् प्रयोजनं शक्यते व्युत्पादयितुम्। न हि परमाणूनधिष्ठाय सर्गकरणे परमेश्वरस्य किञ्चित् प्रयोजनमस्ति स्वार्थो वा परार्थो वा। स्वार्थश्चेदस्य प्रयोजनं स्यात्तदाऽऽप्तकामत्वमस्य खण्डितं भवति। परार्थं चास्य प्रवृत्तौ नहि दुःखमयमिदं जगत् सृजेत्। जगतः सर्वेषामप्यात्मनां प्रवृत्तिः स्वार्थकारुण्याभ्यां व्याप्ता भवति न हि स्वार्थः कारुण्यं वा सर्गस्य प्रयोजनं सम्भवति, प्रयोजनं विना नहि मन्दस्यापि प्रवृत्तिर्भवति चेतनस्य। यदि चायं प्रयोजनं विना प्रवर्तते तदाऽस्य चैतन्येन को लाभः? एतच्च सर्वं कुमारिलभट्टपादानुसारिणि न्यायाभिमतेश्वरालोचने प्रतिपादितम्। एवं प्रयोजनाभावात् परमाणूनां चेतनानधिष्ठितत्वमेव युज्यते।

## (५) ज्ञानेच्छायत्नानां नित्यत्वमेकैकत्वं च नैव सम्भाव्यते-

नैयायिका ईश्वरस्य नित्यं ज्ञानं, नित्या चेच्छा, नित्यः प्रयत्न इति स्वीकुर्वन्ति। यदि तावदनित्य ईश्वरप्रयत्नः, अनित्येच्छा, अनित्यं च ज्ञानं स्यात्तदा न शरीरमन्तरेण सम्भाव्येत, अतः ईश्वरीयज्ञानेच्छायत्नानां नित्यत्वं स्वीकुर्वन्ति। नित्यत्वस्वीकारे च

न शरीरापेक्षा तेषां कृते भवति। अत्र च मीमांसका: वदन्ति न हि ज्ञानेच्छायत्नानां नित्यत्वं सम्भवति एतेषामनित्यत्वव्याप्ते:।[७०] अपि च ज्ञानेच्छादीनां नित्यत्वस्वीकारे कुत: तत्तद्वस्तुविषयत्वमेतेषाम्। यदि च ज्ञानेच्छाकृत्यादिभि: तत्तत्कार्योत्पत्तिपूर्वकं प्रवर्तनं तदैव तदुद्देशेन तत्कारणमधिष्ठाय प्रवर्तनम्, तत्पूर्विका चोत्पत्तिरिति स्पष्टत एवान्योन्याश्रयो भवति।[७१] अतोऽनुपपन्नोऽयं पक्ष:। ईश्वरबुद्धिरकारणा नित्या चास्ति, नैतद् युक्तिसङ्गतम् बुद्धिरनित्यैव भवति, नित्या चेत् सा बुद्धिरेव न स्यात् बुद्धिमत्कर्तृकत्वं नैवायाति। बुद्धेर्नित्यत्वायोगात्, न पुनरन्येनाधिष्ठितत्वं दृश्यते।[७२] यदि चादृष्टमपि दृष्टविपरीतं बुद्धिनित्यत्वं भवानङ्गीकरोति तदा चेतनानधिष्ठितत्वमेव कथं नाङ्गीक्रियते? अत: नित्यज्ञानस्य नास्ति सम्भावनाऽपि। किञ्च नेश्वरीयज्ञानस्यैकत्वं सम्भवति, उपादानगोचरापरोक्षज्ञानविषयत्वेन साध्यमाने परमेश्वरेऽनन्तरपरमाण्वादि-विषयाण्यनन्तान्येव ज्ञानानि स्युर्नैकम्। लाघवाच्चेदियमेकत्वोक्तिस्तदापि कर्तृत्वसम्पत्तये यावद्विषयकत्वं ज्ञानस्यावश्यकं तावद्विषयकत्वमेव स्यात् न तावत् सर्वविषयकत्वम्। अत: सर्वज्ञत्वासिद्धि:।[७३]

एवमेव प्रति कार्यं प्रयत्नो भिन्नो भवति, पादसञ्चरणेऽन्य: प्रयत्नो भवति, बाहूद्धरणे चान्य: प्रयत्नो भवति। अतो यदीश्वरप्रयत्नो नित्य: स्यात् तदाऽपि तस्यैकत्वात् विचित्रकार्योत्पत्तिहेतुत्वं न सम्भवति। अत: वैयर्थ्यमेवास्यैकस्य नित्यस्य प्रयत्नस्य स्वीकारस्य।[७४] अत ईश्वरीयप्रयत्नस्याप्यनेकत्वं स्वीकार्यम्। तथा स्वीकारे तावताननन्तानामीश्वरप्रयत्नानां यदि नित्यत्वं तदा सर्गानुकूलस्य प्रयत्नस्य, प्रलयानु-कूलस्य च प्रयत्नस्य उभयोरेव सर्वदाऽवस्थानात् परस्परविघातान्न सृष्टि: स्यान्न वा प्रलय: स्यात्।[७५] तथा चैवं भवत्सिद्धान्तहानि:। एवं बाधकसद्भावेन नहि क्षित्यादिकर्तु: सिद्धि: सम्भवत्यनुमानेन। वेदेनैव क्षित्यादिकर्तृत्वमीश्वरस्य सिद्धं भवेत्? इत्यपि नैयायिकेन वक्तुं न शक्यते यतो हि नैयायिकै: वेदानामीश्वरकर्तृकत्वेन प्रामाण्यमिष्यते। एवं नैयायिकानां वेदप्रामाण्यादीश्वरसिद्धि:, ईश्वरप्रामाण्याच्च वेदसिद्धिरिति स्पष्टमितरेतराश्रयो दोष: प्रसज्यते।[७६]

अत्र नैयायिक: प्रष्टुं शक्नोति यत् कार्यत्वसकर्तृकत्वयो: व्याप्तिरस्ति क्षित्यादीनां च पूर्वदर्शितरीत्या अकर्तृकत्वे सिद्धे कार्यत्वमपि हीयेत। कार्यस्य कृते त्रिविधकारणापेक्षा भवति समवायिकारणस्य, असमवायिकारणस्य, निमित्तकारणस्य च। क्षित्यादीनाञ्चैतत्त्रितयकारणाभावे कथं कार्यत्वम्? तत्र च मीमांसकस्योत्तरमस्ति यदस्मन्मते न हि त्रिविधकारणापेक्षा कार्योत्पत्तौ।[७७] किन्तु कार्योत्पत्तावश्यकं कारणमात्रमेवापेक्ष्यते। क़िन्तु अत्रेदमपि प्रष्टुं शक्यते यत् कर्तारमन्तरेण न हि

कारणानां कार्यानुगुणतया परस्परोपसर्पणं सम्भवति नहि कर्तारमन्तरेण चक्रचीवरादेः घटोत्पत्तये, तन्तुतुर्यादेः पटोत्पत्तये च परस्परोपसर्पणं दृश्यते। अतः क्षित्यादीनां समुत्पत्त्यर्थमपि कर्तुरावश्यकता दरीदृश्यते? तत्र मीमांसकः समादधाति यत् लोके कुलालतन्तुवायादेः शरीरव्यापारेण चक्रचीवरादीनां तन्तुतुर्यादीनां परस्परोपसर्पणं दृश्यते भवांश्च "क्षित्यादिकर्तुः शरीरव्यापारमन्तरेणैव कारणानां क्षित्यादिसमुत्पत्त्यर्थं परस्परोपसर्पणं भवति" इति ब्रवीति। यथैतद् दृष्टविपरीतं भवान् स्वीकरोति तथाऽस्मन्मते कर्तारमन्तरेण कारणानां परस्परोपसर्पणं भवतीति दृष्टविपरीतं स्वीकर्तुं शक्यते।[७८] अपि च यदीश्वरः स्वीक्रियतेऽपि तदा भवन्मते कथं सकलदेशेषु सकलेषु च कालेषु समानतया प्रवृत्तयोर्विद्वेषरहितयोरीश्वरेच्छाप्रयत्नयोः कदाचित् कार्योत्पत्तिहेतुत्वं कदाचिच्च विघटनहेतुत्वम् भवति? अत्र च भवता तत्तदात्मगतादृष्टस्यैव हेतुत्वं कल्पनीयम्। अनेनैव च कारणानां परस्परोपसर्पणसिद्धेः तत्र नास्तीश्वरकल्पनायाः किञ्चिदप्यौचित्यम्।[७९]

## अदृष्टाधिष्ठातृत्वमपि नेश्वरस्य

मीमांसकैरदृष्टवशादेव कारणानां परस्परोपसर्णं सम्भवतीत्युक्तम्। तत्र नैयायिको वदति नाचेतनमदृष्टमपि चेतनानधिष्ठितं कार्यसम्पादनक्षममस्ति, अतः "अदृष्टमणुद्वयसंयोगहेतुकर्मकरं चेतनाधिष्ठितमचेतनत्वात् वास्यादिवत्" इत्यनुमानं प्रयोज्यम्। अनुमानेनैतेनादृष्टस्याधिष्ठायकः कश्चिच्चेतनोऽस्ति सिद्धं भवत्येतत्। स च चेतन ईश्वर इतीश्वरसिद्धिर्भवति। अत्र मीमांसकाः समादधति यत् यस्य क्षेत्रज्ञस्यादृष्टमस्ति सः क्षेत्रज्ञ एव तददृष्टाधिष्ठाताऽस्तु। एवं जीवात्मनामेवादृष्टाधिष्ठातृत्वं कल्प्यम्, यद्यदृष्टं चेतनानधिष्ठितं कर्मकरं न भवति। यदि पृच्छति भवान् यदयं जीवोऽज्ञः नहि कस्यचिदपि जीवात्मनोऽदृष्टज्ञानमुपपद्यते, अज्ञस्य चास्य नादृष्टाधिष्ठायकत्वमुपपन्नं भवति। तर्हि मीमांसको वदति यन्नहीश्वरस्यापि परपुरुषवर्त्तिधर्माधर्मज्ञानमुपपद्यते, ईश्वरस्य तददृष्टं प्रति कारणत्वाभावात्।[८०] यदि च कदाचिदीश्वरस्य परपुरुषवृत्तिधर्माधर्मज्ञानमुपपद्येतापि तथापि नादृष्टाधिष्ठायकत्वमीश्वरस्य सम्भवति, अदृष्टस्याधिष्ठानानर्हत्वात्। तक्षा वास्यादि संयोगेनाधितिष्ठति, वास्येन सह करादेः संयोग एव वास्यादेरधिष्ठानमस्ति। अदृष्टस्य तु गुणत्वान्न संयोगः सम्भवति। ईश्वरान्यगुणत्वाच्च न समवायोपि सम्भाव्यते।[८१] तर्हि केन सम्बन्धेनादृष्टमधितिष्ठति परमेश्वरः? यदि चेत् संयुक्तसंयोगिसमवायसम्बन्धेनाधितिष्ठतीश्वरोऽदृष्टम्, यथा च वाचस्पतिमिश्रेण तात्पर्यटीकायां प्रतिपादितम्।[८२] ईश्वरेण परमाण्वादयः संयुक्ताः परमाणुभिश्च क्षेत्रज्ञाः संयुक्ताः तत्समवेतं चादृष्टमस्ति।

अत्र मीमांसकः प्रवदति नैवं परम्परासम्बन्धेनाधिष्ठानं कुत्रचिद् दृश्यतेऽतः[८३] नैवं रीत्या परमेश्वरेणादृष्टस्याधिष्ठानमुपयुज्यते। एवमेवादृष्टं प्रवृत्त्यनर्हमप्यस्ति। प्रवृत्तिर्नाम क्रियैव। गुणे च क्रिया न भवतीति नैयायिकानामपि सिद्धान्तः[८४] तथा च क्रियात्मिका प्रवृत्तिः वास्यादौ सम्भवति तेषां द्रव्यत्वात्। अदृष्टस्य तु गुणत्वान्न क्रियात्मिका प्रवृत्तिः सम्भाव्यते।[८५] कार्योत्पत्तिरेवादृष्टस्य प्रवृत्तिरित्यपि नैव वक्तुं पार्यते दृष्टव्याघातात् न हि लोक उत्पत्तिरूपा प्रवृत्तिः क्वचिद् दृश्यते।[८६] यदि वेच्छामात्रमेवाधिष्ठानमदृष्टस्य तर्हि नैतादृशमधिष्ठानं परमाणूनामदृष्टस्य च सम्भवति। यादृशं हि लोकेऽधिष्ठानं दृश्यते तादृशमेवाधिष्ठानमसिद्धेऽपि कल्प्यते न हि देहादीनामधिष्ठानमिच्छामात्रेण दृश्यते जीवात्मभिः किन्त्विच्छाकारितयत्नेनाधिष्ठानं दृश्यते तदपि चादृष्टोपगृहीतदेह एव न त्वन्यत्र। अतो नादृष्टाधिष्ठायकत्वेनेश्वरसिद्धिः सम्भवति, न चादृष्टाधिष्ठातृत्वमनुमानार्हमस्ति।[८७]

## वेदप्रणेतृत्वेनापि नेश्वरानुमानं शक्यम्

नैयायिकास्तावद्वेदानामीश्वरकर्तृकत्वमिच्छन्ति। वेदानामीश्वरकर्तृकत्वसाधनाय च वेदानां पौरुषेयत्वं पदसङ्घातात्मकवाक्यत्वेन हेतुनाऽनुमीयते तैः। तत्र तावन्मीमांसकाः वेदानां नित्यत्वं काङ्क्षमाणाः वदन्ति नहि वेदे पुरुषसम्बन्धलेशोऽपि सम्भवति। वेदेषु तिस्रो रीतयः सम्भवन्ति याः समाश्रित्य वेदानां पौरुषेयत्वं साधयेत् भवान्। (१) शब्दजनकत्वेन (२) शब्दार्थयोः सम्बन्धजनकत्वेन (३) ग्रन्थस्य वा पुरुषकृतत्वेन। एतान् त्रीनपि पक्षान् मीमांसकः खण्डयति।

## (१) शब्दस्य नित्यत्वान्न जन्यत्वम्

नैयायिकाः शब्दस्य जन्यत्वमिच्छन्ति शब्दस्य जन्यत्वे च शब्दात्मकानां वेदानामपि जन्यत्वं भविष्यति, अतः मीमांसकाः शब्दस्य नित्यत्वं व्यवस्थापयन्ति। कुमारिलमते शब्दोऽयं द्रव्यं सर्वगतो नित्यश्च।[८८] प्राभाकरा अपि शब्दस्य नित्यत्वमिच्छन्ति। प्रकरणपञ्चिकायाः न्यायशुद्धिनामके नवमे प्रकरणे शालिकनाथो वदति यत् शब्दस्य प्रामाण्यं तदैव सम्भवति यदा पदपदार्थयोः सम्बन्धोऽपौरुषेयः स्यात्, पदपदार्थयोश्च सम्बन्धोऽपौरुषेयस्तदैव सम्भवति यदा शब्दस्य नित्यत्वं स्यात्, अतः शब्दस्य नित्यत्वं प्रतिपाद्यते।[८९] वेदस्यापौरुषेयत्वसाधनं नित्यत्वसाधनं तदैव सम्भवति यदा च शब्दानां नित्यता स्यादन्यथा शब्दात्मकानां वेदानां नित्यत्वसाधनं शशशृङ्गप्रहारवद्धास्यतां व्रजेत्।[९०] शब्दस्य नित्यत्वे च युक्तिं प्रदर्शयता जैमिनिना महर्षिणा प्रोच्यते-"नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्"[९१] अयमाशयः शब्दो नित्यो भवितुमर्हति दर्शनं नामोच्चारणं तस्य परार्थत्वात्, परं अर्थं प्रत्याययितुं

भवति। यदि शब्दः उच्चरितमात्रो विनष्टो भवेत् तदा न ह्यन्योऽन्यं प्रति अर्थं प्रत्याययितुं समर्थो भवेत्।[९२] एवं शब्दस्य नित्यत्वेऽन्या अपि युक्तयो विद्यन्ते याश्च शब्दस्य नित्यत्वं साधयन्ति तथाहि अनेकं वारमुच्चरितेऽपि वर्णे प्रत्यभिज्ञा भवति यदयं स एव वर्णः। तथा प्रतीतिर्भवति अष्टवारमुच्चरितः गोशब्दः नाष्टौ गोशब्दाः। यद्यस्याः प्रतीतेर्नैकेन वर्णेन सम्बन्धः स्यात्तदाऽस्याः प्रतीतेर्भ्रमात्मकत्वमेव कल्पनीयं भविष्यति। अतोऽवगम्यते वारं वारमुच्चार्यमाणोऽपि नहि वर्णो भिद्यते। किन्तु एक एव वर्णः उच्चारणेनाभिव्यज्यते। प्रत्यभिज्ञाऽपि भवति स एवायं ककार इति।[९३] अन्याः अपि काश्चन युक्तयः प्रदीयन्ते किन्त्वासामुपदर्शितानां युक्तीनां प्राधान्यमस्ति। नित्योऽयं वर्णः वायवीयैः संयोगविभागैः नादशब्दवाच्यैर-भिव्यज्यते।[९४] न्यायरत्नाकरे स्पष्टीक्रियते यत् वायुगुणभूतैः ध्वन्याख्यैः शब्दैः शब्दोऽभिव्यज्ज्यते। अयमाशयः वायौ ध्वन्यात्मकः शब्दोऽवतिष्ठते सोऽयं ध्वन्यात्मकः शब्दो वायुगुणः वायुना सह ताल्वादिभिः प्रेरितः सन् श्रोत्रं संस्करोति येन च शब्दो व्यज्यते। एवं शब्दस्य नित्यत्वान्नहि शब्दजनकतया वेदे पुरुषसम्बन्धः सम्भवति।

**( २ ) शब्दार्थायोः सम्बन्धस्य नित्यत्वान्न तज्जनकत्वेनापि पौरुषेयत्वम् वेदानाम्**

शब्दार्थयोः यः सम्बन्धः सः सम्बन्धोऽपि न हि पुरुषकृतः "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्"[९] सूत्रेणानेन शब्दार्थयोः सम्बन्धस्य नित्यतां जैमिनिः प्रत्यपादयत् शबरोऽस्य सूत्रस्य भाष्ये "अवियुक्तः शब्दार्थयोर्भावः सम्बन्धः नोत्पन्नयोः पश्चात् सम्बन्धः" इति सूत्रार्थं वर्णयति। "अपौरुषेयः शब्दस्यार्थेन सम्बन्धः" इति च सिद्धान्तयति। यदि हि कश्चित् पुरुषः सम्बन्धं कृत्वा व्यवहारयेत् तदा व्यवहारकालेऽवश्यं स्मर्तव्यो भवति। नहि "वृद्धिरादैच्" इति सूत्रस्यास्मरणे सूत्रकर्तुश्चास्मरणे "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इति सूत्रस्यार्थः ज्ञातुं शक्यते यदि च सम्बन्धं कृत्वा संव्यवहारार्थं वेदाः केनचित् प्रणीताः स्युस्तदाऽत्रापि तस्य पुरुषस्य व्यवहारकाले स्मरणमवश्यं स्यात्, न भवति व्यवहारकाले कर्तुः पुरुषस्य स्मरणमतः ज्ञायते यन्न सम्बन्धं कृत्वा केनचित् संव्यवहारार्थं वेदाः प्रणीताः। नैयायिकाः वैशेषिकाश्च शब्दार्थयोः सम्बन्धमीश्वरेच्छारूपं स्वीकुर्वन्ति। अर्थादीश्वरकृतः शब्दार्थयोः सम्बन्धः न्यायवैशेषिकमते।[९७] सर्गसमये परमेश्वरः जगत् सृष्ट्वा शब्दार्थयोः सम्बन्धं वेदांश्च प्रवर्तयति। तत्रैवमाक्षिपन्ति मीमांसकाः-प्रथमं तावत् सर्गप्रलययोः सत्त्व एव नास्ति प्रमाणम्। पदपदार्थयोः सम्बन्धश्चानादिरेव संसारस्याना-दित्वात्। यदि कदाचित् संसारस्यादिर्भवेत् तदा पदपदार्थयोः सम्बन्धः परमेश्वरकृत

इति स्वीकर्तुं शक्यते। यत्र च सम्बन्धःपुरुषकृतो भवति तत्र पदार्थावबोधकाले सम्बन्धकर्तारं जना अवश्यं स्मरन्ति। यथा "वृद्धिरादेच्" इति समयानुसारेण "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इति व्यवहारे पाणिनिं स्मरन्तो जनाः वृद्धिं प्रतिपद्यन्ते। यद्यपि पाणिनिरित्येवं न स्मर्यते तथाऽपि समयकर्तुः व्यवहारकर्तुश्चैकत्वं स्मर्यत एव।[९८] नहि वेदेप्येवं समयकर्तुः व्यवहर्त्तुश्चैकत्वं स्मर्यते। द्वितीयं तावत्-यदि कदाचित् सर्गस्य स्वीकरोऽपि क्रियते तथापि समेषां शब्दानां सम्बन्धकरणम-शक्यमेवास्ति। सर्गकाले यदा च न हि कश्चिदप्यर्थः केनाप्यर्थेन सम्बद्ध आसीत् तदा कथं सम्बन्धः क्रियते? सम्बन्धस्तु वाक्यप्रयोगेणैव कर्त्तुं शक्यते, न हि शब्दमनुच्चार्य सम्बन्धकरणं युज्यते। सर्गकाले च समेषामेव शब्दानां अर्थसम्बन्धाभावात् न हि वाक्यप्रयोगः सम्भवति। तथाहि "सास्नादिमती गौः पदेनोच्यते" एवं सर्गकाले सम्बन्धकरणमशक्यम् न ह्यप्रसिद्धे सास्नापदार्थे तादृशवाक्यस्य प्रयोगः सम्भवति।[१००] यद्यपि तदानीं वक्तुः प्रसिद्धसम्बन्धत्वात् सम्बन्धकरणं वाक्योच्चारेण सम्भवति तथाऽपि तदानीं श्रोतारोऽप्रसिद्धसमस्तपदार्थाः न हि वाक्येन सम्बन्धं प्रतिपत्तुमर्हन्ति। अत्र यदि नैयायिकः पृच्छति यल्लोके बाला अप्रसिद्धसमस्तपदार्थाः वृद्धेभ्यः कथं सम्बन्धं प्रतिपद्यन्ते? यथा लोकेऽप्रसिद्धसमस्तपदार्थाः बालाः वृद्धेभ्यः सम्बन्धं प्रतिपत्तुमर्हन्ति तथैव सर्गकालेऽपि श्रोतारो जीवात्मनोऽप्रसिद्ध-समस्तपदार्था अपि परमेश्वरकृतं सम्बन्धं प्रतिपत्तुमर्हन्ति को दोष एवं स्वीकरणे? तत्र मीमांसकः प्रतिवदति यत् लोक इदानीं बालानां सम्बन्धप्रतिपत्तयेऽस्ति समुचित उपायः, यमाश्रित्य बाला ह्यप्रसिद्धसमस्तपदार्था अपि सम्बन्धं प्रतिपद्यन्ते, स उपायोऽस्ति वृद्धव्यवहारः। यदा हि वृद्धाः प्रसिद्धसम्बन्धाः स्वकार्यार्थेन व्यवहरन्ति तदा समीपस्थोऽपि सम्बन्धं प्रतिपद्यते। यथा "गामानय" इति प्रयुक्ते प्रयोज्यवृद्धः सास्नादिमन्तमानयति तं दृष्ट्वा च बालोऽप्रसिद्धसमस्तपदार्थोऽपि सम्बन्धं प्रतिपद्यते यत् गोपदस्य सास्नादिमान् रूपोऽर्थः। सर्गकाले च परमेश्वरमन्तरेण प्रयोज्यवृद्धस्य प्रसिद्धसम्बन्धस्य कस्यचिदप्यभावात् न ह्यप्रसिद्धसमस्तपदार्थाः श्रोतारः शब्दार्थयोः सम्बन्धं प्रतिपत्तुमर्हन्ति।[१०१] तस्मादपौरुषेयः शब्दार्थसम्बन्धः स्वीकरणीयः। अतो नहि वेदानां शब्दार्थसम्बन्धकरणद्वाराऽपि पौरुषेयत्वं शङ्कितुं शक्यते।

### (३) ग्रन्थस्य पुरुषकृतत्वेनापि न वेदानां पौरुषेयत्वम्

उपरितनेन विवेचनेन शब्दस्य शब्दार्थसम्बन्धस्य च नित्यत्वे सिद्धेऽपि न हि वाक्यात्मकानां वेदानां पौरुषेयत्वं खण्डितं भवति। नैयायिकाश्च वाक्यात्मकानां वेदानां पौरुषेयत्वं वाक्यत्वेन हेतुना साधयन्ति। तथा ह्यनुमानप्रयोगः "वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् महाभारतादिवत्" वाक्यत्वं यत्र यत्र दृश्यते तत्र तत्र च पौरुषेयत्वं दृश्यते। एवं वाक्यत्वेन हेतुना वेदवाक्यानां पौरुषेयत्वं सिद्धं भवतीति

मीमांसकैश्चात्र प्रतिविधीयते नैवमनुमातुं शक्यते वेदानां पौरुषेयत्वम्। कुत इति चेत्? यत्र हि लोके पौरुषेयत्वं दृश्यते वाक्यात्मकेषु भारतादिषु, तत्र सर्वत्र कर्तुः स्मरणं दृश्यते वेदेषु तावन्नहि पुरुषकृतत्वं साक्षाद्भारतादिवत् स्मर्यते,[१०१] येन तमाश्रित्य पैरुषेयत्वं भवान् कल्पयेत्। अतः केवलं पदसङ्घातात्मकत्वरूपं वाक्यत्वं न हि वेदानां पौरुषेयत्वमनुमातुमलम्। सप्रतिसाधनश्चायं हेतुः तथाहि प्रयोक्तुं शक्यते "विवादाध्यासितं वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् अधुनाऽध्ययनवत्"[१०२] यद्यपि भारतादिष्वपि सम्भवत्येवमनुमातुं किन्तु भारतादिषु कर्तृस्मरणेनेदमनुमानं बाध्यते। नहि वेदेऽप्येवं कर्त्तुः स्मरणं भवति, येऽपि पौरुषेयत्वं वेदानामिच्छन्ति न तेऽपि परम्परया कर्तृविशेषस्य स्मरणं तत्र वक्तुं शक्नुवन्ति। यच्च तेषां वेदानां कर्तुः स्मरणं तदपि न परम्परया किन्तु न्यायाभासमूलकमेव तत् स्मरणमस्ति।[१०३] अतोऽपौरुषेयाः वेदाः सन्तिः। काठकादिसमाख्या तु प्रवचननिमित्ता-ऽध्ययनसम्प्रदायप्रवर्तकत्वेनोपपद्यते।[१०४] अथवा कठत्वं ब्राह्मणावान्तरजातिः तज्जातीयैः प्रोच्यमानेयं शाखा तन्निमित्तया नित्ययैव समाख्ययाऽभिधीयते।[१०५] आपदेववेदान्तदेशिकाद्यभिनवमीमांसकास्तु वेदान्तदर्शनानुसारिणीं सरणिमाश्रित्य स्वोच्चारणसजातीयोच्चारणनिरपेक्षोच्चारणविषयत्वं पौरुषेयत्वमस्ति, वेदानां तु प्रति कल्पं परमेश्वर एवोपदेशं करोति। संसारस्यानादित्वादीश्वरस्य च सर्वज्ञतया गतकल्पी-यस्य वेदस्यास्मिन् कल्पे स्मरणद्वारोपदेशः घटते इति स्वीकुर्वन्ति। एवं न हि वाक्यत्वेन वेदानां पौरुषेयत्वं शक्यमनुमातुम्।

अत्रेयमशङ्का सञ्जायते यद्वेदानामपौरुषेयत्वं यदीष्यते तदा प्रामाण्यं कथं स्याद्वेदानाम्? यतो हि प्रामाण्यं वक्तृगुणाधीनं भवति, वेदानां वक्तुः पुरुषस्याभावात् कथं प्रामाण्यं भवेत्? तत्र च समाधीयते मीमांसकैः-न तावत् प्रामाण्यं वक्तृगुणाधीनम्, किन्तु वक्तृदोषाधीनमप्रामाण्यम्। दोषाभावाच्च प्रामाण्यं भवति यदि प्रामाण्यावधारणे गुणानां कारणता स्यात्तदा ज्ञायमानतयैव प्रामाण्यावधारणे गुणानां कारणता स्यात्। एवं ज्ञायमानतया प्रामाण्यावधारणे गुणानां कारणत्वेऽनवस्थाऽऽपतति। दोषाभावस्य प्रामाण्यावधारणे सत्तामात्रेणैवोपकारित्वं न तु ज्ञायमानतयाऽतो नानवस्थाऽऽपद्यते। दोषेषु च निरादृतेष्वौत्सर्गिकमेव प्रामाण्यं भवति। वेदे तु कर्तुरभावादेव दोषाभावेन प्रामाण्यं भवति।

## रघुनाथशिरोमणिरीत्यापि न न्यायाभिमतेश्वरसिद्धिः

रघुनाथः सहस्रतन्तुकस्य पटस्य एकस्य तन्तोः नाशे सति एकोनसहस्रतन्तुकः खण्डपटोऽनुभूयते। सोऽयं खण्डपटो न कुविन्दकृतः, कुविन्देन तु सहस्रतन्तुकः

पटो निर्मितः। तर्हि कोऽस्य खण्डपटस्य कर्तेति? दृष्टस्य कर्तुरभावात्परमेश्वरस्य तत्पटकर्तृत्वमितीश्वरसिद्धिं प्रतिपादयति। मीमांसकास्तावन्नानयाऽपि रीत्येश्वरमङ्गीकुर्वन्ति। ते कथयन्ति न हि महापटखण्डपटयोः कश्चिद्भेदोऽतः खण्डपटस्यापि कुविन्द एव कर्ता। एकतन्तुनाशेन नहि पटो नष्टः किन्तु पूर्वपरिमाणमेव नष्टं, परिमाणान्तरं चोत्पन्नम्। यदि पटो नष्टः स्यात् तर्हि "पटो नष्ट" इति प्रतीतिः स्यात् नैवं भवति।[१०७] अतो नैवमपीश्वरसिद्धिः सम्भवति।

**निष्कर्षः**

मीमांसकास्तावन्नहि न्यायाभिमतमीश्वरमङ्गीकुर्वन्ति। प्राचीनाः मीमांसकाः यद्यपीश्वरविषये ताटस्थ्यमवलम्बन्ते जैमिनिप्रभृतयः। किन्तु शबर, कुमारिल, पार्थसारथि, शालिकनाथप्रभृतयो मीमांसकाः ईश्वरस्यास्वीकारपक्ष एव मीमांसापक्ष इति द्रष्ढन्ति। यद्यपि केषुचित् स्थलेषु तादृशः सङ्केत उपलभ्यते येनैतेषामपीश्वराङ्गी-कर्तृत्वं सम्भाव्यते। भवनाथ, नन्दीश्वरापदेववेदान्तदेशिकादयस्तु परमेश्वरं निराकुर्वन्तोऽपि "आनुमानिकत्वमेवेश्वरस्य निरस्यतेऽस्माभिर्नत्वीश्वरः" इति वदन्ति। न्यायदर्शनानुसार-मीश्वरस्य क्षित्यादिकर्तृत्वं, अदृष्टाधिष्ठायकत्वं, वेदप्रणेतृत्वादिकं यत् स्वीक्रियते तत् सर्वमस्मिन् दर्शने खण्ड्यते। सर्वज्ञत्वमीश्वरस्य परवर्तिनः आपदेवादयः स्वीकुर्वन्ति किन्तु कुमारिलः सर्वज्ञस्यास्तित्वं स्पष्टतः खण्डयति।[१०८] एवं मन्यामहे यन्मीमांसादर्शने न्यायाभिमतेश्वरस्य नास्ति स्वीकारः न वा क्षित्यादिकर्तृत्वेन न वा सर्वज्ञत्वादिरूपेण। यच्चापदेवादयः स्वीकुर्वन्ति सर्वज्ञत्वादिकम् तद्दर्शनान्तरप्रभावेण।

## पादटिप्पणी

१. भा० द० की रूप०, पृ० २९९

२. वयं तावत् प्रमेयं तु द्रव्यजातिगुणक्रियाः।
अभावश्चेति पञ्चैतान् पदार्थानाद्रियामहे।। मा० मे०, पृ० १४८

३. व्योमकालदिशामादौ प्रत्यक्षत्वं समर्थ्यते।। मा० मे०, पृ० १०७

४. सुखाद्यापरोक्ष्यसाधनेन्द्रियत्वेन कल्प्यमन्तरिन्द्रियं विभुपरिमाणमस्पन्दं च मनः।। मा० मे०, पृ० २१४

५. श्रोत्रमात्रेन्द्रियग्राह्यः शब्दः शब्दत्वजातिमान्।
द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः।। तदेव, पृ० २१८

६. ध्वनिर्वायुगुणः शब्दाभिव्यञ्जकः। मा० मे०, पृ० २५५

७. प्राकट्यं विषयत्वव्यवस्थापकः सर्वद्रव्यवर्ती सामान्यगुणः। स च संयुक्तादात्म्यसम्बन्धेन च प्रत्यक्षगम्यः।। तदेव

८. शक्तित्वसामान्यवतीं द्रव्यकर्मगुणाश्रयाम्।
श्रुत्यर्थापत्तिविज्ञेयां शक्तिमाहुः कुमारिलाः।। तदेव, पृ० २५८
९. तन्त्ररहस्यम्, पृ० २०-२४
१०. भा० द० (ब० उ०), पृ० ३९५
११. मीमांसादर्शन (भूमिका), पृ० १९-२१
१२. श्लो० वा० मङ्गलाचरणम्
१३. सतन्त्रवार्तिकशाबरभाष्यसमेतम् मी० द० ३/१/१३, पृ० ७०
१४. पृ० २१, भाट्टार्कः
१५. पृ० ४५ मी० शा० कु०
१६. यथा महाभौतिकदेहेष्वात्माधिष्ठानाच्चैतन्याख्यं ज्ञानमस्ति तथर्ग्वेदादयोपि देहत्वेन श्रुत्योक्तत्वाद् देहानां चात्मभोग्यत्वव्याप्तेर्ज्ञानं विना भोगायोगाच्चैतन्यारूपज्ञानान्विता इत्यर्थः।। पृ० १०११ न्यायसुधा
१७. तस्माद् व्याख्याकृतमेव विवक्षिताविवक्षितत्वमुपन्यस्य विचारकरणाद्वेदेऽप्यविरोधः।
ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः।
तेषां वाऽयमभिप्रायः स्याद्विवक्षाविवक्षयोः।।
त० वा०, पृ० ६९
१८. तदेव
१९. पार्थिवावयवप्राणाः शोषतोयाधनुग्रहात्।
जरायुजादयो देहाः दृष्टा भुवि चतुर्विधाः।।
भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः।
श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः।।
अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः।।
भ्रमन्ति लघुभिः सूक्ष्मैर्देहै भूम्यादनुग्रहात्।।
स्वर्लोके तैजसप्रायाः देहाः शुद्धप्रभान्विताः।
आप्यायन्ते विकीर्णेन भानवीयेन तेजसा।। तदेव
२०. एवञ्चेश्वरे परोक्तमेवानुमानं निरस्तम्। नेश्वरोऽपि निरस्तः। नयविवेकः, पृ० १९९ एवं चानुमानिकत्वमेवेश्वरस्य निराकृतम्। नेश्वरोऽपि निराकृतः। अत एव न प्रभाकर-गुरुभिरीश्वरनिरासः कृतः तत्समर्थनं च वेदान्तमीमांसायां क्रियत इत्यभिप्रेतम्। प्र० वि०, पृ० ८२-८३
२१. न० वि०, पृ० १८७
२२. नैव हि सृष्टिप्रलयावनुमितिसिद्धस्तु नेश्वरोऽप्यस्ति।
वेदे स्वतः प्रमाणे तत्सिद्धस्त्वीश्वरोऽत्र मत एव।। स० म० सं०, पृ० २७
२३. "यः कल्पः स कल्पपूर्वः" इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वोपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वकल्पनानुपपत्तेश्च। मी० न्या० प्र० प्रभासहितः, पृ० ७-८

२४. सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः। मी० न्या० प्र० अर्थदर्शिनीसहितः, पृ० २८०

२५. सोऽयं धर्मो यदुद्दिश्य विहितस्तदुददेशेन क्रियमाणस्तद्धेतुः। ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः। न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः "यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण" मिति गीतास्मृतेरेव प्रमाणत्वात्। अ० सं०, पृ० १९५

२६. अतः श्रुत्यैव निर्गुण उपास्यतया सिध्यति भगवान्। भाट्टार्कः, पृ० २१

२७. वैदिकेश्वरः परमकारुणिकः पुनरस्माकमनुगुण एव। मा० मे०, पृ० १७१

२८. यः यथा पुरुषान्तरोच्चरितम्, अहमपि तथैवोच्चारयामीत्यभिसन्धिमन्तरेण स्वातन्त्र्येण स्वेष्टक्रमेण पदानि वाक्यतया निबध्नाति, स हि वाक्येषु कर्तेत्युच्यते। सेश्वरमीमांसा, पृ० १२३

२९. ईश्वरेणापि पूर्वकल्पस्थितानुपूर्वीस्मरणपूर्वमेवोच्चारणादिति हि अपौरुषेयत्वमुच्यते।। मी० पा० प०, पृ० ३९१

३०. तन्त्रन्यायादमन्त्रेष्वपि विविधभिदां विश्वकर्ता विधित्सेत्।
आचार्यत्वं च वेदेष्वगणि भगवतः कर्तृता चेतरेषु।। मी० पा० श्लो० ८२, पृ० ३९०

३१. न ह्यनुल्लेखमात्रादनङ्गीकारनिश्चयो युक्तः। अप्रतिषिद्धं परमतमनुमतं भवतीति तन्त्रयुक्तेस्तन्त्रान्तरसिद्धयोस्तयोराचार्यजैमिनेरप्यभ्युपगमस्यावधारणीयत्वात्। मी० न्या० प्र० अर्थदर्शिनी, पृ० २८७

३२. अतएव च पार्थसारथिमिश्रेण शास्त्रदीपिकाप्रथमाध्यायप्रथमपादे वैशेषिकमतं तदङ्गीकृत पदार्थेषु मीमांसकसम्मतिञ्चाभिदधता वैशेषिकाभिमतौ मोक्षेश्वरावपि मीमांसकसम्मताविति प्रतिपादितम्। तदेव

३३. सर्गादौ च क्रिया नास्ति तादृक्कालो हि नेष्यते। श्लो०वा० सम्बन्धाक्षेपपरिहारः, पृ० ४६१

३४. प्रलयेऽपि प्रमाणं नः सर्वोच्छेदात्मके नहि।। श्लो० वा०, पृ० ४६६

३५. प्रवृत्तिः कथमाद्या च जगतः सम्प्रतीयते।
शरीरादेर्विना चास्य कथमिच्छाऽपि सर्जने।। श्लो० वा० सम्बन्धाक्षेपरिहारः, पृ० ४६२

३६. शरीराद्यथ तस्य स्यात् तस्योत्पत्तिर्न तत्कृता।
तद्वदन्यप्रसङ्गोऽपि नित्यं यदि तदिष्यते।।
पृथिव्यादावनुत्पन्ने किम्मयं तत्पुनर्भवेत्।। तदेव

३७. उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत्।। तदेव, पृ० ४६८

३८. सन्निवेशविशिष्टानामुत्पत्तिं यो गृहादिवत्।
साधयेच्चेतनाधिष्ठां देहानां तस्य चोत्तरम्।
कस्यचिद्धेतुमात्रत्वं यद्यधिष्ठातृतयेष्यते।
कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम्।। तदेव, पृ० ४६७

३९. इच्छापूर्वकपक्षेऽपि तत्पूर्वत्वेन कर्मणाम्।
इच्छानन्तरसिद्धिस्तु दृष्टान्तेऽपि न विद्यते।। तदेव, पृ० ४६८

४०. अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत्। तदेव, पृ० ४६८

४१. न चेश्वरशरीरमुत्पत्तिमदिति नानैकान्तिकत्वमिति चेन्न, तस्यापि भवदुक्तेनैव सन्निवेशविशिष्टत्वेन भूधरादिवदुत्पत्तिसिद्धेः। तदेव (न्यायरत्नाकरः)

४२. अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद् भवेत्। तदेव।

४३. न्यायरत्नाकरे, तत्रैव

४४. कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते।
नेश्वराधिष्ठितत्वं स्यादस्ति चेत् साध्यहीनता।। तदेव, पृ० ४६९

४५. शक्यते हि वक्तुम् देहादिकं नेश्वरकर्तृकम् चेतनोपादानत्वात् घटादिवदिति। अथ घटस्याप्यस्त्येवेश्वरकर्तृत्वम्, एवं सति तद्वदेव देहादीनामप्यनेकचेतनाधिष्ठाना-नुमानान्नेश्वरैक्यं सिद्ध्येदिति। न्यायरत्नाकरे तदेव, पृ० ४६९

४६. अचेतनः कथं भावस्तदिच्छामनुरुध्यते। तदेव।

४७. क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता।
बहुव्यापारतायां च क्लेशो बहुतरो भवेत्।। तदेव, पृ० ४६३

४८. यदि चानुकम्पानिमित्ता सिसृक्षा, सञ्जिहीर्षा तर्हि किंनिमित्ता स्यात्? साऽप्यनुकम्पाधीनेतिः चेन्न, विरुद्धयोः सिसृक्षासञ्जिहीर्षयोरेकहेतुकत्वापत्तेः। न्यायरत्नाकरः, तदेव, पृ० १६३

४९. अभावाच्चानुकम्प्यानां नानुकम्पास्य जायते।
सृजेच्च शुभनेवैकमनुकम्पाप्रयोजितः।। तदेव, पृ० ४६३

५०. एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत्।। तदेव।

५१. न च कर्मवतां युक्ता स्थितिस्तद्भोगवर्जिता। तदेव, पृ० ४६६

५२. कर्मान्तरनिरुद्धं हि फलं न स्यात्क्रियान्तरात्।
सर्वेषां तु फलापेतं न स्थानमुपपद्यते।
न चाप्यनुपभोगोऽसौ कस्यचित् कर्मणः फलम्।। तदेव।

५३. भवतु सावयवं स.मवयवसंयोगारब्धसत्ताकमवयवसंयोगापाये च विनश्वरमिति तथाप्येकदैव सकलजनस्य समुत्पादो विजयश्चेति नास्ति नः प्रमाणम्। प्रत्युत यथादर्शनमेतावद-वसातुमुचितं क्रमेण चोदयः क्रमेण च विलय इति। प्र० पं०, पृ० ३०७

५४. किं च यथाद्यतना जना मातापितृसंयोगनिमित्तात्मलाभास्तथा पूर्वेऽपि जनाः जनत्वादिति शक्यमेवानुमातुम्।। तदेव।

५५. न हि पाण्डिममात्रेण बाह्यादपि वह्नेरनुमानं किन्तु यादृशमेव पाण्डुरद्रव्यं नियमेन वह्निनियतं प्रतिसम्पन्नं तादृशमेव तस्यानुमापकमुचितम्। तदेव

५६. "तत्तद्घटत्वेन तत्तद्दण्डत्वेन विशिष्य कार्यकारणभावसत्त्वेऽपि सामान्यतो घटार्थिनो

दण्डमात्रोपादित्सादर्शनात् घटत्वदण्डत्वादिसामान्यधर्मावच्छेदेनाप्यपरः कल्प्यते। इह तु कार्यमात्रार्थिनः कर्तृमात्रोपादित्साभावान्न तथा।। भाट्टार्कः, पृ० १९

५७. सर्वत्र यो हेतुर्यादृग्विशेषणविशिष्टेन साध्येन दृष्टान्तधर्मिषु नियतः स तादृग्विशेषण-विशिष्टस्य साध्यस्य धर्मिणि प्रमाणान्तरविरोधात् साधनासम्भवेन विपरीतं विशेषं नियमबलात् स्वयमेव बाधमानो निर्विशेषस्य च साध्यस्यासम्भवात् साध्यमेव न साधयति। शा० दी०, पृ० १८९

५८. अशरीरित्वबोधे च कर्तृमत्तापि बाध्यते। मा० मे०, पृ० ७५

५९. शक्यते हि प्रयोक्तुम्-क्षित्यादिकं नाऽशरीरिचेतनकर्तृकं न नित्यप्रयत्ननित्येच्छा-नित्यज्ञानकर्तृकं कार्यत्वात् घटवदिति। शा० दी०, पृ० ३२९

६०. ईश्वरकर्तृकत्वाभावश्च सकर्तृकत्वमुखेन ईश्वरं साधयतां तेषां विरुद्ध एवेति विरुद्धाव्यभि-चारित्वं कार्यत्वस्य। मा० मे०, पृ० ८०

६१. शा० दी०, पृ० ३२९

६२. मा० मे०, पृ० १६८

६३. सर्वोत्पत्तिमतामदृष्टमुपकरणम्, न च तज्ज्ञः कुलालादिरपीति व्याप्त्यसिद्धिः दृष्टान्तश्च साध्यविकलः, बालोन्मत्तादिश्च प्रयोजनाद्यज्ञः कर्तेत्युक्तदोषद्वयम्। न० वि०, पृ० १९२

६४. कर्तृत्वस्य शरीरव्याप्यत्वाच्च, एवं व्यापारोऽपि सिद्ध्येत् कर्तृत्वस्य तदाश्रयत्वात्, अत एव विप्रक्षत्रियविट्शूद्राणां कर्मविधिः।। भाट्टार्कः, पृ० १८

६५. विप्रादिभिश्चेतनलक्षणेति चेत् स्यात् सा यदि चेतनमात्रे क्वचिदपि कर्तृव्यवहारः स्यात् न तु सोऽस्ति, किन्तु चेतनोपहितदेहे। तदेव

६६. ईश्वरोऽपि प्रयतत इति चेत्? न, अशरीरस्य प्रयत्नासम्भवात्। सर्वगता अपि ह्यात्मानः शरीरप्रदेश एव प्रयत्नमारभन्ते न बहिः, अतः शरीरसापेक्षः प्रयत्नः। शा० दी०, पृ० ३२८

६७. प्रलयकाले च सर्वकार्याणां प्रलयादीश्वरशरीरमपि प्रलीनमिति कथमशरीरः प्रयतेत? शा० दी०, पृ० ३२९

६८. अथेश्वरशरीरं नित्यमङ्गीकृत्य प्रलयेऽपि सशरीरमेवेश्वरमभ्युपगच्छेत्? ततः सावयवत्व-मीश्वरशरीरेऽनैकान्तिकं न क्षित्यादेः कार्यत्वं साधयेत्। तदेव।

६९. यथाऽचेतनत्वाच्चेतनाधिष्ठितत्वमनुमीयते तथा प्रयोजनाभावादप्यनधिष्ठानमिति ज्ञायते। कतरदत्रानुमानं बलीय इति न विद्मः। तेन यत्रैव प्रयोजनं तदेव चेतनाधिष्ठितमिति व्याप्तिरभ्युपगमनीया तथा दर्शनात्। प्र० पं०, पृ० ३०८

७०. सर्वज्ञानेच्छायत्नानामनित्यत्वव्याप्तेः। शा० दी०, पृ० ३२९

७१. अथ ज्ञानेच्छादिनित्यम्, तत्तदभावोपधानात्तद्विषयं रतिप्रकाशवत्, तन्न, अन्योन्याश्रयात्। उपधानेऽधिष्ठानमधिष्ठाने चोपधानम्। न० वि०, पृ० १९६

७२. बुद्धितत्त्वस्य नित्यत्वाभावात्। नित्या सती बुद्धिरेव न स्यात्। बुद्धिमता चाधिष्ठानं दृष्टं न पुनरन्येन। प्र० पं०, पृ० ३०७

७३. किं चोपादानगोचरापरोक्षज्ञानाद्याश्रयत्वेनेश्वरे साध्यमानेऽनन्तपरमाण्वादिगोचराण्यनन्तान्येव ज्ञानानि स्युर्नैवम्। लाघवादेकत्वोक्तावपि न, तावद्गोचरमेव स्यान्न सर्वगोचरमिति सर्वज्ञत्वासिद्धिः। भाट्टार्कः, पृ० २०

७४. यद्यपीश्वरे प्रयत्नो नित्यः स्यात् तथापि तस्यैकत्वान्न विचित्रकार्योदयहेतुत्वं सम्भवतीति व्यर्थ एवासौ। शा० दी०, पृ० ३३०

७५. ---उभयोः परस्परविघातान्न सृष्टिः स्यान्न प्रलयः। तदेव

७६. वेदानामपीश्वरकर्तृकत्वं साधयतां तार्किकाणां वेदप्रामाण्यादीश्वरसिद्धिः, ईश्वरप्रामाण्याच्च वेदसिद्धिः इतीतरेतराश्रयत्वचक्रकयोः प्रसङ्गात्। मा० मे०, पृ० १६७

७७. नास्मन्मते कार्योत्पत्तौ त्रिविधकारणाकाङ्क्षा। मा० मे०, पृ० १६९

७८. यथा भवन्मते क्षित्यादिकर्तुः शरीरव्यापारेण विनैव कारणानां परस्परोपसर्पणं तथाऽस्मन्मतेऽपीति ब्रूमः। मा० मे०, पृ० १७०

७९. तत्तद्भोगाधिकृततत्तच्चेतनगततत्तददृष्टपरिपाकवशादिति चेत् तर्हि तेनैव कारणानां परस्परोपसर्पणादिसिद्धेः किमीश्वरपरिकल्पनव्यसनेनेति सिद्धस्तार्किकेश्वरनिरासः। मा० मे०, पृ० १७१

८०. यस्यैव तौ क्षेत्रज्ञस्य स एवाधिष्ठातास्तु। अथाज्ञस्य तस्याधिष्ठानं नोपपद्यते तर्ह्यन्यस्यापि कथमुपपद्यते। न हि तस्यापि परपुरुषवृत्तिधर्माधर्मज्ञानमुपपद्यते कारणाभावात्। प्र० पं०, पृ० ३०७

८१. न तावत्संयोगः गुणत्वेन धर्माधर्मसंयोगाभावात्। समवायोऽपि परपुरुषसमवायिनोर्धर्माधर्मयोरीश्वरं प्रत्यनुपपन्नः। प्र० प०, पृ० ३०७
तथाधिष्ठानानर्हमदृष्टम्, करादिसंयोगो हि वास्याद्यधिष्ठानम्, न चादृष्टे गुणे संयोगः। न च समवायोऽप्यन्यगुणे। न० वि०, पृ० १९७

८२. परपुरुषसमवेतावपि धर्माधर्मावधिष्ठातुं शक्नोति सम्बन्धात्। न हि साक्षात् संयोगसमवायावेव सम्बन्धौ संयुक्तसंयोगिसमवायस्यापि तद्भावात्, न्या० वा० ता० टी०, पृ० ९५७

८३. न चेयमधिष्ठानविधा दृष्टा। न० वि०, पृ० १९७

८४. ----गुणादिर्निर्गुणक्रियः। कारिकावली १४ कारिका

८५. तथा प्रवृत्त्यनर्हमदृष्टम्, क्रिया हि वास्यादिप्रवृत्तिः, न च गुणे क्रिया। न० वि०, पृ० १९७

८६. न चोत्पत्तिरेव प्रवृत्तिर्दृष्टा। तदेव, पृ० १९८

८७. तदेव, पृ० १९८-१९९

८८. श्रोत्रमात्रेन्द्रियग्राह्यः शब्दः शब्दत्वजातिमान्।
द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः।। मा० मे०, पृ० २१८

८९. अपौरुषेये सम्बन्धे शब्दः प्रामाण्यमृच्छति।
स च नित्यत्वसिद्धौ स्यादिति तत्प्रतिपाद्यते।। प्र०प०, पृ० ३५३
९०. अनित्यत्वे हि शब्दानां शशशृङ्गप्रहारवत्।
शब्दात्मकानां वेदानां नित्यता हास्यतां व्रजेत्।। मा०मे०, पृ० २२८
९१. मी० सू० १/१/१८
९२. मी० सू० १/१/१८ शाबरभाष्यम्
९३. मी० सू० १/१/१९, २० एवं शाबरभाष्यम्
९४. वायवीयाः संयोगविभागाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्याः। शाबरभाष्यम्
९५. न वायवोऽभिव्यञ्जकाः किन्तु वायुगुणभूताः ध्वन्याख्याः शब्दा वायुना सह ताल्वादिभिः प्रेरिताः श्रोत्रं संस्कुर्वन्तः शब्दस्य व्यञ्जका इति। न्यायरत्नाकरः, पृ० ५५७
९६. मी० सू० १/१/५
९७. तत्र शब्दार्थसम्बन्धं पौरुषेयं प्रचक्षते। जगदीश्वरनिर्माणं वदन्तो वेदवादिनः। प्र० पं०, पृ० ३०१
९८. श्लो०वा० न्यायरत्नाकरः, पृ० ४७९
९९. शब्दं तावदनुच्चार्य सम्बन्धकरणं कुतः।। श्लो० वा०, पृ० ५६३
१००. किं च सर्वशब्दानामर्थसम्बन्धाभावात् समयोऽपि न सम्भवति, नह्यप्रसिद्धे सास्नादि-शब्दार्थे "सास्नादिमती गौः" इति वाक्यवचनं सम्भवति। न्यायरत्नाकरः, पृ० ४७९
१०१. उच्यते। पुरुषकृतत्वं तावद्वेदानां साक्षाद्भारतादिवन्न स्मर्यते। प्र० पं०, पृ० २४६
१०२. श्लो०वा०, पृ० ६६८, शा० दी०, पृ० ४६९
१०३. यदपि तार्किकादीनां ईश्वरप्रणीतत्वादिस्मरणम् तदपि न वेदाध्येतृपरम्परास्मरणम्। अपितु अनुमानादिरूपन्यायाभासमूलमेव। मी० सू० १/३/१२ व्याख्या मी० कौ०, पृ० ८८
१०४. अध्ययनसम्प्रदायप्रवर्तकत्वेन समाख्योपपद्यते। जै० न्या० मा० वि०, पृ० २६
१०५. नित्यमेव निमित्तत्वं वा कठत्वं जातिरस्ति नः।। श्लो० वा०, पृ० ६७२
१०६. प्रामाण्यावधारणे हि ज्ञायमानतया गुणाः कारणमिति स्यादनवस्था, दोषाभावे तु सत्तामात्रोपकारिणस्ते, तन्निराकृतास्तु दोषा नौत्सर्गिकं प्रामाण्यमपवदन्तीति। न्यायरत्नाकरः, पृ० ५०
१०७. --- पूर्वपरिमाणमेव तु नष्टं, परिमाणान्तरं चोत्पन्नम्। न तु पटोऽपि, पटो नष्ट इत्यप्रतीतेः। पृ० १९ भाट्टार्कः
१०८. श्लो० वा० ५९-६७

## चतुर्थोऽध्यायः ( भाग घ )

# अद्वैतवेदान्तदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

अद्वैतवेदान्तस्य प्रमुखं लक्ष्यमस्ति अद्वैतस्य स्थापनम्। यथा चास्य दर्शनस्य नाम्नैव स्पष्टीभवति। दर्शनमिदं ब्रह्मैवैकं तत्त्वमस्ति नहि किञ्चित् तदतिरिक्तमिति व्यवस्थापयति। भेदानाञ्च त्रैविध्यमस्ति (१) सजातीयभेदः (२) विजातीयभेदः (३) स्वगतभेदः। सजातीयो भेदो नाम समानजातीयस्य भेदः यथा घटस्य घटान्तराद् भेदः। विजातीयो भेदः असमानजातीयस्य भेदः यथा घटस्य पटाद् भेदः। स्वगतभेदः स्वावयवानां परस्परं भेदः यथा शरीरेऽपि हस्तस्य पादेन भेदः। इदं ब्रह्म एतत्त्रिविधभेदरहितम्। तथाहि नास्ति ब्रह्मणः समानजातीयः कश्चिदन्योऽतः सजातीयभेदशून्यं ब्रह्म। नास्ति कश्चिदसमानजातीयो ब्रह्मणोऽतः विजातीयभेद शून्यं ब्रह्म। नास्ति च ब्रह्मणोऽवयवविभागोऽतः स्वगतभेदशून्यः। एवं ब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यतया दर्शनेऽस्मिन् अनेकेषां भेदानां परिहारो भवति तथाहि (१) जडचेतनयोर्भेदो नास्ति दर्शनेऽस्मिन्। (२) जडेश्वरयोरपि नास्ति भेदः (३) जीवेश्वरयोरपि भेदो नास्ति। (४) जीवजडयोरपि नास्ति भेदः (५) जीवानां परस्परमपि नास्ति भेदः। (६) जडानामपि परस्परं भेदो नास्ति। एवमस्मिन् दर्शने समेषामेतेषां भेदानां निराकरणं भवति। न्यायदर्शने त्वेतेषां समेषां भेदानां सत्ताऽङ्गीक्रियते। किन्त्वद्वैतवेदान्ते परमार्थतः ब्रह्मैकं तत्त्वमस्तीति समेऽप्येते भेदाः निराक्रियन्ते। अत्र दर्शने प्रमेयाणां द्वैविध्यं व्यावहारिकं प्रमेयम्, पारमार्थिकं प्रमेयं च। येषां विषयाणां व्यवहारकाले बाधो न भवति तेषां व्यावहारिकी प्रमेयता, येषां च कालत्रयेऽपि बाधो न भवति येषां पारमार्थिकी प्रमेयता। अत एव ज्ञानप्रामाण्यमपि द्विविधं व्यावहारिकप्रमेयावेदकं पारमार्थिकप्रमेयावेदकं च।[1] सत्ता त्रिविधा भवति प्रातिभासिकी व्यावहारिकी पारमार्थिकी च। प्रातिभासिकी सत्ता सोच्यते या प्रतीतिकाले सत्यतया प्रतिभासिता भवति किन्तु अनन्तरं बाध्यते। यथा रज्जुसर्पः शुक्तिरजतम्। रज्जौ यदा सर्पभ्रमो भवति तदा स सर्पः तावानेव वास्तविकः प्रतीयते यावान् वास्तविकः सर्पः, शुक्तौ यदा रजतं भासते, तदा रजतं तादृगेव वास्तविकं

प्रतीयते यादृक् वास्तविकं रजतम् त्ति। किन्त्वनन्तरं रज्जुज्ञाने जाते, शुक्तिज्ञाने जाते तज्ज्ञानमन्तर्हितं भवति। व्यावहारिकी सत्ताऽस्य जगतः समेषु व्यवहारविषयेषु पदार्थेषु, व्यवहारकाले जागतिकानां वस्तूनां सत्ता कदापि नैव बाध्यते किन्तु ब्रह्मात्मैक्यज्ञाने सञ्जातेऽनुभवोऽयं बाध्यते। व्यवहारकाल एव सत्यतया जगतो विकारात्मकानां पदार्थानां सत्ता व्यावहारिक्येवास्ति। "तत्त्वमसि" इत्यादिमहावाक्य-ज्ञानसम्पन्नमेव जनं जगदेतदसत्यं विभाति न हि सर्वोऽपि लोको जगदिदमसत्यं जानाति। अतः जगतोऽपि सत्यत्वमस्ति किन्तु नहि वास्तविकं सत्यत्वम्। वास्तविकी सत्ता पारमार्थिकी सत्तोच्यते ब्रह्मैकं तत्त्वमस्ति यस्य भूतकाले, वर्तमानकाले, भविष्यति काले वा नहि कस्मिंश्चिदपि काले बाधो भवति। अतः पारमार्थिकी सत्ता ब्रह्मण एव। व्यावहारिकी च जीवेश्वरमायाकालदिशां सत्ता। एवं तर्हि तत्त्वमीमांसा भवत्यद्वैतवेदान्तदर्शनस्य–

**ब्रह्मस्वरूपविचारः**

कस्यचिदपि पदार्थस्य द्विविधं लक्षणं सम्भवति स्वरूपलक्षणम् तटस्थलक्षणं च। स्वरूपलक्षणं पदार्थस्य तात्त्विकं स्वरूपमभिव्यनक्ति, तटस्थलक्षणं परिचायकमात्रं भवति "सच्चिदानन्दं ब्रह्म" तद्ब्रह्म सदस्ति त्रिकालाबाध्यमस्ति, चिदस्ति ज्ञानमस्ति, आनन्दमस्ति। एतदेव लक्षणं "सत्यं ज्ञानमनन्तं ब्रह्म" (तै०उप० २/१/२) "विज्ञानमानन्दं ब्रह्म" इत्यादिभिरुपनिषद्वाक्यैरुच्यते। तस्य तटस्थलक्षणमस्ति जगदुत्पत्तिस्थितिलयकारणत्वम्। लक्षणेऽस्मिन् आगन्तुकानां गुणानां समावेशोऽस्ति जगदुत्पत्त्यादेः कालावच्छिन्नत्वात्। अतो लक्षणमिदं तटस्थलक्षणम्।[२] अस्य ब्रह्मणः सत्ता स्वयंसिद्धा ब्रह्मण आत्मरूपत्वात्। आत्मास्तित्वे नास्ति प्रमाणापेक्षा यतो हि ज्ञातुरुपलब्धिं विना न हि विषयज्ञानं सम्भाव्यते प्रत्येकमनुभवप्रक्रियायां सर्वोऽप्यनुभवति स्वकीयां सत्ताम्। ब्रह्म च आत्माभिन्नं विद्यते। एतच्च संसारस्य मूलकारणम्। नानारूपैरभिव्यज्यमानमपि निराकारं निरवयवं निर्गुणञ्चैतदेकमेव विद्यते।

**जीवस्वरूपविचारः**

सच्चिदानन्दरूपस्य ब्रह्मणो व्यावहारिकं रूपमिदम्। अस्य जीवस्यापि वास्तविकं स्वरूपं सच्चिदानन्दात्मकमेवाद्वैतवेदान्ते ब्रह्मण एवैकस्य पारमार्थिकत्वात्। किन्तु अन्तःकरणावच्छिन्नं चैतन्यं जीवः इति कृत्वोपाधिभेदेन जीवभेदव्यवस्था भवति। अन्तःकरणरूपस्योपाधेः परिच्छिन्नतया जीवस्यापि परिच्छिन्नत्वम्। अन्तःकरणे प्रतिबिम्बितं चैतन्यमेव जीवपदेन व्यपदिश्यते अन्तःकरणस्योपाधितयोपाधिकृताः दोषाः प्रतिबिम्बे जीवे भवन्ति।[३] अयं जीवः शरीरेन्द्रियाद्यध्यक्षः कर्मफलानामुपभोक्ता

भवति।[४] अस्य जीवात्मनो मुख्या सहचरी विद्याऽस्ति। सैषाऽविद्या मायांऽशभूता यथा मायाया: कार्यमिदं सर्वं जगत् तथैव जीवानां स्थूलानि सूक्ष्माणि च शरीराणि जीवविशेषाणामविद्याया: कार्यभूतानि।

**ईश्वरस्वरूपविचार:**

मायावच्छिन्नं चैतन्यमीश्वर:। सच्चिदानन्दं ब्रह्मैवैकं पारमार्थिकं वस्तु विद्यते जीवत्वमीश्वरत्वञ्चोभयमपि उपाधिकल्पितमेवास्ति। पञ्चदश्यामुच्यते-

**सत्त्वं ज्ञानमनन्तं यद्ब्रह्म तद्वस्तु तस्य तत्।**
**ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम्।।"[५]**

तत्र प्रतिपाद्यते यद् या ब्रह्मण: शक्तिरस्ति सैव मायेति व्यपदेशं भजते तस्या: मायाया: उपाधित्वेन तत् संयोगाद् ब्रह्मैवेश्वरतां व्रजति। कोशोपाधिविवक्षायां तदेव ब्रह्म जीवतां याति यथा कश्चिदेक एव जन: देवदत्त: स्वपितरमपेक्ष्य पुत्र:, पितामहमपेक्ष्य पौत्रश्च भवति, स्वपुत्रमपेक्ष्य पिता, स्वपौत्रमपेक्ष्य पितामहोऽपि भवति। अत्र नास्ति व्यक्तिभेद: किन्तु तत्तदुपाधिविवक्षया पुत्रपौत्रादिव्यवहार: सञ्जायते। एवमेव मायाद्युपाधिभेदात् ब्रह्मैव जीवो भवति, ईश्वरो वा भवति। किन्तूपाधेरविवक्षायां ब्रह्मैव केवलं भवति नेश्वरो भवति न वा जीव:। यथा च पुत्रादेरविवक्षायां देवदत्त: नहि पिता भवति न वा पितामहो भवति।[६] एवमुपाधिवशादेव जीवेश्वरसंज्ञा विद्यते न हि पारमार्थिको भेदो जीवेश्वरयो:। व्यवहारे जीवेश्वरयोरुपाधिभेदेन बद्धमुक्तव्यपदेशो भवति। ईश्वरोपाधिभूता माया परमेश्वरस्य स्वाभाविकी शक्तिरस्ति यया चेश्वरो नानानामरूपमयं जगदुत्पादयति। यद्यपीश्वरादुद्भूतं जगदीश्वरे विद्यमानमस्ति न तु बहि: किन्त्वस्या: शक्ते प्रभावेणान्यत्वबुद्धि: सञ्जायते। जीवो यस्मिन् शरीरे बद्ध: अध्यासवशाद् आत्मानं तेन शरीरेणाभिन्नं मनुते तदतिरिक्तं जगद् भिन्नं मनुते अत एव च रागद्वेषादयोऽभिभवन्ति जीवम्। परमेश्वरस्तु समस्तं जगदात्माभिन्नं मनुते, एतच्च ज्ञानमध्यासवशान्न भवति। अतो रागद्वेषादय: परमेश्वरं नैवाभिभवन्ति। एष एव "सगुणं ब्रह्म" इत्यप्युच्यते।

**मायास्वरूपविचार:**

परमेश्वरस्य बीजशक्ति: मायाऽग्ने: दाहकताशक्तिरिव सर्वदैव ब्रह्मण: सहावस्थाना। सदसद्भ्यां विलक्षणाऽनिर्वचनीयाऽनादिर्गुणत्रययुक्ताऽविद्यारूपा परमेश्वरस्याव्यक्ता शक्तिरियम्। अस्या: अवगम: कार्येभ्यो भवति सेयं मायैव जगदिदमुत्पादयति।[७] अस्या: मायाया: द्वे शक्ती विद्येते आवरणशक्ति: विक्षेप

शक्तिश्च। मायाया आवरणशक्तिः वस्तुनो वास्तविकं स्वरूपमावृणोति विक्षेपशक्तिश्चापरं स्वरूपं विक्षिपति। यथा मायिकः मृत्तिकया सुवर्णं निर्मापयन् मृत्तिकायाः वास्तविकं स्वरूपं मायायाऽऽवृणोति सुवर्णस्य च स्वरूपं विक्षिपति। फलतश्च लोकः सुवर्णत्वेन मृत्तिकामभिजानाति। माययैव जागतिकं सर्वं प्रसूयते, जागतिकानि वस्तूनि सामान्यतः सदिति प्रतीयन्ते परन्तु वस्तुतो नहि सन्ति नवाऽसन्ति यदि सन्ति तर्हि बाधो न स्यात् यदा न सन्ति तर्हि शश शृङ्गादिवदुपलब्धिर्न स्यात्। अतो जगदपि मायावदनिर्वचनीयमेवास्ति। अस्याः मायायाः आवरणशक्तिरीश्वरायाकिञ्चित्करी। असावीश्वरो मायायाः पारदृश्वा जीवस्तु मायाया आवरणशक्त्या मोहितो भवति चैतन्यस्यैक्यं नैवाभिजानाति। एतदेवान्तरं जीवेश्वरयोः यद् ईश्वरो मायया प्रभावितो न भवति जीवस्तु प्रभावितो भवति।

**कालदिशोः स्वरूपविचारः**

न्यायवैशेषिकादिदर्शनेषु कालदिशोः सत्ता स्वातन्त्र्येण स्वीक्रियते। परन्त्वत्र न हि कालदिशोः स्वातन्त्र्येण सत्ता। ब्रह्मणो मायायाश्च परस्परं सम्बन्ध एव कालपदेनोच्यते।[८] ब्रह्मण एव परमार्थतः सत्यत्वेन कालस्यापि मायाब्रह्मसम्बन्धभूतस्य नहि परमार्थतः सत्यत्वं सम्भवति। शुक्तिरजतयोः सम्बन्धमिव कालस्यापि प्रातिभासिकमेवास्तित्वमस्ति। दिशोऽपि मायायाः प्रथमसृष्टित्वम्।[९]

**न्यायाभिमतेश्वरेऽद्वैतवेदान्तदृष्टिः**

प्रथमं तावदेतद्वक्तव्यम्–न्यायदर्शनं तर्कप्रधानमस्ति, न्यायदर्शनेऽनुमानप्रमाणस्य प्रमाणेषु प्राधान्यमस्ति, अत एव न्यायदर्शनस्य "आन्वीक्षिकी" संज्ञाऽपि। न्यायदर्शने वेदानां प्रामाण्यमीश्वरोच्चरितत्वादङ्गीक्रियते। ईश्वरस्य सत्ताऽनुमानेन प्रमाणेन स्वीक्रियते। ईश्वरसत्तायां अनुमानेन प्रमाणेन सिद्धायामनन्तरं वेदा अपि ईश्वरसत्तामनुग्राहयन्ति। वेदान्तदर्शनं वेदानां प्रामाण्यं सर्वेषु प्रमाणेषु प्रधानतयाऽङ्गीकरोति। अत्र सर्वेषां वेदान्तदर्शनानामद्वैत, विशिष्टाद्वैतवेदान्तादीनामैकमत्यमस्ति। तर्कस्य त्वप्रतिष्ठिततत्वमस्ति तथा च वाक्यपदीय उच्यते–

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।**
**अभियुक्तैरैरन्यैरन्यथैवोपपाद्यते॥**[१०]

एतच्च भामत्यां वाचस्पतिनोद्ध्रियते। अतस्तर्काणामप्रतिष्ठानं स्फुटमेव सिद्ध्यति। महाभारतीयभीष्मपर्वणः–

**अचिन्त्याः खलु ये भावा न तांस्तर्केषु योजयेत्।**
**अचिन्त्यरचनारूपं मनसापि जगत्खलु॥"**

इत्येष श्लोकः पञ्चदश्यां (६/१५०) उद्ध्रियते। एवं स्फुटीभवति यद्वेदान्तदर्शने तर्कस्य कीदृशं स्थानमस्ति, तर्केण न हि कस्यचिदर्थस्य निश्चयो भवति किन्तु प्रमाणान्तरेण सिद्धस्यार्थस्य सम्भाव्यता तर्केण प्रतिपाद्यते। अतोऽद्वैतवेदान्तदर्शने वेदेन प्रतिपादितस्य सिद्धस्येश्वरस्य सामान्यतोदृष्टेनानुमानेन निश्चयो भवति। तर्कस्यैतावदेव प्रयोजनमस्ति यच्छास्त्रप्रतिपन्न ईश्वरेऽर्थवादशङ्कायाः प्रतिबन्धद्वारा सम्भाव्यता तर्केणानुगृह्यते।[१२] सिद्धिस्त्वीश्वरस्य शास्त्रेणैव भवति अतोऽद्वैतिना न्यायाभिमतेश्वरपर्यालोचने प्रथमत ईश्वरस्यानुमानिकत्वं निरस्यते।

नैयायिकाः परमेश्वरस्यात्मकल्पत्वमङ्गीकुर्वन्ति, अतो नैयायिकमते परमेश्वर आत्मसजातीयः जीवात्मभिन्नः स्वीक्रियते। अद्वैतिनस्तु केवलं परब्रह्मणः सच्चिदानन्दस्यैव पारमार्थिकी सत्तां स्वीकुर्वन्ति। स च सजातीयविजातीयस्वगतभेदशून्यः, जीवात्माऽपि ब्रह्मैव। परमेश्वरजीवयोरभेद एवास्मिन् मते। न हि परमेश्वरो जीवात्मभिन्न आत्मसजातीयः किन्तु जीवाभिन्न एवेश्वरः।

नैयायिकाः परमेश्वरस्य जगत् प्रति निमित्तकारणतां मन्यन्तेऽद्वैतिनस्तावदस्येश्वरस्य निमित्तोपादानकारणत्वं प्रतिपादयन्ति यथोर्णनाभिः लूताकीटः कारणान्तरमनपेक्ष्य स्वयमेव स्वशरीराव्यतिरिक्तानेव तन्तून् बहिः प्रसारयति पुनश्च तान् स्वात्मभावमापादयति। अत्रोर्णनाभस्य निमित्तकारणताऽप्यस्ति, उपादानकारणतापि विद्यते यथा च पृथिव्यामोषधयः सम्भवन्ति, अत्रापि पृथिव्या एवोषधीन् प्रति निमित्तकारणता, उपादानकारणता चास्ति। यथा चेतनात् पुरुषात् केशलोमानि जडान्यपि सञ्जायन्तेऽत्रापि पुरुषस्य केशं प्रति लोमानि प्रति च निमित्तकारणता, उपादानकारणता च विद्यते तथैव परमेश्वरो ब्रह्मैव जगतो निमित्तकारणमुपादानकारणं चास्ति। ब्रह्मण एव जगत् प्रति निमित्तकारणताप्यस्ति उपादानकारणताप्यस्ति।[१३] नहि नैयायिकरीत्या परमाणूनां उपादानता परमेश्वरस्य च निमित्तकारणतेतिमतमत्र स्वीकर्तुं युक्तम्।

नैयायिकास्तावदचेतनानां परमाणूनामचेतनस्य चादृष्टस्याधिष्ठायकत्वमीश्वरेऽङ्गीकुर्वन्ति न ह्येतदपि शाङ्करवेदान्तिनः सहन्ते। परमाणूनामदृष्टस्य चास्तितामेव खण्डयन्ति। वेदानामपौरुषेयत्वान्नहि नैयायिकवत् वेदप्रणेतृत्वं परमेश्वरस्य सम्भवति। एतान् सर्वानेव बिन्दून् क्रमशः अग्रे वयं विस्तरेणालोचयामः।

**ईश्वरस्यानुमानिकतानिरासः**

ब्रह्मसूत्रे "जन्माद्यस्य यतः"[१४] इत्यनेन ब्रह्मणो लक्षणमुच्यते तत्र तावदयं प्रश्नो भवति यत् कुत एतदवगम्यते? उत्तरं दीयते ब्रह्मणः सत्त्वे जगत्कारणत्वे च प्रमाणभूतमस्ति शास्त्रम्। समन्वयाधिकरणे शाङ्करभाष्ये शङ्कराचार्यः वक्ति "तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथं? समन्वयात्"[१५] "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व। तद्ब्रह्मेति"[१६] "सदेव सोम्येदमग्र आसीत्। एकमेवाद्वितीयम्"[१७] इत्यादिभिरनेकैरुपनिषद्वाक्यैर्ब्रह्मणः सत्ता सिद्धा भवति। नैयायिकास्तावत् "क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवत्" इत्याद्यनुमानानुरोधेनेश्वरस्य सत्तां साधयन्ति। तत्रानुमानेनेश्वरे सिद्धे सति वेदान्तवाक्यानपि योजयन्ति। किन्त्वद्वैतिनो वदन्ति यत् श्रुतिसम्मतोऽर्थोऽनुमानबलतः साधयितुं नव शक्यते यतोहि श्रुतिसम्मतार्थो नहि कस्यचिदप्यनुमानस्य विषयो भवति। किन्तु शब्दशक्तेस्तात्पर्यानुसारेणैव परमार्थवस्तु वेदान्तवाक्यैर्निर्णेतुं शक्यम्।[१८] संक्षेपशारीरकेऽनुमानबलतः सिद्धे परमेश्वरे वेदान्तवाक्यमपि योज्यमिति न्यायसिद्धान्तविषये "साहसं तत्" इति कृत्वाऽद्वैतिनः प्रतिपादयन्ति।[१९] पञ्चपादिकाविवरणे क्षित्यादेः सकर्तृकत्वानुमानविषये प्रतिपाद्यते यन्नैतदनुमानमस्ति, कुत इति चेत्? यतो ह्यव्यभिचारिणी व्याप्तिरनुमानपदेन व्यपदिश्यते, व्याप्तावनुपपत्त्याभासोदाहरणमात्रपदर्शनं च युक्तिपदेन व्यपदिश्यते। तत्र यथा नैयायिकः कुलालदृष्टान्तानुरोधेन क्षित्यादेः सकर्तृकत्वं साधयन् सर्वज्ञेश्वरकारणत्वं क्षित्यादेः स्वीकरोति न तच्छक्यम् विपरीतोदाहरणसम्भवात् न हि व्याप्तिरियं किन्तु व्याप्त्याभास एव। अतः सति प्रमाणान्तरेऽनया युक्त्या सम्भावयितुं शक्यते यया रीत्या चाद्वैतिनः शास्त्रेण ब्रह्मणः जगज्जन्मादिकारणत्वे सिद्धे कुलालादिदृष्टान्तेन सम्भावयन्ति। अतो युक्तिरेवैषा, अज्ञानाच्च नैयायिकाः वैशेषिकाश्च अर्थनिश्चायकमनुमानमिति मन्यन्ते।[२०] यच्चानुमीयते नैयायिकैः "सर्वं कर्मफलजातं कर्मतत्फलतद्भोक्तृदेश-कालादिविशेषविज्ञानवता प्रदीयमानं कर्मफलत्वात् सेवादिकर्मफलवत्" इति। तदपि नानुमानतामर्हति युक्तिमात्रमेतदपि तथाहि जगतः सकर्तृकत्वानुमाने बहुकर्तृत्व-परिच्छिन्नज्ञानैश्वर्यादिमत्कर्तृत्वानुमानेषूदाहरणसम्भवात् युक्तिमात्रं जगतः सकर्तृकत्वा-नुमानम्।[२१] प्रासादादीनां तावद्बहुकर्तृकत्वं दृश्यते यदि जगतः सकर्तृकत्वं साध्यतेऽनुमानबलेन तदा प्रासादादीनां दृष्टान्तबलेन जगतो बहुकर्तृकत्वं सिद्धं स्यात् यदि लाघवादेककर्तृकत्वं जगतः साध्यते तदा लाघवादेकनिमित्तोपादानकत्वमपि सिद्धं भविष्यति[२२] तथा च न्यायसिद्धान्तक्षतिः। यच्च कर्मफलजातं पक्षीकृत्य नैयायिकैरनुमीयते तदनुमानमपि केवलं युक्तिमात्रमेव यतोहि लोके हि कर्मफलप्रदातारः

शरीरेन्द्रियादिमन्तो दृश्यन्ते बहवश्च दृश्यन्ते तथा ह्यनेनानुमानेन न ह्येकस्येश्वरस्य सिद्धिः किन्तु श्रुत्या प्रतिपन्ने सर्वकारणसर्वज्ञसर्वफलदातृसर्वेश्वराद्वितीये ब्रह्मणि उदाहरणमात्रेण सम्भावनाबुद्धिहेतुत्वात् युक्तिमात्रमेतत्।[२३] युक्तिर्हि केवलं सम्भावनाबुद्धिमात्रमुत्पादयति, अनुमानं पुनरर्थं निश्चाययति।[२४] उपदर्शितयोरनुमानत्वेन प्रस्तूयमानयोः न ह्यनुमानत्वं किन्तु युक्तिमात्रत्वमेव। अतो न ह्यनुमानेन परमेश्वरस्य परमेश्वरकर्तृत्वादेर्वा सिद्धिः सम्भवति किन्तु श्रुतिप्रमाणैरेव परमेश्वरस्य ब्रह्मणः सिद्धिर्भवति श्रुतयस्तावदनेकाः संश्रूयन्ते "यतो वा इमानि भूतानि जायन्ति"-इत्यादीनि परमेश्वरसाधकानि। यद्यपि जगतो नियतप्रवृत्तिरपीश्वरसाधिका तथाहि केनोपनिषदः वाक्यभाष्ये शङ्कराचार्यो ब्रवीति-"तत्सिद्धिः जगतो नियतप्रवृत्तेः"[२५] किन्तु तत्रैवेदमपि स्पष्टीकरोत्याचार्यः शङ्करो यच्छ्रुतिस्मृतिप्रसिद्धिभिरीश्वरे नित्यसर्वविज्ञाने सर्वात्मनि सर्वशक्तौ सिद्धेऽपि शास्त्रार्थनिश्चयार्थमिदं सामान्यतोदृष्टमनुमानं प्रस्तूयते। तथाहि यदिदं जगद् देवगन्धर्वयक्षरक्षःपिशाचादिलक्षणं द्युवियत् पृथिव्यादित्यचन्द्रबृहस्पति-ग्रहनक्षत्रविचित्रं विविधप्राण्युपभोगयोग्यस्थानसाधनसम्बन्धि विद्यते तदत्यन्तकुशलैरपि शिल्पिभिर्दुर्निर्माणं देशकालनिमित्तानुरूपनियतप्रवृत्तिक्रममस्ति। एतच्च भोक्तृकर्म-विभागप्रयत्नपूर्वकं भवितुमर्हति कार्यत्वे सति विचित्रत्वात् गृहप्रासादरथशयनादिवत् विपक्षे त्वात्मवत्। बृहदारण्यकोपनिषद्भाष्यवार्तिके जगतो नियतप्रवृत्तिमत्त्वात्परमेश्वर-साधने युक्तिः प्रदर्श्यते तत्र च जगतो नियतप्रवृत्तिमत्त्वं प्रदर्श्यते यत् यथा राज्ञः प्रशासनेऽभिन्नमर्यादिकाः प्रजाः भवन्ति नहि प्रजाः मर्यादामतिक्रामन्ति तथैव पृथिव्यादयोऽपि ब्रह्मणोऽक्षरस्य प्रशासने मर्यादां नातिक्रामन्ति। यथा च राजपूर्वा लोकस्य स्थितिर्दृश्यते तथैव विवादविषयीभूता जगत्स्थितिरपि यन्तृपूर्वाऽस्ति इति सम्भाव्यते व्यवस्थिततत्वात्। विवादविषयीभूता जगत्स्थितिरपि राजपूर्वा लोकस्थितिरिव व्यवस्थिता दृश्यते। यथा प्रासादस्थः प्रदीपः प्राण्युपकारार्थं भवति प्रदीपजकार्यज्ञानवता स्थाप्यते तथैव सूर्याचन्द्रमसावपि सर्वप्राण्युपकारित्वात् तज्जन्यकार्यज्ञानवत् पुरःसराविति सम्भाव्यते। सूर्याचन्द्रमसौ न हि मर्यादामतिगच्छतः, अतोऽवगम्यते यत् केनचिदन्त-र्यामिणा सूर्याचन्द्रमसौ विधृतौ। गुरुत्वात् स्फुटपतनप्राप्तावपि द्यावापृथिव्योरेषा व्यवस्थितिः सम्भवति। संयुक्तयोः द्यावापृथिव्योः न हि क्वचिद्वियोग ईक्ष्यते शास्तुः प्रशासनं विना नैषा व्यवस्था स्यात्। इयं व्यवस्था लोके द्यावापृथिव्योरवलोक्यते न हि कुत्रचिदप्यस्याः व्यवस्थायाः उल्लङ्घनं दृश्यते। एते स्वभावमविलङ्घ्य प्रशास्तृशासने तिष्ठतः। अत्र टीकाकृताऽऽनन्दगिरिणा "विमते प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात् हस्तन्यस्तपाषाणादिवत्" इत्येतदनुमानं वार्तिककृता विवक्षितमिति प्रतिपाद्यते। कालांशानां निमेषादिविभागानां या व्यवस्थितिः तदपीशस्य प्रशासनमेवास्ति।

महतां स्रोतसां प्रवृत्तिः नियतैव दृश्यते तथाहि समुद्रो नहि कदाचित्स्वकीयं सीमानमतिक्रामति नैतन्नियन्तारं विना सम्भवति।[२६] अनन्तरमन्या अपि युक्तयः प्रदीयन्ते दुःखार्जितधनत्यागो लोक ईक्ष्यते न ह्येतत् तत्कर्मफलदायिनीश्वरेऽसति सम्भवति,[२७] लोके दातुः प्रतिग्रहीतुश्च प्रत्यक्षमेव विलयः दृश्यते। तर्हि को नाम परमेश्वरेऽसति क्रियाणां फलं दद्यात्? फलदातुरभावे च स्वार्थभ्रंशो भूयात्, नैतच्च युक्तिमत् प्रतीयते यतो हि सम्यक् प्रमाणज्ञा अपि तान् दुःखार्जितधनत्यजः प्रशंसन्ति, अतः परमेश्वरमृते नैतत् सम्भवति। प्रमाणज्ञाः हि दानादिकर्मणः साक्षात् फलसङ्गतिं पश्यन्ति तच्च परमेश्वरे सत्येव सम्भवति। अत्र टीकाकृताऽऽनन्दगिरिणा "विमतं विशिष्टविज्ञानवद्दातृकं कर्मफलत्वात् सेवाफलवत्" इत्यनुमानं प्रदर्श्यते।[२८] यस्याज्ञानात् जगत्यस्मिन् दुःखबहुला तीव्रानर्थपरम्परा ज्ञानाच्च संसारात् मुक्तिः कथं प्रशास्ता परमेश्वरो नास्ति,[२९] प्रशास्तुः सत्येव सम्भवत्येतत्। ज्ञानाच्च मुक्तिर्भवति नहि कर्मभ्योऽत एष नियमः स्फुट एव। यदि नास्ति कश्चिदीश्वरो नियन्ता तर्हि सर्वेऽपि कार्पण्ययुक्ता एव स्युः किन्तु न हि सर्वे कृपणा एव दृश्यन्ते किन्त्वकृपणा अपि दृष्टिपथमायान्ति।[३०] अतोऽवगम्यते यदस्ति कश्चिन्नियन्ता परमेश्वरो ब्रह्मेति। एवं बहून्यनुमानानि प्रदीयन्ते परमेश्वरस्य ब्रह्मणः सत्त्वव्यवस्थापनाय किन्तु वस्तुतो न ह्येतेषामनुमानानां स्वयमेवेश्वरसाधकत्वम्, किन्तु श्रुतिसिद्धस्यैवेश्वरस्य सम्भाव्यतामेवैतान्यनुमानानि प्रतिपादयन्ति। वस्तुतो युक्तिमात्राण्येवैतानि नानुमानानि। अतो नानुमानिकता परमेश्वरस्य सम्भवति।

## ईश्वरस्य जीवभिन्नत्वं नास्ति

नैयायिकाः जीवेश्वरयोः पारमार्थिकं भेदमङ्गीकुर्वन्ति तन्मते परमेश्वरः जीवात्मसजातीयः जीवभिन्नो विद्यते। परमेश्वरस्य जीवभेदे च शतशो युक्तयः सम्भवन्ति परमेश्वरः सर्वज्ञः जीवश्चाल्पज्ञः। ईश्वरोऽनादिमुक्तः, जीवश्चानादिबद्धः। संसारदुःखापनयार्थं जीवस्य प्रवृत्तिर्दृश्यते जीवो हि "दुखं मे माभूत्" इति चिन्तयित्वा प्रवर्तते नहि परमेश्वरस्येतादृशी प्रवृत्तिः सम्भवति दुःखाभावात्। अतः स्फुट एव भेदोऽवगम्यते जीवेश्वरयोः। परमेश्वरस्य तु दुःखादिराहित्यं श्रुतिस्मृतिभ्यः स्पष्टमेव श्रूयते। श्रुतिभ्योऽपि जीवेश्वरयोः भेद एवावगम्यते तथा हि "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "तं विदित्वा न लिप्यते" "ब्रह्मविदाप्नोति परम्" "तमेव धीरो विज्ञाय" इत्यादिभिः श्रुतिभिः कर्मकर्तृनिर्देशः क्रियते तच्छब्देन परामृश्यते परमेश्वरो भेदे सत्येवैतच्छक्यम्। अपरञ्च बाधकमस्ति बन्धमोक्षव्यवस्थाऽनुपपन्ना स्यात् जीवेशयोरभेदे। मुमुक्षोश्च देवयानाख्या गतिः, अर्चिरादिमार्गविशेषः, ब्रह्म

देशो गन्तव्यमित्युपदेशोऽस्ति भेदेऽसति कस्य कुतो वा गतिः स्यात्? गत्यभावे च दक्षिणोत्तरमार्गविशेषानुपपत्तिः गन्तव्यदेशानुपपत्तिश्च आपतति। एतत् सर्वं परमेश्वरे जीवभिन्ने सति समञ्जसम्। कर्मज्ञानसाधनोपदेशा अपि परमेश्वरे जीवभिन्ने सत्येवोपपन्नाः भवन्ति यतो हि भिन्नश्चेदीश्वराज्जीवस्तर्हि तस्मै कर्मज्ञानयोरभ्युदयनिःश्रेयस-साधनयोरुपदेशो युज्यते, अभिन्ने परमेश्वराज्जीवे परमेश्वरस्याप्तकामत्वाज्जीवस्या-प्याप्तकामत्वं प्राप्तं भवति, आप्तकामे च सति जीवेऽभ्युदयनिःश्रेयससाधनयोः कर्मज्ञानयोरुपदेशो जीवाय व्यर्थ एवेश्वराय तदुपदेशवत्।[३१] अतः परस्परानपेक्षौ जीवेशौ स्वतः स्थितौ। तयोरेकात्मत्वं प्रकाशतमसोरिव नैव युज्यते किन्तु जीवेशौ परस्परं सुविलक्षणौ। जीवेशयोः परस्परं भिन्नत्वेऽभेदे प्रमाणभूतानां "ब्रह्मविद् ब्रह्मैव भवति" "अहं ब्रह्मास्मि" इत्यादीनां श्रुतीनां का गतिः? इत्यत्र समाधीयते नैयायिकैः यद्यथा धनेन सम्पन्ने सति पुरोहिते "पुरोहितोऽयं राजा संवृत्तः" इति प्रयोगो भवति लक्षणया। अनेन प्रयोगेण पुरोहितस्य राजत्वं नैव द्योत्यते किन्तु धनसम्पत्तिरेव तथैव "ब्रह्मविद् ब्रह्मैव भवति" इत्यादीनामपि श्रुतीनां ब्रह्मसादृश्यसम्पत्तौ जीवस्य तात्पर्यम्, नहि वस्तुतो जीवः ब्रह्मणा तादात्म्यमधिगच्छति। तानि वाक्यानि चार्थवादीभविष्यन्ति। जीवो मोक्षावस्थायां परमेश्वरसदृशो भवतीत्यत्रापि सन्त्यनेकाः श्रुतयः तथाहि "निरञ्जनः परमं साम्यमुपैति" इति श्रूयते।

अद्वैतवेदान्तिनो ब्रह्मण एवैकस्य तत्त्वस्य पारमार्थिकीं सत्तां काङ्क्षन्तो मतमिदं खण्डयन्ति। तत्र तावच्छ्रुतिविरोध एव विनिगमकः। ईश्वरो जीवभिन्नो नास्ति यतो हि मन्त्रब्राह्मणप्रमाणैरस्यैव ब्रह्मणः सर्वतः प्रवेशः श्रूयते।[३२] यदि जीवेश्वरयोर्भेदः स्यात्तदा ब्रह्मोपदेशो निरर्थकः स्यात्[३३] यतो हि जीवेशयोर्भेदे सति संसारी जीव एव ब्रह्मभावी ब्रह्मभिन्नः सन् विदित्वा अहं ब्रह्मास्मीति ब्रह्म भवेत्तर्हि "अहं" पदार्थस्य जीवतया संसार्यात्मविज्ञानादेव सर्वात्मभावस्य फलस्य सिद्धत्वात् परब्रह्मोपदेशोऽनर्थक एव स्यात्। विधिशेषत्वेन ब्रह्मोपदेशोऽर्थवान् भवतीत्युच्यमाने प्रश्नो भवति किं कर्मविधिशेषत्वेन उपास्यविधिशेषत्वेन वा तस्य ब्रह्मोपदेशस्य सार्थकता? तत्राद्यः कर्मविधिशेषत्वेन ब्रह्मोपदेशस्य सार्थकत्वस्वीकारो नैव युज्यते क्वचिदपि पुरुषार्थसाधने तस्याविनियोगात्, द्वितीयः कल्पोऽपि नैव सम्भवति यतो हि कीदृक् चायं कल्पः? संसारिण एव "अहं ब्रह्मास्मि" इति ब्रह्मसम्पादनार्थ उपदेश इति। अनिर्ज्ञाते च ब्रह्मस्वरूपे "अहं ब्रह्मास्मि" इति किं सम्पादयेत्? नहि किमपि, निर्ज्ञातलक्षणे हि ब्रह्मणि शक्या सम्पत् कर्तुम्। श्रुतिवाक्यैः "अयमात्मा ब्रह्म" "यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा" "तत् सत्यं स आत्मा" "ब्रह्मविदाप्नोति परम्" "तस्माद्वा एतस्मादात्मनः" इत्यादिभिः सहस्त्रशः श्रुतिवाक्यैः ब्रह्मात्मशब्दयोः

सामानाधिकरण्यादेकार्थवत्त्वमेवावगम्यते।[३४] "इदं सर्वं यदयमात्मा" इत्यादिना प्रकृतस्यैव द्रष्टव्यस्यात्मन एकत्वं प्रतिपाद्यते। किन्त्वेवं जीवेशयोः (जीवब्रह्मणोः) एकत्वे "ब्रह्मविद् ब्रह्मैव भवति" "अभयं हि वै ब्रह्म भवति" इत्यादिभिः या जीवस्य ब्रह्मत्वसम्पत्तिः श्रूयते सा नोपपद्यते कुतः? यतो ह्यन्यस्यैवान्यत्वे सम्पत् क्रियते नैकत्वे।[३५] अतः पूर्वोक्तानां श्रुतिवाक्यानां निरर्थकता विरोधो वाऽऽपतति। तत्र समाधीयते नैवमस्ति, पूर्वोक्ताभिः श्रुतिभिर्नहि ब्रह्मसम्पत्तिः द्योत्यते ब्रह्मसम्पत्तिः केवलं प्रत्ययमात्रमेव। पूर्वोक्तश्रुतिवाक्येषु ब्रह्मपदेन न हि ब्रह्मभाविपुरुषस्य कल्पना सङ्गता।[३६] जीवब्रह्मभेदे च श्रुतिविरोधः स्फुट एव नैयायिकानां गले पतिष्यति यतो हि सर्वशाखोपनिषत्सु ब्रह्मैकत्वविज्ञानमेव निश्चितोऽर्थः। यदि ब्रह्मणोऽन्यः संसारी आत्मानमेवावेत् इति मतं तदेष्टस्यार्थस्य बाधनं स्यात्।[३७] अपि चात्मानमेवावेदिति संसारिण एव वेद्यत्वोपपत्तेः ब्रह्मविद्येति व्यपदेशो न स्यात्।[३८] ब्रह्मविद्येति व्यपदेशः ब्रह्मणो वेद्यत्व एव सम्भवति। अतः ब्रह्मात्मपदयोरेकार्थत्वे जीवब्रह्मणोश्चाभेदोऽवश्यं स्वीकार्यः। आत्मेति वेदितुरन्यदुच्यते नैतदपि सम्भवति यतो हि "अहं ब्रह्मास्मीति" प्रयोगो विद्यते। अन्यश्चेद्वेद्यः स्यात् ज्ञात्रा तर्हि न हि "अहमस्मि" इति प्रयोगः सम्भवति किन्तु अयमसाविति विशेष्येत "अयं ब्रह्मास्ति" "असौ ब्रह्मास्ति" इति वा प्रयुज्येत। अहमस्मीति विशेषणात् आत्मानमेवोवेदिति अवधारणाच्च निश्चीयते यदात्मैव ब्रह्म न तु तदितरत्।[३९] एवं सत्येव ब्रह्मविद्येति व्यपदेशोऽपि युक्तिसङ्गतो भवति। एवं जीवेशयोरभेदमेवाद्वैतिनः स्वीकुर्वन्ति।

**न केवलं जगतो निमित्तकारणमीश्वरः**

नैयायिकाः परमेश्वरः जगतो निमित्तकारणमिति मन्यन्तेऽद्वैतिनो हि निमित्त-कारणतामुपादानकारणताञ्च ब्रह्मणः जगत् प्रति स्वीकुर्वन्ति। प्रमाणञ्च तत्र श्रुतिरेव युक्तिश्च तत्सम्भाव्यताया अनुग्राहिका। न केवलं निमित्तकारणत्वमीश्वरस्य किन्त्वभिन्ननिमित्तोपादानकारणत्वम् श्रुतिसिद्धत्वात्।[४०] "जन्माद्यस्य यतः" इति सूत्रभाष्यव्याख्याने भामत्यां वाचस्पतिमिश्रः प्रतिपादयति यत् जन्मस्थितिलयैस्त्रिभिरस्य ब्रह्मण उपादानत्वं सूच्यते उत्पत्तिमात्रन्तु निमित्तमात्रसाधारणं नह्युपादानं सूचयेत्।[४१] यन्निमित्तकारणं भवति न हि तत् कार्यस्योत्पत्तिं प्रति, स्थितिं प्रति, लयं प्रति च कारणं भवति। यथा घटं प्रति निमित्तकारणीभूतो दण्डः घटस्योत्पत्तिं प्रत्येव कारणं भवति न तु घटस्य स्थितिं प्रत्यपि। किन्त्वीश्वरो जगत उत्पत्तिं प्रत्यपि कारणमस्ति, स्थितिं प्रत्यपि कारणमस्ति, लयं प्रत्यपि कारणमस्ति। अतो नेश्वरस्य केवलं निमित्तकारणत्वं जगत् प्रति सम्भवति। उक्तसूत्रेण श्रुतिवाक्यैश्चास्योत्पत्ति- स्थितिलयानां

कारणत्वं प्रतिपाद्यते। अयमीश्वर आत्मकार्यत्वात् उत्पत्तिस्थितिहानिषु त्रिविधेनाधिपत्येन जगत् पाति।[४२]

"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्"[४३] इति सूत्रस्य भाष्ये शङ्कराचार्यः प्रतिपादयति यत् प्रतिज्ञादृष्टान्तयोरनुपरोधात् ब्रह्म न केवलं निमित्तमात्रमपितूपादान-कारणमपि। प्रतिज्ञा तावदस्ति "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छा०उ०६/१/२) अनया प्रतिज्ञया चैकेन विज्ञातेनान्यद-विज्ञातमपि विज्ञातं भवति प्रतीयत एतत्। दृष्टान्तोऽपि विद्यते तत्रैव यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयम् मृत्तिकेत्येव सत्यम्" "एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्" "एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्" इति। अन्यत्रापि प्रतिज्ञाऽस्ति "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" (मु०उ० १/१/२) इति। दृष्टान्तोऽस्ति "यथा पृथिव्यामोषधयः सम्भवन्ति" (मु०उ० १/१/७)। "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" (बृ०उ० ४/५/६) इति प्रतिज्ञाऽस्ति। एवं प्रतिज्ञादृष्टान्ता- नुरोधात् ब्रह्मण एवोपादानकारणताऽपि स्वीकार्या। अत्र ये दृष्टान्ताः यानि च प्रतिज्ञावचनानि प्रदर्शितानि ब्रह्मण उपादानत्वाभावे तेषामुपरोधः स्यात्। तत्रैतेषु प्रतिज्ञास्थले एकेन विज्ञातेन सर्वस्यान्यस्यापि विज्ञातत्वं प्रतीयते तत् उपादानत्वे सत्येव सम्भवति कार्यस्योपादानकारणाव्यतिरेकात्। न हि निमित्तकारणाव्यतिरेकोऽस्ति कार्यस्य, लोके हि निमित्तकारणेन तक्ष्णा प्रासादादेर्व्यतिरेको दृश्यते।[४४] येऽपि दृष्टान्ताः प्रदर्शिताः तेष्वपि उपादानकारणमेव प्रतिपाद्यते यदि परमेश्वरस्य निमित्तकारणतादि स्वीक्रियते तदा प्रतिदृष्टान्तयोरुपरोधो भविष्यति। उपादान- कारणतायाः ब्रह्मणि स्वीकार एव प्रतिज्ञादृष्टान्तयोः सामञ्जस्यं भवति, निमित्तकारणतामात्रस्वीकारे प्रतिज्ञादृष्टान्तयोरुपरोधात् लक्षणा करणीया भविष्यति, मुख्येऽर्थे सम्भवति न हि जघन्या वृत्तिर्लक्षणा स्वीक्रियते। आगमेन बाधितश्चानुमानं नैव युक्तम्। अतोऽनुमानेन न हि केवला निमित्तकारणता प्रत्येतव्या।[४५] केवलं निमित्तकारणीभूते ब्रह्मणि ज्ञाते न हि सर्वं विज्ञातं भवति। सर्वान्तर्गतानां जगन्निमित्तमात्रकारणीभूतात् ब्रह्मणोऽतिरिक्तानां जीवादीनां परमेश्वरविज्ञानेन ज्ञानाभावात्। अत उपादानकारणताऽपि ब्रह्मणः स्वीकार्या।

अपि च "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिवाक्ये यतः इति पञ्चम्याः विधानमस्ति पञ्चमीविधानं "जनिकर्तुः प्रकृतिः (पा०सू० १/४/३०) इति सूत्रेण जनिकर्तुः = जायमानस्य प्रकृतेरपादानसंज्ञा विधीयते।[४६] अतः यत् पदवाच्यस्य ब्रह्मण उपादानत्वमावश्यकम्। यद्यपि "पुत्रात्प्रमोदो जायते" इत्यपि प्रयोगो भवति,

अत्र च प्रयोगे पुत्रस्य प्रमोदं प्रति निमित्तकारणत्वेऽपि पञ्चमीविधानमस्ति पूर्वोक्तसूत्रद्वारा, अतः निमित्तोपादानसाधारणी प्रकृतिरिह विवक्षिता। फलतः "यतो वा इमानि भूतानि जायन्ते" इत्यत्रोपादानस्य परिग्रह एव कर्तव्य इति पक्षे नास्ति साधकमेतत्।

अस्य परब्रह्मण उपादानकारणस्य निमित्तत्वं त्वधिष्ठातुरन्यस्यासत्त्वादवगम्यते। लोके हि मृदः सुवर्णस्य अन्येषां चोपादानकारणानां कुलालस्वर्णकारादयोऽधिष्ठातारो भवन्ति, अधिष्ठातॄनपेक्ष्यैवोपादानकारणानि मृत्सुवर्णादीनि प्रवर्तन्ते परन्तु नैवं ब्रह्मण उपादानकारणस्य सतः स्वभिन्नोऽधिष्ठाताऽपेक्ष्योऽस्ति यतो हि श्रुतिवाक्येन श्रूयते "एकमेवाद्वितीयम्" इति। यदि चाधिष्ठाता ह्युपादानादन्यः स्यात्तदा प्रतिज्ञादृष्टान्तोपरोधः स्यात्। यदुक्तमस्ति-एकेन विज्ञातेन सर्वं विज्ञातं भवतीति, उपादानकारणादन्यस्मिन् सत्यधिष्ठातरि एकविज्ञानेन सर्वविज्ञानस्यासम्भवात् प्रतिज्ञादृष्टान्तोपरोधः स्फुट एव। उपादानकरणे ज्ञातेऽपि तद्भिन्नस्य निमित्तस्य विज्ञानं न ह्युपादानविज्ञानेन सम्भवति। अतो ब्रह्मण एवाधिष्ठात्रन्तराभावात् निमित्तकारणत्वम्, उपादानान्तराभावाच्च प्रकृतित्वम्। एवमुपादानाभिन्ननिमित्तकारणं जगतो ब्रह्म।[४७] एतद्ब्रह्मणः निमित्तत्वमुपादानत्वञ्चाभिध्ययोपदेशात् अवगम्यते, तथाहि श्रुतिरस्ति "सोऽकामयत बहु स्यां प्रजायेयेति" "तदैक्षत बहु स्यां प्रजयेय" इति। अत्राभिध्यानपूर्विका (अनागतेच्छासङ्कल्पपूर्विका) स्वतन्त्रा प्रवृत्तिरस्य ब्रह्मणो भवतीत्यवगमात् कर्तृत्वमीश्वरस्य। एवं स्वातन्त्र्यलक्षणेन कर्तृत्वेन निमित्तत्वमीश्वरस्य सिद्धं भवति। बहुस्यामिति च स्वविषयतयोपादानत्वमस्य ब्रह्मण सिद्धं भवति।[४८] ब्रह्मण उपादानत्वे साक्षादपि श्रुतिवाक्यं प्रमाणं भवति। श्रुतिरस्ति "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यान्ति" (छा०उ० १/९/१) इति। आकाशपदेन चात्र ब्रह्मैवोपादीयते, यच्च यस्मात् प्रभवति यस्मिंश्च लीयते तत्तस्योपादानकारणं भवति। यथा व्रीहियवादीनां पृथिव्युपादानकारणम्, तथैव ब्रह्मण एव इमानि भूतानि सम्भवन्ति ब्रह्मणि च लीयन्ते; अतः ब्रह्मोपादानकारणमस्ति जगतः।[४९] आत्मनः कर्तृत्वं कर्मत्वं चोभयमपि श्रुतौ प्रदर्श्यते तथाहि "तदात्मानं स्वयमकुरुत" (तै०उ० २/७) इति श्रुतिरस्ति। अत्र आत्मानमित्यनेन कर्मत्वं, स्वयमकुरुत इत्यनेन च कर्तृत्वं प्रतिपाद्यते। कर्तृत्वं कर्मत्वमुभयं ब्रह्मणो निमित्ताभिन्नोपादानत्व एव सम्भवति। अतः ब्रह्मणो निमित्तोपादानत्वमस्ति। ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनोच्यतेऽतोऽपि ब्रह्मणः निमित्ताभिन्नोपादानकारणत्वं सिद्ध्यति।[५०] कारणं ब्रह्म "योनिः" इत्यपि वेदान्तेषूच्यते "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" (मु०उ० ३/१/३) "यद्भूतयोनिं परिपश्यन्ति धीराः" (मु०उ० १/१/६) इत्यादिना।

योनिशब्दश्च न हि निमित्तकारणवाचकोऽपितु उपादानकारणवाचक एव भवति। अतो ब्रह्मण उपादानत्वमङ्गीकर्तव्यम्।[५१] एवं शाङ्करवेदान्ते ब्रह्मण (ईश्वरस्य) निमित्तकारणता, उपादानकारणता च स्वीक्रियते न्यायदर्शने परमेश्वरस्य निमित्तमात्रत्वं स्वीक्रियते। तत्र च प्रमाणविधयाऽनुमानं प्रस्तूयते "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्" इत्यादि। ईक्षापूर्वककर्तृत्वञ्चोपनिषत्स्वपि श्रूयते। ईक्षापूर्वककर्तृत्वं च निमित्तकारणेष्वेव सम्भवति न तूपादानकारणस्य। यथा लोके कुलालादेः निमित्तकारणीभूतस्येक्षापूर्वकं कर्तृत्वं दृश्यते तथैवात्रापि निमित्तकारणस्यैवेक्षा- पूर्वककर्तृत्वसम्भवात् परमेश्वरस्य केवलं निमित्तकारणत्वं क्षित्यादिकं प्रति स्वीकरणीयम्। अपि च "परमेश्वरो नोपादानकारणं भवति चेतनत्वात्, निमित्तकारणत्वाद्वा" "क्षित्यादिकं कार्यं न चेतनोपादानं कार्यद्रव्यत्वात् घटपटादिवत्" "ईश्वरो न द्रव्यसमवायिकारणं चेतनत्वात् कुलालादिवत्" "विमतं कार्यं जगत् भिन्नोपादानाधिष्ठातृकं कार्यद्रव्यत्वात् रथवेश्मादिवत्" इत्यादिभिरनुमानैरपि परमेश्वरस्योपादानकारणत्वाभावो द्योत्यते।[५२] अतः परमेश्वरस्य केवलं निमित्तकारणता स्वीकार्येति नैयायिकाः प्रवदन्ति। वेदान्तिनस्तावन्नैवमङ्गीकुर्वन्ति तेषामाशयोऽस्ति न हि लोकवदिह भवितव्यम्। किन्तु यथाऽऽगमेन प्रतिपाद्यते परमेश्वरस्तथैव स्वीकार्यः। नायमर्थोऽनुमानगम्योऽस्ति किन्तु शब्दगम्योऽयमर्थः आगमेन तु परमेश्वरस्य प्रकृतित्वमपि प्रतिपाद्यते।[५३] अतः निमित्ताभिन्नोपादानकारणता परमेश्वरस्य स्वीकार्या। संक्षेपशारीरके स्पष्टत उच्यते यन्नहि वयं कार्यवशात् अनुमानेन चैतन्ययुक्तमद्वितीयं कारणमस्ति इति प्रतिपादयामः, नैवैतत् अनुमानेन ज्ञातुं शक्यते किन्तु शास्त्रादेवावगम्यते न ह्यनुमानस्य सामर्थ्यमस्त्यत्र किन्त्वनुमानं शास्त्रस्योपकरणमात्रमस्ति।[५४] सम्भवन्ति चानेकाः युक्तयो जगतोऽभिन्ननिमित्तोपादानत्वे चेतनोपादानत्वे च। तथाहि "जगदिदं अभिन्ननिमित्तोपादानं प्रेक्षापूर्वजनितकार्यत्वात् आत्मगतसुखदुःखरागद्वेषादिवत्" इति।[५५] चेतनस्यापि उपादानत्वं द्रव्योपादानत्वं च भवति यथा हि स्वप्नसर्गे विचित्रा प्रतीचः तादृशविचित्रप्रपञ्चोपादानं चेतन आत्मैव। ऊर्णनाभस्य चेतनस्यापि सूत्रोपादानत्वं स्फुटमेव पुरुषस्यापि केशलोमादिसृजने उपादानताऽस्त्येव।[५७] अद्वैतसिद्धान्ते हि विवर्ताधिष्ठानत्वमेवोपा-दानत्वम्। एवं पुरुषादौ चेतनस्य स्थाण्वाद्यारोपेऽपि पुरुषस्य स्थाण्वादिद्रव्योपादानत्वं सम्भवति नात्र काचित् विप्रतिपत्तिः सम्भाव्यत। कार्यकारणयोः साम्यमपि नावश्यकम् तथा ह्यचेतनोऽपि जालः सचेतनादूर्णनाभेः जायते तथैवाकाशादि कार्यं जगत् चेतनात् ब्रह्मणो जायते।[५८] नास्ति काचिद्विप्रतिपत्तिरतो ब्रह्मणोऽभिन्ननिमित्तोपादानकारणत्वं स्वीकार्यम्।

## विद्यमानमपि निमित्तत्वमीश्वरस्य नैव न्यायरीत्या

न्यायरीत्या परमेश्वरस्य निमित्तकारणत्वं परमाणूनामधिष्ठायकत्वेन स्वीक्रियते। अद्वैतवेदान्ते च ब्रह्मणो निमित्ताभिन्नोपादानकारणता स्वीक्रियते श्रुतिसिद्धत्वात्। अतोऽद्वैतिनो वदन्ति श्रुतिप्रमाणेन परमेश्वरस्य निमित्तत्वमुपादानत्वञ्च सिद्ध्यति, इदं ब्रह्मण उपादानत्वं निमित्तत्वञ्च मायाद्वारैव सम्भवति कुत्र पुनः परमाण्वाद्यपेक्षा?[९] अतः परमाणूनामधिष्ठायकत्वेन नैव परमेश्वरस्य जगत् प्रति निमित्तत्वम्।

अपि च, परमाणुषु संयोगो दुर्घटोऽस्ति, परमाणूनां परिच्छिन्नत्वात् यावत्यो दिशः सन्ति तावद्भिरवयवैः सावयवास्ते स्युः। सावयवत्वादनित्यत्वमपि प्राप्नोति ततश्च परमाणवो नित्याः निरवयवाश्चेति सिद्धान्तो व्याहतो भवति।[६०] परमाणुसद्भावे च प्रमाणमपि नास्ति। अपि च परमेश्वरो निष्क्रियः स्वीक्रियते भवद्भिः नैयायिकैः। निष्क्रियस्य चेश्वरस्य कुतो निमित्ताख्या कारणता स्वीकर्तुं शक्यते? यतो हि क्रियाशून्यं हि यद्वस्तु भवति न तद्वस्तु कारणमङ्गीक्रियते।[६१] अतः परमाणूनामधिष्ठायकत्वेन नेश्वरस्य निमित्तताऽभ्युपेया। श्रुत्यादिभिः मायायाः सत्त्वं प्रतिपाद्यते सन्ति बहूनि प्रमाणानि मायायाः जगत्कारणत्वे "अजामेकाम्" इत्यादीनि। अतः मायामाश्रित्यैव परमेश्वरस्य जगदुपादानाभिन्ननिमित्तत्वं स्वीकार्यम्।

## ईश्वरस्य निमित्तमात्रत्वेऽनेके दोषाः

यदि परमेश्वरस्य केवलं निमित्तकारणत्वं स्वीक्रियते तदा लौकिकेन दृष्टान्तेन परमेश्वरेऽनेकानर्थपरम्पराऽऽपतति ते च दोषाः प्रदश्यन्ते क्रमशः। यदि निमित्तकारण-मात्रमीश्वरो लौकिकन्यायेन तर्हि लौकिकन्यायेनैवाऽनेन शरीरेन्द्रियादिमतापि भाव्यम्। यतोहि न हि कुलालादिः मूर्तं सावयवं रूपादिमन्मृदादि शरीरेन्द्रियादिरहितोऽधितिष्ठति किन्तु शरीरेन्द्रियादिसम्पन्न एव कुलालादिमूर्तं मृदादिद्रव्यमधितिष्ठति हस्तादिना च स्पृष्ट्वा घटादिभावं नयति। एवमेव परमेश्वरोऽपि शरीरेन्द्रयादिसहित एव परमाण्वाद्यधिष्ठातुमर्हति न तु शरीरेन्द्रियादिविरहितः। यदि च शरीरेन्द्रियाद्यपि स्वीक्रियतेऽस्य तदा देहादेर्भोगायतनत्वनियमात् सुकृतदुष्कृतभोगलक्षणः संसारोऽपीश्वरस्य प्रसज्यते।[६२] महेश्वरस्य सर्वदैव सर्वविषयकज्ञानमस्ति, सर्वविषयि-णीच्छा विद्यते, सर्वविषयकश्च प्रयत्नो विद्यते। एतेषां समेषामपि विद्यमानतया सर्वं कार्यं सदा स्यात् नियतकालफलपुष्पोद्गमव्यवस्था न स्यात्, समेषां कार्याणां यौगपद्यमापद्यते। न हि परमेश्वरसिसृक्षायाः भेदोऽस्ति यामाधारीकृत्य सर्वेषां कार्याणां यौगपद्यं वार्येत। तत्र प्रश्नोऽपरो भवति यदयमीश्वरो यदि व्यतिरिक्तस्तदा सोऽपीश्वरः

केन प्रवर्तितः जगन्निर्मिमीते? यदि स्वत एव जगन्निर्मिमीते परमेश्वरस्तदा सर्वदैव जगन्निर्मातव्यम्। यदि केनचिदन्येन प्रवर्तितोयऽमीश्वरो जगत् सृजति तदाऽस्य कीदृशमैश्वर्यं? पारतन्त्र्यमापद्यते अपि च, भवता नैयायिकेन कार्यकारणयोर्भिन्नताङ्गी-क्रियतेऽभिन्नता वा? यदि भिन्नता स्वीक्रियते कारणात् कार्यं भिन्नं चेत्? तर्हि पृथक् प्रसिद्धयोः हिमालयविन्ध्ययोः कीदृशी कार्यकारणता[६३] यदि चाभिन्नता कार्यकारणयोस्तदाऽपि प्रश्नो भवति यदेकत्वात् कुतः कार्यकारणभावः? कः कश्चित् प्रति कारणम्?[६४]

अपि च, संबंधोऽपीश्वरपरमाणूनामनुपपन्नः, कीदृशोऽयं सम्बन्धः स्यात् संयोगः समवायो वा कश्चिदन्यो वा। न हि तावत् संयोगः ईश्वरपरमाणूनां सम्बन्धः सम्भवति ईश्वरस्य परमाणोश्चोभयोरपि निरवयवत्वात्। संयोगस्य लक्षणमेवास्ति "अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः।[६५] न हि तावत् समवायोऽपि सम्भवति आश्रयाश्रयिभावस्याऽस्वीकारात्। समवायसम्बन्धस्थले यथा कपालघटयोः समवायसम्बन्धः। अत्राश्रयोऽस्ति कपालम्, आश्रयि विद्यते घटः एवमाश्रयाश्रयिभावो भवति। नैवं परमेश्वरपरमाणूनामाश्रयाश्रयिभावोऽस्ति। नान्योऽपि कश्चन सम्बन्धः सम्भवति। अद्वैतिना तु कार्यकारणयोस्तादात्म्यलक्षणः सम्बन्धः स्वीक्रियते तन्मतेऽद्वैतस्यैव स्वीकार्यत्वात्।[६६]

अपि चेश्वरस्य निमित्तकारणत्वमात्रस्वीकारेऽसामञ्जस्यं रागद्वेषादिदोषाः प्रसज्यन्ते। यतोहीश्वरस्तावत् हीनान् मध्यमान् उत्तमान् च जनान् सृजति, कांश्चित् सुखिनो निर्मिमीते कांश्चिच्च दुःखिनो विदधाति। अतो रागादिदोषप्रसक्तिरीश्वरस्य रागादिदोषप्रसक्तौ चेश्वरस्यास्मदादिवदनीश्वरत्वं प्राप्तं भवति। यदि च प्राणिकर्मसापेक्ष ईश्वरो जगत् सृजतीति मतम्, तदा ह्यपरो दोष आपद्यते कर्मेश्वरयोर्मिथः प्रवर्त्यप्रवर्तयितृतयाऽन्योन्याश्रयः। यतो हि अदृष्टमचेतनं सत् न स्वयं प्रवृत्तिमर्हति चेतनमधिष्ठातारमपेक्षते, परमेश्वरश्च न स्वयं प्रवृत्तिमर्हति प्राणिकर्मापेक्षणात्।[६७] अन्यच्चायमीश्वरो यदि स्वतन्त्रः कारुणिकश्च तदा न हि कपूये कर्मणि जीवान् प्रवर्तयेत्, उत्पन्नमपि चादृष्टं नाधितिष्ठेत् केवलमधिष्ठानाभावेनैव प्राणिनां दुःखानुत्पादात्। जीवा हीश्वराधीनाः न हि स्वातन्त्र्येण पापे कर्मणि प्रवर्तमानाः सम्भवन्ति, नहि परमेश्वरानधिष्ठतं कपूयं कर्म फलप्रदाने सामर्थ्यं दधाति।[६८] तथा च कर्मणा स्वतन्त्रोऽपीश्वरः प्रवर्तते दृष्टविपरीतमेतत् कल्पनीयम्। पूर्वोक्तोऽन्योन्याश्रयो दोषश्चापरो गण्डस्योपरि स्फोटः। अनादितयाऽपि नास्य दोषस्य प्रामाणिकत्वं स्वीकर्तुं शक्यम्। वर्तमानकालवत् पूर्वपूर्वकालेऽपि दोषस्यास्य विद्यमानत्वादन्ध-

परम्परान्यायः प्रसज्यते। भामत्यां वाचस्पतिमिश्रो वदति यदिमौ द्वावपि कर्मेश्वरौ प्रवर्त्यौ विद्येते तर्हि कः कं प्रवर्तयेत् चक्षुष्मान् यः भवति (स्वयं प्रवृत्तिशीलः प्रवर्तकानपेक्षः) सोऽन्धं नयति न ह्यन्धोऽन्धान्तरेण नीयते। अत्रोभावपि कर्मेश्वरौ प्रवर्त्यावेव नहि कश्चित् स्वयं प्रवृत्तिशीलः प्रवर्तकानपेक्षस्तर्हि कः कं प्रवर्तयेत्?[६९]

अपि च, नैयायिकाः यादृशमीश्वरमङ्गीकुर्वन्ति तादृशेश्वरस्वीकारे नैयायिकानां स्वसिद्धान्तभङ्ग आपद्यते यतो हि नैयायिका ईश्वरस्त्रष्टृत्वं स्वीकुर्वन्ति निर्दोषत्वञ्च। विद्यते च नैयायिकानां सिद्धान्तः "प्रवर्तनालक्षणाः दोषाः" (न्या०सू० १/१/१८) रागद्वेषादिदोषैः प्रयुक्त एव कश्चित् स्वार्थे परार्थे वा प्रवर्तते। परार्थेऽपि प्रवर्तमानो जनः स्वार्थवशादेव प्रवर्तते यथा करुणया कश्चित् प्रवर्तते चेत् तर्हि कारुण्ये सति ह्यस्यापि दुःखं भवति ततश्च करुणया तस्य दुःखस्य प्रहाणाय प्रवर्तते। एवं चेश्वरस्यापि स्वार्थवत्त्वं स्वीकार्यम् स्वार्थवति चेश्वरेऽनीश्वरत्वं प्रसज्यते।[७०]

अपि च निमित्तकारणस्येश्वरस्य सार्वज्ञ्यादिकमपि अनुपपन्नम्। नैयायिकास्तावत् परमाणूनामानन्त्यं जीवानाञ्चानन्त्यमङ्गीकुर्वन्ति, एवं सति परमेश्वरस्य सार्वज्ञ्यं वा न स्यात्, एतेशामनन्तता वा न स्यात्। नास्त्याभ्यामतिरिक्तः कश्चन कल्पः। यतो हीश्वरज्ञानेन परमाणूनां पुरुषाणाञ्चेयत्ता परिच्छिद्यते न वा? उभयथाऽपि दोषोऽस्ति। यदीयत्ता परिच्छिद्येत तदेयत्तापरिच्छिन्नत्वात् परमाणूनां जीवात्मनाञ्चान्तवत्त्वमावश्यकम्, यथा लोके यदियत्तापरिच्छिन्नं वस्तु दृश्यते पटादि तदन्तवत् दृष्टम् तथैवात्रापि भाव्यम्। यदि चेयत्ता न परिच्छिद्येत तदा त्वीश्वरस्य सर्वज्ञताऽभ्युपगमहानिः स्यात्।[७१] निमित्तकारणीभूतस्य चेश्वरस्य बुद्ध्यादयो गुणा नित्या एव स्वीक्रियन्ते नैयायिकैः। नित्येच्छावान् परमशेवरः सर्वदैव जगत्सृष्टौ प्रवर्तेत तदीयाया इच्छायाः नित्यत्वात्।[७२]

परमेश्वरस्य निमित्तोपादानकारणत्वे नैतेषु कश्चिदपि दोषः प्रसक्तो भवति। तस्याद्वितीयस्यैव तत्त्वस्याद्वैतमते स्वीक्रियमाणत्वेन नैव वैषम्यनैर्घृण्यदोषावपीश्वरस्य सम्भवतः। परब्रह्मणः जगदिदं तथैव सञ्जायते यथा निःश्वासप्रश्वासादयोऽनभिसन्धायैव किञ्चित् बाह्यं प्रयोजनं विनैव सम्भवन्ति। स्वभावादेव जगत्सर्गः सञ्जायते।[७३]

## ईश्वरो न ह्यदृष्टमधितिष्ठति

श्रुतौ तावत् "स्वर्गकामो यजेत" इत्यादि संश्रूयतेऽनेन च यागादेः स्वर्गादिसाधनत्वं स्फुटम्। किन्तु लोके स्पष्टमवलोक्यते यद्यागादिर्विनश्यति विनष्टं यागादि कुतः स्वर्गादिफलं दद्यात्? अतः कल्प्यते नैयायिकैः यद्यागादिना कश्चिदपूर्वः समुत्पद्यते, तेनापूर्वेण चानन्तरं यागादीनां कर्ता यागानुरूपं फलं प्राप्नोति यागजन्यस्या-

पूर्वस्य तदानीं विद्यमानत्वात्। किन्त्वपूर्वस्य (अदृष्टस्य) फलप्रदायकत्वे शङ्केयमापद्यते यद्यागादिजन्यमदृष्टमचेतनम्, अचेतनञ्च नहि चेतनेनानधिष्ठितं फलप्रदायकं भवति। अतोऽदृष्टाधिष्ठाता परमेश्वरः स्वीक्रियते।

अद्वैतवेदान्तिनो वदन्ति नहि तावददृष्टसद्भावे प्रमाणमस्ति,[७४] भवता नैयायिकेन प्रथममदृष्टं कल्प्यतेऽनन्तरञ्च तदधिष्ठातारमीश्वरं कल्पयन्ति भवन्तः। एषा च फलप्राप्तिरन्यथाऽप्युपपद्यतेऽतोऽदृष्टं नैव कल्पयितुं शक्यम्। तथाहि लोके क्रिया द्विविधा दृश्यते दृष्टफलादृष्टफला च। दृष्टफला क्रियाऽपि द्विविधाऽनन्तरफला कालान्तरभाविफला। अनन्तरफला क्रिया गतिभुजिलक्षणा गतिलक्षणायाः क्रियायाः फलम् ग्रामादिसंयोगः क्रियायाः गमनाख्याया अनन्तरमेव भवति। भुजिलक्षणायाः क्रियाया फलं तृप्तिः क्रियाया अनन्तरमेव भवति। कालान्तरभाविफला क्रिया कृषिसेवादिलक्षणा। अनन्तरफला क्रिया फलोदयपर्यन्तं तिष्ठति। फलोदयेन चानन्तरफलायाः क्रियायाः नाशो भवति। कालान्तरभाविफला क्रिया तूत्पन्ना सती विनश्यति पुनश्च कालान्तरे तस्याः क्रियायाः फलं भवति।[७५] कालान्तरभाविफलायाः क्रियायाः फलमात्मसेव्याद्यधीनं भवति। तथाहि राजसेवादेः फलं राज्ञैवानन्तरे काले प्रदीयते न हि तत्र काचिददृष्टादीनां कल्पना क्रियते।[७६] एतदुभयन्यायमन्तरेण स्वतन्त्रं कर्म नहि कुत्रचित् दृश्यते न वा स्वतन्त्रात् कर्मणः फलं वा कुत्रचित् दृश्यते अत्रापि दृष्टन्याय एवानुसर्तव्यः न तु दृष्टन्यायत्यागः समुचितः।[७७] अतः शान्ते यागादिकर्मणि नित्यः कर्तृकर्मफलविभागज्ञः परमेश्वरः सेव्यादिवत् यागाद्यनुरूपं फलं प्रददाति। भगवता व्यासेनापि सर्वकर्मफलप्राप्तिरीश्वरादेव भवतीति प्रतिपाद्यते।[७८] स हि परमेश्वरः सर्वाध्यक्षः देशकालविशेषाद्यभिज्ञः कर्मिभ्यः कर्मानुरूपं फलं प्रददाति, एतेनैव आशुतरविनाशिनः कर्मणः कालान्तरभाविफलं भवितुं शक्नोति न हि किञ्चिदनुपन्नमस्ति येन भवानदृष्टं कल्पयेत्।[७९] अनन्तरं परमेश्वरं तदधिष्ठातारमनुमिनुयात्। अपूर्वं स्वयमपि निष्प्रमाणकमस्ति, तस्य च फलदानशक्तिरपि निष्प्रमाणका।[८०] एवमदृष्टस्यास्वीकारेऽपि यागादिफलानां सम्पादनं साधु सम्भवति। अत्र शक्यते शङ्कितुं यद्राजवदस्य फलदातृत्वस्वीकारे राजदवदस्य निग्रहानुग्रहकर्तृत्वं प्राप्तं भवति तस्माच्च रागादिमत्त्वमपि प्राप्तं भवतीश्वरस्य तत्र समाधानमिदं यद्यथा लोके निर्णायको निरपेक्षोऽपि कस्यचिज्जयहेतुः कस्यचिच्च पराजयहेतुर्भवति तथा सति नहि रागादिमानुच्यते यथोपलब्धभाषित्वात्। तथैवेश्वरोऽपि क्रियादिसाक्षी सन् रागादिमान् न भविष्यति। यश्चाननुरूपं फलं प्रददाति स रागादिमानुच्यतेऽयं नाननुरूपं फलं ददाति किन्त्वनुरूपमेवातो न रागादिमानयम्,

राजापि दुष्टान् दण्डयन् सज्जनांश्च पालयन्नहि रागादिमान् भवति।[८१] अत एतदेव स्वीकार्यम् यत् यथा सेव्यः सेवककृतां सेवां स्मरन् कालान्तरे तदनुरूपं फलं प्रददाति सेवकेन "अनेनाहं सेवितः" इति सेव्यबुद्धौ संस्कृतायां कालान्तरे सेवायां विनष्टायामपि तस्याः सेवायाः फलं सेव्याद् राजादेः प्राप्यते, तथैव याजकादिना "अनेनैवं सत्कर्माचरितं" इतीश्वरबुद्धौ संस्कृतायां यागादौ कर्मणि विनष्टेऽपि तेन कर्मणा पमेश्वरात् फलं भवति।[८२] न त्वदृष्टमुत्पद्यते न वाधितिष्ठतीश्वर इति।

## ईश्वरो नहि वेदकर्ता

नैयायिकाः वेदकर्तृत्वमीश्वरस्य मन्यन्तेऽद्वैतवेदान्तिनो वेदानामपौरुषेयत्वमङ्गीकुर्वन्ति। वेदानां पौरुषेयत्वसाधनाय "वेदः पौरुषेयो वाक्यत्वात् भारतादिवत्" इत्यनुमानं नैयायिकाः प्रदर्शयन्ति। अत्राद्वैतिनः पृच्छन्ति किमिदं पौरुषेयत्वं नाम?यदनुमीयते भवता वाक्यत्वहेतुकेनानुमानेन, "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इत्यादीनां स्मृतीनां "तस्माद्यज्ञात् सर्वहुत ऋच सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्" इत्यादयः श्रुतयश्च प्रमाणत्वेनोपदर्श्यन्ते। पुरुषाद्युत्पत्तिमात्रं पौरुषेयत्वं किं वा प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वम् पौरुषेयत्वम्। यदि पुरुषादुत्पत्तिमात्रं पौरुषेयत्वं भवतानुमीयते तर्हि तत्तु स्वीक्रियतेऽस्माभिरपि। श्रुतिभिरपीश्वराज्जन्मैव वेदानां प्रतिपाद्यते न तु प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वे किञ्चित् प्रमाणमस्ति।[८३] शब्दस्याकाशवन्नित्यतया सर्वगततया च न हि कालतः क्रमवत्त्वं सम्भवति न वा देशतः। अनित्यस्यैव वस्तुनः कालतः क्रमवत्त्वं भवति, अव्याप्यवृत्तिन एव च देशतः क्रमवत्त्वं भवति। शब्दस्य च नित्यसर्वगतत्वेन न क्रमवत्त्वसम्भवः। क्रमशून्यानां वर्णानामुच्चारणेषु क्रमः प्रतीयमानो विद्यते किं वा शब्दानां ज्ञानेषु क्रमो विद्यते। पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्तत्सदृशोत्तरक्रमवतां वेदशब्दवाक्यानां यथाऽधुना पुरुषाधीनोत्पत्तिमत्तां तथा सर्गकालेऽपि श्रुतिभिरेतादृशमेव पौरुषेयत्वं स्वीकर्तुमुचितम्। प्रदीपवत् सर्वार्थावद्योतिन ऋग्वेदादिशास्त्रस्यानेकविद्यास्थानोपवृंहितस्य महाविषयस्य पूर्वकल्पीयानुपूर्वीविशिष्टस्य कारणं ब्रह्म विद्यते।[८४] तथा च पुरुषाधीनोत्पत्तिमात्रं यदि पौरुषेयत्वं तदा तस्य त्वस्माभिरपि स्वीकृतत्वात् सिद्धसाधनता।[८५] यदि च प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं पौरुषेयत्वं तर्हि नासौ सम्भाव्यः कल्पः, नहि श्रुतिभिरीश्वरः प्रमाणान्तरेणार्थमुपलभ्य वेदान् विरचयतीति प्रतिपाद्यते। पुरुषाधीनोत्पत्तिमत्त्वस्यान्यथाऽनुपपत्त्याऽपि न हि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं साधयितुं शक्यम् न वा वाक्यत्वहेतुकेनानुमानेनानुमातुं वा शक्यम्। यतो हि पुरुषाधीनोत्पत्तिमत्त्वमन्यथाऽपि सम्यगुपपद्यते[८६] तथाहि यथा मालतीमाधवादि

काव्यवाक्यान् वयमुच्चारयामः तत्र च पुरुषादुत्पत्तिमत्त्वमस्ति वाक्यत्वं चास्ति किन्तु न ह्यस्माभिः प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वमस्ति। यतोहि मालतीमाधवादि-काव्यवाक्यान् वयं तथैवोच्चारयामो यथा कविना ते व्यवस्थापिताः नहि तत्रास्माकं स्वातन्त्र्यं वर्णानां क्रमपरिवर्तने वाक्यपरिवर्तने वाक्यार्थपरिवर्तने वा। तथैवेश्वरोऽपि पूर्वकल्पीयवेदानुरूपानेव वेदान् प्रवर्तयति। नहीश्वरस्याऽपि वेदानां वर्णक्रमपरिवर्तने वाक्यपरिवर्तने वाक्यार्थपरिवर्तने स्वातन्त्र्यमस्ति किन्तु अनाद्यविद्योपधानलब्ध-सर्वशक्तिज्ञानस्य परमेश्वरस्य पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात् वेदानां कारणत्वेऽपि न हि तेषु स्वातन्त्र्यम्। वेदानां पूर्वपूर्वकल्पीयवेदानुपूर्वीविशिष्टानामेव प्रणेता परमेश्वर इत्यत्र युक्तिरप्युपलभ्यते तथाहि यागादिः प्रतिकल्पं स्वर्गहेतुरेव भवति ब्रह्महत्यादिश्च नरकहेतुरेव भवति नहि कस्मिंश्चिदपि सर्गे ब्रह्महत्याऽर्थ-हेतुरश्वमेधश्चानर्थहेतुर्भवति। यथाऽग्निर्नहि कदापि क्लेदयति जलं न दहति तथैवेतदपि।[८७] यदि वेदानामन्यथाविरचने परमेश्वरः स्वतन्त्रः स्यात्तदा सर्गान्तरे विपरीतफलैरश्वमेधादिभिर्भवितव्यम्। अपि चान्यापि युक्तिरस्ति-यथाऽस्मिन् सर्गे नियतानुपूर्वीविशिष्टं वेदाध्ययनमेवाभ्युदयनिःश्रेयसहेतुर्भवति नियतानुपूर्वीरहितं वेदाध्ययनं वाग्वज्रतयाऽनर्थहेतुर्भवति सर्गान्तरेष्वप्येवमेवास्ति।[८८] तथा चैतदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि परमेश्वरः पूर्वपूर्वसर्गानुरूपान् वेदान् रचयन्न स्वतन्त्रः इत्येव स्वीकर्तव्यम्। अत एव ब्रह्मणः शास्त्रकारणत्वं शास्त्रस्य चापौरुषेयत्वमुभयमपि सिद्धं भवति। अतः पुरुषादुत्पत्तिमत्त्वमात्रं न हि मानान्तरोपलब्धेऽर्थे रचनायाः कल्पकम् अन्यथाप्युपपन्नत्वात् यदि तथापि वेदविरचनस्यान्यथानुपपत्तिर्मानान्तरोप- लब्धेऽर्थे रचनां कल्पयति इत्यङ्गीकरोति भवान् तर्हि "ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्" इत्यादिभिः श्रुतिभिरग्न्यादीनां वेदकर्तृत्वं कथं नाङ्गीक्रियते न ह्यग्न्यादिभिर्वेदजन्म तेषां कर्तृत्वं विना सम्भवति।

यदि भवान् वदति यत् "तस्माद्यज्ञात् सर्वहुत ऋचः" इत्यादिभिः श्रुतिभिरीश्वरकर्तृकत्वं वेदानामधिगम्यतेऽतोऽधिष्ठातृदेवतापरं तत्तद्वाक्यमिति तर्हि "ब्रह्म स्वयम्भु, वाचा विरूपनित्यया, अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इत्यादिश्रुतिस्मृतिशतानुरोधेन वेदानां नित्यत्वावगमो भवति। फलतः "तस्माद्यज्ञात्" इत्यादिश्रुतिवाक्यं सम्प्रदायप्रवर्तकपरमिति कल्पना कथं नैव कर्तुं शक्यते न ह्येषा कल्पना दण्डवारिता अतोऽपौरुषेयत्वमेव वेदानां कल्पयितुमुचितम्।

**निष्कर्षः**

न्यायाभिमतेश्वरविषयेऽद्वैतवेदान्तमतमेवं निष्कृष्टम् भवति, न हि न्यायाभिमत

ईश्वरः सम्भवति यतो हि सोऽतिरिक्तः पृथिव्यादिभ्यः स्वीक्रियते। वस्तुतः पारमार्थिकं वस्तु केवलं ब्रह्मैव। न हीश्वरोऽनुमानतः साधयितुं शक्यः ईश्वरस्यानुमानाविषयत्वात्। न वा केवलं निमित्तकारणमीश्वरः निमित्ताभिन्नोपादानकारणत्वात्। केवलं निमित्तकारणत्वे चानेकदोषसम्भवात्। न चेश्वरोऽदृष्टमधितिष्ठति तस्य सत्त्वे प्रमाणाभावात् किन्तु जीवकृतकर्मानुरूपाः संस्काराः परमेश्वर उत्पद्यन्ते तत्तदनुसारमेवेश्वरो जीवकृतकर्मफलान् प्रददाति। ईश्वरस्य वेदकर्तृत्वमपि नास्ति किन्तु सर्गादौ केवलं सम्प्रदायप्रवर्तकत्वम्। न चेश्वरो जीवभिन्न आत्मकल्पश्च किन्तु जीवाभिन्न एव, एकस्य तस्यैव पारमार्थिकत्वात् जीवेश्वरभेदस्तु काल्पनिक उपाधिवशाद् भवति। परमार्थतस्तु केवलं ब्रह्मैकमद्वितीयमस्ति।

## पादटिप्पणी

१. वेदान्तपरिभाषा विषय परि०, पृ० ३०२
२. वे० परि० विषय परि०, पृ० ३०३-३०७
३. वे० परि०, पृ० ३३०
४. अस्त्यात्मा जीवात्मा शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी। ब्र० सू० शां० भा०, पृ० ७९५, हिन्दीसहिता भामती
५. पञ्चदशी ३/३७
६. प० द० ३/४०-४२
७. अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका नो।
कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते।। वि० चू० श्लो० ११०
८. तै० उप० शा० भा० वनमाला टीका (श्रीरङ्गम् संस्करण), पृ० १३१, उद्धृत भा० द० की रूपरेखा, पृ० ३६५
९. भा० द० की रूप०, पृ० ३६५
१०. वाक्यपदीयम् १/३४
११. भामती हिन्दीसहिता, पृ० ५६०
१२. यावत्तर्केण सम्भवो नानुगृह्यते तावच्छास्त्रप्रतिपन्नोऽपीश्वरो न निश्चीयतेऽर्थवादत्व शङ्काप्रतिबन्धादतः शास्त्रार्थस्येश्वरस्य निश्चयाय नियमाय सामान्यतोदृष्टमनुमानं शास्त्रानुग्राहकरूपं सूत्रेणोच्यते। केनोपनिषद् शाङ्करवाक्यभाष्यटीका, पृ० ४६
१३. मु० उप० १/१/७
१४. ब्र० सू० १/१/२
१५. ब्र० सू० शा० भा०, पृ० ११८
१६. तै० उप० ३/१

१७. छा० उप० ६/२/१

१८. नैवानुमानबलतः श्रुतिसम्मतार्थं निर्णेतुमर्हति यतो विषयो न तस्य।
तात्पर्य्यतो हि निगमान्तगिरां स्वशक्तेर्निर्णेतुमर्हति पुमान् परमार्थवस्तु।
प्रत्यक्तत्त्वचिन्तामणिः ९/१७

१९. भङ्क्त्वा कथचिदनुमानवशेन सिद्धे
सर्वेश्वरे कणभुगादिभिरुच्यमाने।
वेदान्तवाक्यमपि योज्यमतोऽनुमाने
सापेक्षतोपनिषदां यदि साहसं तत् ।। सं० शा० ५४१ श्लोकः

२०. व्याप्त्यनुपपत्त्याभास, उदाहरणमात्रप्रदर्शनं युक्तिरव्यभिचारिणी च व्याप्तिरनुमानम् तत्र कुलालादिदृष्टान्तैर्न सर्वज्ञेश्वरकारणत्वं निश्चेतुं शक्यते विपरीतोदाहरणसम्भवात् किन्तु प्रमाणान्तरे सति कुलालादिदृष्टान्तैः सम्भावयितुं शक्यते। अतो युक्तिरेवैषा। तत्राऽज्ञानादर्थनिश्चायकमनुमानं मन्यन्त इति। पं० पा० वि०, पृ० ५३९-५४०

२१. जगतो बहुकर्तृत्वपरिच्छिन्नज्ञानैश्वर्यादिमत्कर्तृत्वानुमानेषूदाहरणसम्भवात् युक्तिमात्रमेतत्। पं० पा० वि०, पृ० ५४०

२२. प्रासादादेर्बहुकर्तृकत्वं तावद् दृश्यते, ततश्च तद्वज्जगतोऽपि बहुकर्तृकत्वं स्यात्। न च लाधवादेककर्तृकत्वं शङ्क्यम् निमित्तोपादानैक्यस्यापि तत एव प्रसक्तेरित्यर्थः। पं० पा० तत्त्वदीपनम्, पृ० ५४०

२३. कर्मफलस्य शरीरेन्द्रियादिमद् बहुदातृत्वदर्शनादेकेश्वरासिद्धेः श्रुतिप्रतिपन्नसर्वकारण-सर्वज्ञसर्वेश्वरसर्वफलदातृद्वितीयब्रह्मप्रतिपत्तावुदाहरणमात्रेण सम्भावना बुद्धिहेतुत्वाद् युक्तिमात्रम्। पं० पा० वि०, पृ० ५४०

२४. युक्तिर्हि सम्भावनाबुद्धिमात्रमुत्पादयति, अनुमानं पुनरर्थं निश्चाययति। पं० पा० वि०, पृ० ५३९

२५. के० उप० सटीक शा० वा० भा०, पृ० ४६

२६. बृ० उप० भा० वा० ३/८/१३१-१४०

२७. दुःखार्जितधनत्यागिनुतिश्च जगतीक्ष्यते।
नेयंऽयुक्ताऽप्रसिद्धेशे तत्कर्मफलदायिनि। बृ० उप० भा० वा० ३/८/१४१

२८. बृ० उप० भा० वा० ३/८/१४४ आनन्दगिरिटीका

२९. यदज्ञानाज्जगत्यस्मिन् तीव्रानर्थपरम्परा।
ज्ञानाच्च मुक्तिः संसारात् कथं नास्ति प्रशास्तृतत्।। बृ० उप० भा० वा० ३/८/१६०

३०. सर्वे कार्पण्ययुक्ताः स्युर्यदि न स्यात्तदक्षरम्।
ईक्ष्यन्ते चाप्यकृपणास्तच्च सत्येव यन्तरि ।। तदेव ३/८/१६६

३१. बृ० उप० भा० १/४/१०, पृ० ९०

३२. नैतदेवं यतोऽस्यैव मन्त्रब्राह्मणमानतः।
प्रवेशः श्रूयते साक्षात् परमेशस्य सर्वतः।। बृ० उप० भा० वा० २/४/४६१

३३. ब्रह्मोपदेशानर्थक्यप्रसङ्गात्। उप० भा०, पृ० ९०

३४. "अयमात्मा ब्रह्म" "यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा" "तत्सत्यं स आत्मा" "ब्रह्मविदाप्नोति परम्" इति प्रकृत्य "तस्माद्वा एतस्मादात्मनः" इति सहस्त्रशो ब्रह्मात्मशब्दयोः सामानाधिकरण्यादेकार्थत्वमेवेत्यवगम्यते। बृ० उप० भा०, पृ० ९१

३५. अन्यस्य ह्यन्यत्वे सम्पत् क्रियते नैकत्वे। तदेव

३६. सम्पत्तेः प्रत्ययमात्रहेतुत्वात्।-----तस्माद् ब्रह्मेति न ब्रह्मभाविपुरुषकल्पना साध्वी। तदेव

३७. तत्र यदि संसारी ब्रह्मणोऽन्य आत्मानमेवावेदिति कल्प्येत। इष्टस्यार्थस्य बाधनं स्यात्। तदेव

३८. -----ब्रह्मविद्येति व्यपदेशो न स्यात्, आत्मानमेवावेदिति संसारिण एव वेद्यत्वोपपत्तेः। तदेव

३९. अन्यश्चेद्वेद्यः स्यादयमसाविति वा विशेष्येत न त्वहमस्मीति। अहमस्मीति विशेषणादात्मानमेवावेददिति चावधारणान्निश्चितमात्मैव ब्रह्मेत्यवसीयते। तदेव, पृ० ९२

४०. न चेश्वरस्य निमित्तकारणमात्रत्वम्, किन्त्वभिन्ननिमित्तोपादानत्वमेव श्रुतिसिद्धत्वात्। अद्वैतब्रह्मसिद्धिः, पृ० ४९

४१. त्रिभिरस्योपादानत्वं सूच्यते। उत्पत्तिमात्रं तु निमित्तमात्रसाधारणं नोपादानं सूचयेत्। ब्र० सू० शां० भा०, भामती, पृ० १०२

४२. अधिष्ठायात्मकार्यत्वादुत्पत्तिस्थितिहानिषु।
त्रिविधेनाधिपत्येन स जगत् पाति सर्वदा।। बृ० उप० भा० वा० ४/४/९९२

४३. ब्र० सू० १/४/२३

४४. तत्र चैकेन विज्ञातेन सर्वमन्यदपि विज्ञातं भवतीति प्रतीयते। तच्चोपादानकारणविज्ञाने सर्वविज्ञानं सम्भवत्युपादानकारणाव्यतिरेकात् कार्यस्य। निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात्। ब्र० सू० शां० भा० १/४/२३, पृ० ५२६

४५. न केवलं ब्रह्म निमित्तकारणं, कुतः? प्रतिज्ञादृष्टान्तयोरनुपरोधात्। निमित्तकारणत्वमात्रे तु तावुपरुध्येताम् तथाहि-
न मुख्ये सम्भवत्यर्थे जघन्या वृत्तिरिष्यते।
न चानुमानिकं युक्तमागमेनापबाधितम्।। ब्र० सू० शा० भा०, भामती, पृ० ५२५

४६. यत इतीयं पञ्चमी-"यतो वा इमानि भूतानि जायन्ते" इत्यत्र "जनिकर्तुः प्रकृतिः" इति विशेषस्मरणात् प्रकृतिलक्षणा एवापादाने द्रष्टव्या। ब्र० सू० शा० भा०, पृ० ५२६-५२७

४७. ब्र० सू० शा० भा०, पृ० ५२७

४८. ब्र० सू० ४/१/२४ शां० भा० एवं भामती
४९. ब्र० सू० ४/१/२५ शां० भा०
५०. ब्र० सू० ४/१/२६, शां० भा०
५१. ब्र० सू० ४/१/२७, शां० भा०
५२. प्र० त० चि० पृ० ८२-८३
५३. ---न लोकवदिह भवितव्म्। न ह्ययमनुमानगम्योऽर्थः। शब्दगम्यत्वात्त्वस्यार्थस्य यथाशब्दमिह भवितव्यम्। शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम्। ब्र० सू० ४/१/२७, शां० भा०, पृ० ५९
५४. कार्यानुमानपरतन्त्रमिदं हि शास्त्रं
शास्त्रस्य नोपकरणं तदितीक्षमाणाः।
तद्दुर्घटं न खलु कारणमद्वितीयं
चैतन्ययुक्तमिति कार्यवशात् प्रतीमः।। सं० शा० श्लो० ५३९
५५. पं० पा० वि०, पृ० ५२०
५६. सुखदुःखादिवत् प्रेक्षापूर्वोत्पादितकार्यतः।
अभिन्नहेतूपादानं जगदित्यनुमानतः।। अ० सि० सि० सा० २/६०, पृ० १५३-१५४
५७. उपादानता चेतनस्यापि दृष्टा
यथा स्वप्नसर्गे विचित्रा प्रतीचः।
यथा चोर्णनाभस्य सूत्रेषु पुंसां
यथा केशलोमादिसृष्टौ च दृष्टा।। सं० शा० श्लो० ५४५
५८. अचेतनो यथा जालः ऊर्णनाभेः सचेतनात्।
आकाशादिजगत् कार्यमात्मनश्चेतनात्तथा।। बृ० उप० भा० वा०, पृ० ६१८
५९. तस्य मायाद्वारैव सिद्धत्वात्कुत्र परमाण्वाद्यपेक्षा। अ० ब्र० सि०, पृ० ६
६०. परमाणूनां परिच्छन्नत्वाद्यावत्यो दिशः षडष्टौ दश वा तावद्भिरयवैः सावयवास्ते स्युः। सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत। ब्र० सू० शा० भा०, पृ० ६७४
६१. क्रियाशून्यं च यद्वस्तु तच्चाकारकमिष्यते। बृ०उप०भा०वा० २/१/४०१, पृ० ६१९
६२. ब्र० सू० २/२/३९-४० शां० भा०
६३. भिन्नं चेत् कारणात् कार्यं कार्यकारणता तयोः।
पृथक् प्रसिद्धयोः केयं हिमवद्विन्ध्ययोरिव।। बृ० उप० भा० वा० २/१/३९९, पृ० ६२९
६४. अथाभिन्नं तदैकत्वात् कार्यकारणता कुतः।। तदेव २/१/४००, पृ० ६२९
६५. कारिकावली, का० ११५
६६. ब्र० सू० २/२/३८ शा० भा०
६७. "हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादि-

वदनीश्वरत्वं प्रसज्येत। प्राणिकर्मापेक्षितत्वाददोष इति चेत्? न, कर्मेश्वरयोः प्रवर्त्य-प्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। ब्र० सू० २/२/३८ शा० भा०, पृ० ७५६-५७

६८. तस्मात् स्वतन्त्रोपीश्वरः कर्मभिः प्रवर्त्यत इति दृष्टविपरीतं कल्पनीयम्। भामती, पृ० ७८७

६९. चक्षुष्मता ह्यन्धो नीयते, नान्धान्तरेण तथेहापि द्वावपि प्रवर्त्याविति कः कं प्रवर्तयेदित्यर्थः। भामती, पृ० ७५७

७०. स्वार्थप्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यम्।
तदेव, शां० भा०, पृ० ७५८

७१. ब्र० सू० २/२/४१ शा० भा०

७२. बुद्ध्यादयो नवगुणा नित्या एवेश्वरस्य चेत्।
नित्येच्छावान् जगत् सृष्टौ प्रवर्ततैव सर्वदा।। मा० उ० २/५४

७३. यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय बाह्यं किञ्चित् प्रयोजनं स्वभावादेव सम्भवन्ति। ब्र० सू० २/१/३३ शा० भा० पृ० ६१०

७४. यतोऽपूर्वस्य संसिद्धौ प्रमाणं नोपपद्यते। बृ० उप० भा० वा० ३/८/१४६, पृ० ८६।

७५. क्रिया हि द्विविधा दृष्टफलादृष्टफला च। दृष्टफलापि द्विविधाऽनन्तरफलाऽऽगामिफला च, अनन्तरफलागतिभुजिलक्षणा। कालान्तरफला च कृषिसेवादिलक्षणा। तत्रानन्तरफला फलापवर्गिण्येव कालान्तरफला तूत्पन्नप्रध्वंसिनी। के० उप० शा० भा०, पृ० ४८ (१४/३/१)

७६. सेव्यात् सेवाफलप्राप्तिर्दर्शनान्नत्वपूर्वतः। बृ० उप० भा० वा० ३/८/१४६, पृ० ८६१

७७. न चोभयन्यायव्यतिरेकेण स्वतन्त्रं कर्म ततो वा फलं दृष्टम्। तथा च कर्मफलप्राप्तौ न दृष्टन्यायहानमुपपद्यते। के० उप० शा० भा०, पृ० ४८

७८. सर्वकर्मफलप्राप्तिरीश्वरादेव नान्यतः।
इत्याह भगवान् व्यासः सर्वज्ञोऽपि महामतिः।। बृ० उप० भा० वा०, पृ० ६८१

७९. स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं सम्पादयतीत्युपपद्यते। ब्र० सू० ३/२/३८, शां० भा०, पृ० ९६२-९६३

८०. अदृष्टं निष्प्रमाणं च दातुं शक्तिरथास्य च। बृ० उप० भा०, पृ० ८६२

८१. यथा लौकिकसाक्षी कस्यचिज्जयहेतुरन्यस्य पराजयहेतुरपि न रागादिमान् कथ्यते यथोपलब्धभाषित्वात्। तथेश्वरः क्रियादिसाक्षी रागादिमान्न भविष्यति। अननुरूपादातृत्वात्। के० उप० शा० भा० आनन्दगिरिटीका, पृ० ४८

८२. सेव्यबुद्धिवत् सेवकेनेश्वरबुद्धौ तु संस्कृतायां यागादिकर्मणा विनष्टेऽपि कर्मणि सेव्यादिवेश्वरात् फलं कर्तुर्भवतीति युक्तम्। के० उप० शा० भा०, पृ० ४९

८३. श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम्।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते।। त० प्र०, पृ० २७३

८४. महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। ब्र० सू० १/१/३, शां० भा०, पृ० १०९-१०
८५. पुरुषप्रणीतत्वमात्रसाधने सिद्धसाधनत्वम्। त० प्र०, पृ० २७५
८६. प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथासिद्धिः। त० प्र०, पृ० २७६
८७. नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्चाश्वमेधो भवति। अग्निर्वा क्लेदयति, आपो वा दहति तद्वत्। ब्र० सू० शा० भा० भामती, पृ० ११२
८८. यथात्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः, एवं सर्गान्तरेष्वपीति। तदेव, पृ० ११२-११३

## चतुर्थोऽध्यायः ( भाग ङ )

# विशिष्टाद्वैतवेदान्तदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

विशिष्टाद्वैतवेदान्तस्य प्रवर्त्तकाः रामानुजाचार्याः। शङ्कराचार्यो यदाऽद्वैतवेदान्त-सिद्धान्तं प्रत्यपीपदत् तदनन्तरं रामानुजाचार्यैः विशिष्टाद्वैतसिद्धान्तः प्रवर्तितः। प्रो० हिरियन्नामहोदयः मैक्समूलरमहोदयानां शब्देषु वदति "रामानुजाचार्यो विशिष्टाद्वैतवेदान्तं प्रवर्त्त्य हिन्दुभ्यः तेषामात्मनः प्रत्यावर्तयत्"[1] शङ्कराचार्यस्तु जीवेश्वरयोरभेदं प्रतिपाद्य जीवात्मनामस्तितामेव तिरोहितामकार्षीत्। रामानुजाचार्यो जडजीवेश्वराणां त्रयाणामप्यस्तितां स्वीकुर्वन् जडजीवयोः विशेषणत्वं स्वीकरोति। विशिष्टस्य चाभेदमङ्गीकरोति फलतश्च विशिष्टाद्वैतं भवति सिद्धम्। अग्रे च संक्षेपेण मतस्यास्य सिद्धान्ताः प्रतिपाद्यन्ते तत्त्वमीमांसादृष्ट्या।

### तत्त्वमीमांसा

रामानुजमते द्रव्याद्रव्यभेदेन तत्त्वानां द्वैविध्यं भवति। उपादानं द्रव्यपदेनोच्यते अवस्थाश्रयश्चोपादानपदेन।[2] अभिप्रायोऽयमेव यद्यस्मिन् परिमाणो भवति स द्रव्यपदेनोच्यते। द्रव्याणाञ्च षड्भेदाः-प्रकृति, काल, धर्मभूतज्ञान, नित्यविभूति, जीव, ईश्वरभेदात्।[3] अद्रव्याणां संयोगरहितत्वं लक्षणम्। अद्रव्याणि च द्रव्याश्रितानि भवन्ति। तेषां सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धसंयोगशक्तयश्चैते दश भेदाः। मूलतो रामानुजीया तत्त्वमीमांसा चिदचिदीश्वरैतत्त्रितयतत्त्वसमाश्रया। चित्पदार्थो जीवः, अचित्पदार्थः प्रकृतिः, एतयोरुभयोर्यदन्तर्यामि तत्त्वं स ईश्वरः। यद्यप्येते त्रयोऽपि पदार्थाः समानतयाऽन्तिमाः किन्तु चिदचितौ तथैवेश्वरमाश्रितौ यथाऽऽत्मानं शरीरमाश्रितं भवति। अत एव रामानुजाचार्यमते चिदचितोरीश्वरशरीरत्वं स्वीक्रियते।

### प्रकृतिः

सत्त्वरजस्तमांस्येते त्रयो गुणा अस्या प्रकृतेः विशेषणभूताः। नित्यविभूत्या

चोर्ध्वदिशि सीमितेयम्।[४] अन्यत् सर्वम् साङ्ख्यदर्शने प्रकृतेः यादृशं स्वरूपं प्रतिपादितम् अत्रापि तादृशमेव स्वरूपं प्रकृतेरस्ति। यादृश्च सर्गक्रमः साङ्ख्यदर्शने प्रतिपाद्यते तादृश एव सर्गक्रमोऽत्रापि। इयं प्रकृतिश्च जीवस्य निवासस्थानम्, जीवस्य परमेश्वरशरीरतया तद्द्वारा च परमेश्वरस्यापि निवासस्थानं भवति।

**कालः**

कालो हि सत्त्वरजस्तमोभिर्विरहितो जडद्रव्यविशेषः नित्यो विभुश्च। भूतभविष्यद्वर्तमानभेदेन चास्य त्रैविध्यमस्ति। वस्तुतस्त्वेतस्यैकत्वमेवास्ति किन्तूपाधिभेदेन त्रैविध्यमुच्यते क्षणदिनमासादयोऽस्य परिणामविशेषाः फलतः परिणामिन इत्युच्यन्ते।[५]

**धर्मभूतज्ञानम्**

स्वयम्प्रकाशत्वेऽचेतनद्रव्यत्वे च सति सविषयत्वमस्य लक्षणम्। विभुत्वे सति प्रभावद्द्रव्यगुणात्मकत्वं विषयप्रकाशो वाऽस्य लक्षणम्। ईश्वरस्य नित्यमुक्त जीवानां च ज्ञानं सर्वदा नित्यं विभु च। बद्धानां जीवानां ज्ञानं तिरोहितं भवति, मुक्तानां पूर्वं तिरोहितं भवत्यनन्तरञ्चाविर्भूतम्। ज्ञानस्य नित्यत्वेऽपि ज्ञानस्य सङ्कोचविकासावस्थामादाय नष्टोत्पत्तिव्यवहारौ भवतः। अत्र च दर्शने द्रव्यत्वगुणत्वयोर्विरोधाभावात् ज्ञानमिदं द्रव्यमित्यप्युच्यते। अवस्थाश्रयस्यैव द्रव्यत्व मस्मिन् दर्शनेऽङ्गीक्रियते। ज्ञानञ्च सङ्कोचविकासावस्थाश्रयं भवति। अतोऽस्य द्रव्यत्वमस्ति।[६]

**नित्यविभूतिः**

शुद्धं सत्वं नित्यविभूतिपदेनोच्यते। इदं शुद्धं सत्त्वं निम्नदेशे परिच्छिन्नं भवति प्रकृत्या, ऊर्ध्वदेशे चापरिच्छिन्नं भवति। वस्तुतः इदं शुद्धं सत्त्वमधिप्रकृति। अनेनैवादर्शजगतः वस्तूनि मुक्तात्मेश्वरादीनां शरीराणि च निर्मितानि भवन्ति प्रकृत्या शुद्धसत्त्वभूतस्य नित्यविभूतेः परिच्छिन्नत्वेऽपि प्रकृतिक्षेत्रेऽपि कुत्रचित् तीर्थादिस्थलेषु देवमूर्तिषु शुद्धसत्त्वं व्याप्तमस्ति।[७]

**जीवः**

जीवाः स्वभावतोऽणवः, नित्याः, स्वयम्प्रकाशाः, परमेश्वराधीनाश्चित्स्वरूपाश्च। धर्मभूतं ज्ञानं जीवैः सर्वदा सम्बद्धं भवति। सुषुप्तावपि नास्याभावो भवति। मोक्षावस्थायां ज्ञानस्याधिकतमो विस्तारो भवति। यदाऽयं मुच्यते संसारबन्धनात् तदा सर्वज्ञतां शाश्वतमानन्दञ्च पुनः प्राप्नोति। एते जीवाश्च विविधाः बद्धाः, मुक्ताः,

नित्यमुक्ताश्च। ते बद्धा उच्यन्ते ये बन्धनं प्राप्ताः, ये च बन्धनं प्राप्य मुच्यन्ते ते मुक्ताः, ये च कदाचिदपि बन्धनं नैव प्राप्ताः अनादिकालतश्च परमेश्वरसेवायां निरताः विष्वक्सेनादयः ते नित्यमुक्ताः इत्युच्यन्ते।[८]

**ईश्वरः**

जीववदयमपि चित्स्वरूपः किन्त्वऽनन्तानन्दयुक्तश्च। चिदचिद्विशिष्टश्चेतन एवेश्वरपदवाच्यो भवति। अयं सर्वाधारः सर्वशेषी सर्वेश्वरः सर्वकर्मसमाराध्यः सर्वकर्मफलप्रदः सर्वकार्योत्पादकः स्वज्ञानस्वातिरिक्तसमस्तद्रव्यशरीरश्च। अयमीश्वरस्सूक्ष्मचिदचिद्वस्तुविशिष्टरूपेण जगतोऽस्योपादानकारणं भवति, सङ्कल्प-विशिष्टरूपेण निमित्तकारणं भवति, कालाद्यन्तर्यामिवेशेन सहकारिकारणं च भवति। यद्वस्तु कार्यरूपेण विकारयोग्यं तद्वस्तूपादानकारणमित्युच्यते, यद्वस्तूपादानकारणं कार्यरूपेण परिणामयति तन्निमित्तमित्युच्यते, यच्च कार्योत्पत्तावुपकरणं भवति तत् सहकारिकारणमित्युच्यते। परमेश्वरशरीरभूतायाः सूक्ष्मायाः प्रकृतेः कार्यरूपेण विकारयोग्यतया परमेश्वरस्योपादानकारणत्वम्, परमेश्वरस्य सङ्कल्पद्वारा परिणामयितृतया निमित्तकारणत्वम्, कालाद्यन्तर्यामितया सहकारिकारणत्वञ्चास्ति। एवमेक एवेश्वरो निमित्तोपादानसहकारिकारणम् भवति। अयमीश्वरो विभुस्वरूपः। विभुत्वं त्रिधा भवति स्वरूपतो धर्मभूतज्ञानतो विग्रहतश्च त्रिधाऽपीश्वरो विभुस्वरूपः। अनन्तोऽप्ययम्। आनन्त्यञ्च त्रिविधिपरिच्छेदराहित्यम्। त्रिविधः परिच्छेदश्च देशतः, कालतो वस्तुतश्च भवति। कल्याणगुणानामाकरो रागद्वेषादिभिर्विरहितश्चायम्।[९]

**जीवेश्वरयोः साम्यम् वैषम्यं च**

प्रत्यक्त्व, चेतनत्व, आत्मत्व, कर्तृत्वादीनि जीवेश्वरयोः सामान्यतो विद्यन्ते। प्रकाशकनैरपेक्ष्येण स्वयमेव स्वस्मै भासमानत्वं प्रत्यक्त्वम्। ज्ञानाश्रयत्वं चेतनत्वम्। आत्मत्वं शरीरप्रतिसम्बन्धित्वम्। कर्तृत्वं सङ्कल्पज्ञानाश्रयत्वम्। एतत् सर्वं यथा जीवे विद्यते तथैवेश्वरेऽपि।[१०] उभयोरस्ति वैषम्यमपि किञ्चित् तानि चेमानि-ईश्वरो विभुः जीवश्चाणुः, ईश्वरो नियामकः जीवश्च नियम्यः, ईश्वर आधारः, जीवश्चाधेयः, ईश्वरो विशेष्यः जीवश्च विशेषणः, ईश्वरः शेषी जीवश्च शेषः, ईश्वरः शरीरी जीवश्च शरीरम्, इत्यादीन्यनेकानि वैषम्यानि सन्ति जीवेश्वरयोः, न्यायपरिशुद्धौ विशेषपदार्थखण्डनावसरे प्रतिपादितानि चैतानि।[११]

**जीवेश्वरयोः सम्बन्धः**

अत्र दर्शने जीवेश्वरयोरनेकविधः, सम्बन्धः प्रतिपाद्यते तथाहि पर

तन्त्रतालक्षणोऽपृथक्सिद्ध्यपरनामधेयःसमवायः, शेषशेषित्वरूपः, स्वस्वामिभावः, भृत्यस्वामिलक्षण इति च नानाविधाः सम्बन्धाः प्रतिपाद्यन्ते।[१२]

## न्यायविशिष्टाद्वैतमतयोरीश्वरस्य तुलना

न्यायविशिष्टाद्वैतमतयोरीश्वरस्य यदि तुलना क्रियते तदा सर्वज्ञत्वसर्वशक्तित्व-परमकारुणिकत्वादिसाम्येऽपि कानिचन वैषम्यानि समुपस्थितानि भवन्ति। न्यायदर्शन ईश्वरोऽनुमानप्रमाणेन सिद्धिमर्हति, अनुमानेन चेश्वरसिद्धौ सञ्जातायां शास्त्रमपि तत्र प्रमाणं भवति किन्त्वत्र नहीश्वरस्यानुमानिकताऽपि तु शास्त्रैकप्रमाणकतैव। नहीश्वरस्य निमित्तकारणत्वमुपादानकारणत्वं वाऽनुमानसमधिगम्यम्।[१३] न्यायदर्शनेनोपस्थापित-मनुमानं बहुशो दूष्यते। न्यायदर्शने परमेश्वरस्य क्षित्यादिकर्तृत्वं क्षित्यादिनिमित्त-कारणत्वं स्वीक्रियते किन्तु विशिष्टाद्वैतवेदान्तदर्शने न केवलं क्षित्यादिकर्तृत्वं क्षित्यादिनिमित्तकारणत्वमेव स्वीक्रियतेऽपितु क्षित्याद्युपादानकारणत्वमपि स्वीक्रियते। अपि च न केवलमुपादानत्वमेव प्रेरकत्वनियन्तृत्वप्रकाशयितृत्वानुमन्तृत्वसहकारित्वो-दासीनत्वादिकमपि स्वीक्रियते।[१४] न्यायदर्शने परमेश्वरो जीवकल्पः स्वीक्रियते द्वयोः स्वतन्त्रमस्तित्वम्, न ह्यत्र जीवकल्पः परमेश्वरः किन्तूभयोः केवलं चेतन-त्वादिकमेव समानम्। वस्तुतस्तु जीवान्तर्यामी परमेश्वरः, जीवोऽस्य शरीरभूतः परमेश्वरश्च शरीरी। यथा जीवस्य पाञ्चभौतिकं शरीरं तथैव स्वज्ञानातिरिक्तं स्वातिरिक्तं समस्तचिदचिद्वस्तु परमेश्वरस्य शरीरभूतम्।[१५] न्यायदर्शने परमेश्वरो जगता निरपेक्षः न हि कश्चिदेतादृशः सम्बन्धः परमेश्वरस्य जगता सह, अतो नैयायिकानामियं समस्याऽस्ति यदीश्वरः कथङ्कारं सिसृक्षन् परमाणून् प्रेरयति द्व्णुकादिक्रमेण जगत्सृजनाय किन्त्वत्र नास्त्येतादृशी काचित् समस्या सर्वस्यैव जगत ईश्वरशरीरतयाऽयं सर्वमपि प्रेरयितुं शक्नोति। न्यायदर्शन ईश्वरो जीवकृतानां शुभाशुभकर्मणामधिष्ठाता, अत्र चादृष्टस्यैवास्वीकारान् नह्ययमधिष्ठाता परमेश्वरः किन्तु स्वसङ्कल्पानुसारेण शुभाशुभफलान् प्रददाति। नैयायिकमते वेदानां पौरुषेत्वं स्वीक्रियते अत्र वेदा अपौरुषेया न हि कश्चित् प्रणेता तेषाम्।

## ईश्वरस्यानुमानिकतानिरासः

ईश्वरसत्त्वे प्रत्यक्षस्योपमानस्य वा प्रामाण्यं नैव सम्भाव्यते। केवलमनुमानस्य शास्त्रस्य च प्रामाण्यं सम्भवति तत्रेश्वरे शास्त्रैकप्रमाणकत्वं स्वीकुर्वद्भिः विशिष्टाद्वैतवेदान्तिभिः परमेश्वरेऽनुमानप्रमाणकत्वं नानुमन्यते। नैयायिकाः परमेश्वर-साधनाय यान्यनुमानानि प्रस्तुन्वन्ति तानि हि सर्वाण्यपि विशिष्टाद्वैतिभिर्दूष्यन्ते। तत्र

प्रधानानि प्रस्तूयन्ते-क्षित्यादेः सकर्तृकत्वानुमानम् अदृष्टाधिष्ठातृत्वानुमानम् वेदपौरुषेयत्वानुमानम्।

## क्षित्यादेः सकर्तृकत्वानुमानं न सम्भवति

कार्यत्वेन हेतुना क्षित्यादेः सकर्तृकत्वसाधकान्यनुमानानि "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवत्" "जगत् उपादानाद्यभिज्ञकर्तृकं कार्यत्वात्" एतैर्हेतुभिः साध्यसाधनं तदैव शक्यं यदा कार्यत्वं पक्षे सिद्धं स्यात्, किं च हेतौ व्याप्तिग्रहः स्यात्। नैतच्च विद्यते कार्यत्वं प्रत्यक्षतः क्षित्यादौ सिद्धं नास्ति। यदि भवता (नैयायिकेन) विवादाध्यसितं भूभूधरादि कार्यं सावयवत्वात् घटवत् इति सावयवत्वेन हेतुना कार्यत्वं भूभूधरादेः साध्यते तथैव विवादाध्यसितं भूभूधरादि कार्यं महत्त्वे सति क्रियावत्त्वात्, महत्त्वे सति परिच्छिन्नपरिमाणवत्त्वात् वा इति हेतुद्वयेन वा कार्यत्वं साध्यते। तदपि नैव शक्यम्, यतो हि सावयवत्वं किं नाम? अवयवजन्यत्वं, अवयवसम्बन्धमात्रं वा? यद्यवयवजन्यत्वं सावयवत्वं तदा व्यर्थविशेषणत्वं स्फुटमेव, जन्यत्वमात्रेणापि कार्यत्वस्य (अनित्यत्वस्य) साधयितुं शक्यत्वात्। यदि चावयवसम्बन्धमात्रं हेतुस्तदा नित्यायां जातौ नित्येषु गुणेष्वपि तस्य सम्भवात् व्यभिचारो दुर्वारः।[१६] यदि यथा घटादिषु कृतेषु कार्यदर्शनेनैव कर्तृगतनिर्माण-शक्तिज्ञानवान् पुरुषः पूर्वमदृष्टं विचित्रसन्निवेशं राजभवनमवलोक्यावयवसन्निवेश-विशेषेण तस्यापि कार्यत्वं निश्चिनोति तथैव भूभूधादेरपि कार्यत्वं सिद्धं भवति तेनैव कार्यत्वेन च भूभूधरादीनां सकर्तृकत्वं साधयामः इति वदेत् भवान्। तर्हि प्रश्नोऽयं समुदेति यत् यादृशं साध्यं सपक्षे नियतमवगतं स तादृशमेव साध्यं पक्षे हेतुः साधयति। सपक्षे घटादिषु देहादिमान् कर्ता नियमतोऽवगतः तादृश एव शरीरादिमानेव कर्ताऽत्रापि क्षित्यादौ साधनीयः। शरीरादिमति च कर्तरि स्वीक्रियमाणेऽवश्यमेव बाधः स्यात्, न हि देहादिमान् कश्चित् कर्ता दुर्वाङ्कुरादीन् समुत्पादयन् दृष्टिपथमायाति।[१७] यदि च भवतोच्यते यत् कार्योत्पत्तौ कर्तुर्ज्ञानचिकीर्षाप्रयत्नवत्त्वमात्र-मुपयुज्यते, देहादेः न हि कार्यव्यापकत्वम्, परमेश्वरस्य शरीराभावेऽपि ज्ञानचिकीषा-'प्रयत्नवत्त्वात् क्षित्यादि प्रति कर्तृत्वं सम्भवति तर्हि नैतदपि शक्यम्-

## क्षित्यादिकर्तुरीश्वरस्य ज्ञानादिशून्यत्वापत्तिः

घटादौ शरीरविशिष्टः कर्ता स्वीक्रियते तं परित्यज्य क्षित्यादौ शरीरादिविरहितः कर्ता यथा भवता स्वीक्रियते तथैव घटादौ कर्तुः ज्ञानेच्छाविशिष्टत्वेऽपि क्षित्यादिकर्ता

ज्ञानेच्छाशून्यः कथं नैव स्वीक्रियते। यद्यत्र भवतोच्यते यत् दृष्टान्ते कर्ता ज्ञानेच्छाविशिष्टोऽस्त्यतः पक्षेऽपि ज्ञानेच्छाविशिष्टेनैव कर्त्रा भाव्यम् तदा त्वेतदपि वक्तुं शक्यते यत् दृष्टान्ते कर्ता शरीरी दृष्टोऽतः पक्षेऽपि शरीरिणा भाव्यम्। यदि दृष्टान्तमुपेक्ष्य क्षित्यादौ पक्षभूते शरीररहितः कर्ता स्वीक्रियते तदा तयैव रीत्या ज्ञानेच्छारहितः कर्ता कथं न स्वीक्रियते। अत्र नैयायिकाः समादधति यत् कार्यं प्रति प्रयत्नवतः समुपस्थितिरावश्यकी, प्रयत्नार्थं च ज्ञानेच्छयोरावश्यकता एतत्त्रितयार्थं च शरीरावश्यकता, अतः घटादिकर्तुः भवति शरीरापेक्षा क्षित्यादिकर्तुरीश्वरस्य ज्ञानेच्छायत्नानां नित्यत्वेन नास्ति शरीरापेक्षा, तेषां नित्यतया शरीरनिरपेक्षत्वात्। अतोऽशरीरी क्षित्यादिकर्ताऽभ्युपेयः। किन्त्वत्र प्रश्नो भवति यत् ज्ञानेच्छायत्नादीनां नित्यत्वेन शरीरनिरपेक्षत्वात् यथा शरीरापेक्षा न भवति तथैव परमेश्वरप्रयत्नस्य नित्यत्वेन ज्ञानेच्छानिरपेक्षत्वमुपपद्यते। अनया रीत्या केवलं प्रयत्नमात्रवतैव क्षित्यादिकर्त्रा निर्वाहसम्भवे न हि तस्य ज्ञानेच्छावत्त्वं स्वीकार्यम्।[१८] तथा चेश्वरस्य क्षित्यादिकर्तृत्वेन साधने ज्ञानेच्छाविरहितस्य प्रयत्नमात्रवत एवेश्वरस्य सिद्धिः स्यात्। अत्र नैयायिकाः वदन्ति यत् नहि प्रयत्नस्य सविषयकत्वं स्वाभाविकं ज्ञानवत् अपितु ज्ञानस्य, इच्छायाश्च सविषयकत्वेनैव प्रयत्नस्य सविषयकत्वं भवति। अतः परमेश्वरस्य यत्नस्य क्षित्यङ्कुरादिविषयत्वसम्पत्तये परमेश्वरे समानविषयकस्य ज्ञानस्य समानविषयिकाया इच्छायाश्च सत्त्वमावश्यकम्। यदि चेश्वरीयप्रयत्नस्य स्वत एव सविषयकत्वं स्वीक्रियते तदा प्रयत्नस्य ज्ञानत्वमापन्नं भवति। किन्तु नैतदपि साधुतां भजते। विशिष्टाद्वैतिनोऽत्र समाक्षिपन्ति यत् सुषुप्तावस्थायां जीवस्य श्वासप्रश्वासौ केन प्रयत्नेन प्रचलतः सोऽयं प्रयत्नः जीवनयोनिनाम्नाभिधीयते। अयं जीवनयोनिप्रयत्नो भवता नैयायिकेन नहि ज्ञानेच्छाजन्योऽङ्गीक्रियते यतो हि सुषुप्तावस्थायां ज्ञानेच्छे नैव प्रभवतः। सोऽयं जीवनयोनिप्रयत्नः श्वासप्रश्वासविषयको भवति, कुतो भवति? नहि तस्य यत्नस्य ज्ञानसविषयकतया सविषयकत्वम् तदा ज्ञानाभावात् किन्तु स्वत एव सविषयकत्वम्। अन्यायाः गतेरभावात् अदृष्टवशादेव जीवनयोनियत्नस्य सविषयकत्वं स्वीकुर्वन्ति नैयायिकाः। तर्ह्यत्रापि प्रश्नोऽयं समुदेति यत् यथाऽदृष्टवशादेव जीवनयोनियत्नस्य स्वतः सविषयकत्वं भवति प्रयत्नस्वीकारेऽपि ज्ञानचिकीर्षानैरपेक्ष्यम्। तथैवात्रापि कथं न स्यात् परमेश्वरीयप्रयत्नस्य क्षित्यादि- विषयकत्वम्?[१९] काऽऽवश्यकता प्रयत्नस्य सविषयकत्वसम्पत्तये ज्ञानेच्छयोः? नैयायिकेनापि नित्यज्ञानचिकीर्षाप्रयत्नानां सर्वदा सर्वविषयकत्वेन युगपदेव समस्त-कार्योत्पत्त्यभावार्थमदृष्टेनैव नियमः क्रियते।

## नित्ययत्नमात्रवत एव कर्तृत्वस्वीकारेऽपि दोषः

यदि च नित्ययत्नमात्रवानेव कर्ता स्यात् क्षित्यादेः का क्षतिः? इत्युच्यते तदा प्रतिवक्तव्यमेतत्-नित्ययत्नमात्रेणैव परमेश्वरे प्रवर्तमाने कथङ्कारमीश्वरस्य कर्तृत्वं स्यात् अबुद्धिपूर्वकप्रवृत्तत्वात्, अनिच्छापूर्वकप्रवृत्तत्वाच्च।[२०] यश्च बुद्धिपूर्वं प्रवर्तत इच्छापूर्वं च प्रवर्तते स एव कर्तेत्युच्यते। एवं रीत्या परमेश्वरस्य तदभावात् कर्तृत्वं नैव घटते। अपि च जीवनयोनियत्नं प्रति यथा जीवस्यैवादृष्टविधया कारणत्वं स्वीक्रियते तथैव जीवानामेवादृष्टविशेषोत्पन्नयत्नवतां क्षित्यादेः कर्तृत्वं सम्भवति नित्ययत्नतदाधारकल्पनेन किम्? यादृशैरदृष्टैः सहकृतः शरीरनिरपेक्ष ईश्वरः कर्ता तादृशैरेवादृष्टैः सहकृताः जीवाः एव कर्तारः कथं न भवन्तु? अतोऽदृष्टवद्भिर्जीवैरेव क्षित्यङ्कुराद्युत्पत्तिसिद्धौ सिद्धसाधनता दुर्वारा। जीवातिरिक्तस्य कर्तुः कल्पनेऽनिष्टं प्रसज्यते तथाहि एककर्तृकतया प्रसिद्धं यद् घटादि तेषां द्विकर्तृकत्वमायातम् क्षित्यादिकर्तृतया कल्प्यमानस्य परमेश्वरस्य प्रयत्नः परिच्छेदकाभावात् सर्वविषयको भवति तथा च घटादिकं सपक्षं प्रति कुलालस्य परमेश्वरस्य चोभयस्य कर्तृत्वं भवति एवं सपक्षस्य घटादेः द्विकर्तृकत्वे, पक्षेऽपि द्विकर्तृकत्वमेव साधनीयम्। ततश्च सपक्षस्य त्रिकर्तृकत्वं स्यात् एवं क्रमेणानन्तेश्वरकल्पनापत्त्या महतीयमव्यवस्था प्रसज्यते।[२१] एकेनैवेश्वरेण विश्वसृजनसम्भवे द्वितीयस्येश्वरस्य स्वीकारो निष्फल इति चेत्? तदा जीवैरेवादृष्टद्वारा कर्तृभिः सर्वकार्यसिद्धौ गौरवभयेन एकस्मिन्नपीश्वरे त्याग एवोचितः।[२२]

## ईश्वरस्य ज्ञानादिनित्यत्वाङ्गीकारेण दृष्टविपरीतं कल्प्यते

क्षित्यादिकं प्रति कर्तुरावश्यकतां प्रतिपादयता भवता नैयायिकेन कथं तावत् कर्तुः शरीरित्वाशङ्का निवर्त्यते? कार्यं प्रति ज्ञानेच्छाप्रयत्नवानपेक्षितो भवति नहि शरीरिणोऽपेक्षा काचिदत्रास्ति। लोके कुलालादेः ज्ञानेच्छाप्रयत्नानामनित्यतया तदर्थं भवति शरीरापेक्षा कार्यं प्रति च ज्ञानेच्छाप्रयत्नवत एवापेक्षितत्वेन परमेश्वरस्याशरीरिणोऽपि क्षित्यादिकर्तृत्वं सम्भवति। अत्र तावत् पृच्छ्यते विशिष्टाद्वैतिना यत् यज्ज्ञानादीनां नित्यत्वं कल्पयति भवान् तद्दृष्टं वा कल्पितं वा? दृष्टमिति तु वक्तुं नैव शक्यते यदि च द्वितीयः कल्पः तर्हि नैषोऽपि शक्यः दृष्टविजातीयस्य कल्पयितुमशक्यत्वात्, ज्ञानस्य सर्वत्रानित्यत्वदर्शनान्नहि परमेश्वरज्ञानस्य नित्यत्वं स्वीकर्तुं शक्यम्। अन्यथा भवता नैयायिकेन वैशेषिकेण च विभुद्वयसंयोगस्य यः निषेधः क्रियते-विभुद्वयसंयोगस्य संयोगकारणानामन्यतरकर्मोभयकर्मसंयोगानाम-सम्भवात् विभुद्वयसंयोगो नास्तीति तथाहि संयोगं प्रति त्रयाणां कारणत्वं भवति

अन्यतरकर्मणः। उभयकर्मणः संयोगस्य वा विभुद्वयसंयोगो न ह्यन्यतरकर्मजो भवितुमर्हति न वोभयकर्मजः विभुद्रव्ये कर्मासम्भवात्, संयोगजः संयोगस्त्ववयवसंयोगा-दयवयिसंयोगात्मको भवति। विभुद्रव्यस्यावयवाभावात् नैतदपि शक्यम्। सोऽयं निषेधोऽनुचितः। यथा तत्र कारणाभावात् कार्यस्याभावमङ्गीकरोति भवान् तथैवात्रापि ज्ञानकारणानामिन्द्रियादीनामभावात् परमेश्वरे ज्ञानाभाव एव स्वीकार्यः। नित्यत्वात् परमेश्वरज्ञानस्य कारणनैरपेक्ष्यमित्युच्यमाने विभुद्वयसंयोगविषयेऽपि वक्तुं शक्यमेतत्[२३] तथाहि भवतां कल्पेऽत्रार्धजरतीयन्यायः समुपस्थितो भवति।

अपि च, न केवलमेतावदेव दृष्टविपरीतं कल्प्यते, न केवलमेतावत्येव सिद्धान्तहानिः किन्त्वन्यापि। तथहि नैयायिकानामस्ति राद्धान्तः-ज्ञानस्य प्रामाण्यं कारणगुणाधीनम् अत्र चेश्वरज्ञानस्य नित्यतया नहि किञ्चिदपि कारणमस्ति परमेश्वरज्ञानस्य। फलतः नहीश्वरज्ञानस्य प्रामाण्यं कारणगुणाधीनं किन्त्वीश्वरीयं ज्ञानं तदीयं प्रामाण्यं च निष्कारणकमिति व्यवस्थाप्यते तथा ह्येतत् दृष्टविपरीतं कल्प्यते सिद्धान्तहानिश्च।[२४]

अपि च, भवता ज्ञानेच्छाकृत्यादीनां त्रयाणां नित्यत्वं स्वीकुर्वताऽपि स्वीक्रियते यत् ज्ञानं हि सविषयकं सत् चिकीर्षायाः चिकीर्षा च प्रयत्नस्य विषयं नियच्छति किन्त्वत्र प्रश्नोऽयं भवति यत् यत्र ज्ञानेच्छाकृतीनामनित्यता तत्रैष नियमः सम्भवति किन्तु यत्र एतेषां त्रयाणामपि नित्यता तत्र कुतः स्यादेष नियमः। यतो हि "ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः" इति न्यायेनेच्छायाः ज्ञानजन्यत्वेन ज्ञानमिच्छाया विषयं नियच्छति, इच्छाजन्यत्वेन चेच्छा प्रयत्नस्य विषयं नियच्छति। इह तु ज्ञानस्य नहीच्छां प्रति जनकत्वं, न वेच्छायाः प्रयत्नं प्रति कुतस्तर्हि विषयं नियच्छेत्? सामानाधिकरण्यमात्रेण विषयनियमनं स्वीक्रियते चेत् तदाऽन्यानामपीश्वरगुणानां जीवगुणानां च सविषयत्वं प्रसक्तं भवति।[२५]

## अनुमानेन कीदृशः कर्ता साध्यते

क्षित्यादीनां सकर्तृकत्वं साधयता भवता कीदृशः कर्ता साध्यते अर्थात् सकर्तृकमित्यनेन किं विवक्षितम्? उपादानादिसमस्तकारणविषयज्ञानादिमान् कर्तृत्वेन विवक्षितः, अथवा कतिपयविषयज्ञानवान् विवक्षितः, किं वा सामान्यतो ज्ञानादिवान् कर्तृत्वेन विवक्षितः? अत्र यदि प्रथमः पक्षः तर्हि व्याप्तिरेव सिद्धा न भवति यतो हि तदा व्याप्तिरेवं स्यात् "यत् कार्यं भवति तत् स्वोपादानादिसमस्तकारणविषय-ज्ञानादिमज्जन्यं भवति" दृष्टान्तस्थले घटादौ कार्यत्वन्त्वस्ति किन्त्वीदृशकर्तृजन्यत्वं

नास्ति कुलालादयः घटादिहेतुभूतादृष्टेश्वरादीन् नहि प्रत्यक्षीकुर्वन्ति जानन्ति वा। यदि च द्वितीयः पक्षस्तदाऽपि नहीश्वरसिद्धिः यतो हि तदा व्याप्तिरेवंविधा भविष्यति यत्-यत् कार्यम् तत् उपादानादिकतिपयकारणविषयज्ञानादिमज्जन्यम्। अनया व्याप्त्या केवलमेतदेव सिद्धं भवति यत् क्षित्यादिकं स्वोपादानादिकतिपय-कारणविषयज्ञानादिमज्जन्यम् जीवोऽपीदृशः कर्ता भवितुमर्हति। नानया व्याप्त्या सर्वज्ञः कश्चिदीश्वरः सिद्ध्यति। तृतीये पक्षेपीदृश्येव गतिः यतो ह्यस्मिन् पक्षे व्याप्तिरेवंविधा भविष्यति यत् यत् कार्यं तत् ज्ञानादिमत्कर्तृजन्यम्। क्षित्यादेः जीवजन्यत्वेऽपि स्वीकृते ज्ञानादिमत्कर्तृजन्यत्वं सिद्धमेव भवति। अतो नानयाऽपि व्याप्त्या क्षित्यादेः सकर्तृकत्वसाधनमुखेन सर्वज्ञेश्वरसिद्धिः सम्भवति।[२६]

**सकर्तृकत्वसाधकः कार्यत्वहेतुः हेत्वाभासः**

कार्यत्वहेतोराभासतां प्रतिपादयन् विशिष्टाद्वैती वदति यत् शरीराजन्यत्वेन हेतुनाऽत्र सत्प्रतिपक्षः तथाहि यथा भवान् नैयायिकः "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्" इति प्रयुङ्क्ते तथैव "क्षित्यादिकं अकर्तृकं शरीराजन्यत्वात् आकाशवत्" इत्यापि प्रयोक्तुं शक्यते। अपि च, शरीरजन्यत्वेन सोपाधिकताऽपि भवदुक्तानुमानस्य। नह्येतौ दोषौ वारयितुं शक्येते। तथाहि-यत्र यत्र सकर्तृकत्वं तत्र तत्र च शरीरजन्यत्वम्, यत्र यत्र कार्यत्वं नहि तत्र सर्वत्र शरीरजन्यत्वमेवं साध्य-व्यापकत्वे सति साधनाव्यापकत्वात्मिकोपाधिरापद्यते। अतो नहीदमनुमानमीश्वरं साधयितुमर्हति।

अत्र नैयायिकाः सत्प्रतिपक्षानुमाने हेतुविधयोपस्थापिते शरीराजन्यत्वे व्यर्थविशेषणत्वं दोष इति व्युत्पादयन्ति।[२७] नैयायिकानामाशयोऽस्ति यत् व्यभिचारवारकं हेतुविशेषणमेव सार्थकं व्यभिचारावारकं हेतुविशेषणं व्यर्थतां भजते। अत्र क्षित्यादेरकर्तृकत्वसाधकानुमाने हेतुविधया योऽयं हेतुरुपस्थाप्यते शरीराजन्यत्वमिति अत्र हेतौ विशेषणीभूतं शरीरपदं न हि व्यभिचारवारकमपितु स्वरूपासिद्धिवारकमस्ति। यदि शरीरविशेषणं नैव प्रदीयते तदा पक्षे क्षित्यादौ हेतोरजन्यत्वस्यासत्त्वात् स्वरूपासिद्धिः स्यात्। अतः स्वरूपासिद्धिवारकत्वेऽपि शरीरेतिविशेषणं व्यभिचारा- वारकत्वेन वैयर्थ्यं भजते। फलतो व्यर्थविशेषणत्वेन दुष्टतया नेदं सत्प्रतिपक्षानुमानं क्षित्यादिपक्षकं सकर्तृकत्वानुमानं रोद्धुं शक्नोति विशिष्टाद्वैतिनश्चैतत् खण्डयन्ति यत्-नास्त्ययं मन्त्रपाठो यत् व्यभिचारवारकमेव हेतुविशेषणं सार्थकं भवति किन्तु यत्किञ्चिद् दोषपरिहारेऽपि यन्नोपयुज्यते तस्यैव वैयर्थ्यमङ्गीकर्तुं शक्यम्। इदं शरीरविशेषणमसिद्धिवारकतया

सार्थकतां लभते, नहीदं व्यर्थविशेषणत्वदोष- दुष्टमनुमानम्। असिद्धवारकत्वेऽपि प्रकृते व्याप्तिप्रतिपादनेऽनुपयोगात् भवतु नामेदमर्थान्तरं नाम निग्रहस्थानम्। किन्तु व्यर्थविशेषणत्वन्तु नास्ति कश्चिदत्र दोषः।[२८]

अपि च, क्षित्यादेः सकर्तृकत्वं साधयता भवता नैयायिकेनापि यत् सकर्तृकत्वं साध्यते तेन किं केवलं कर्तुः सम्बन्धमात्रं विवक्षितम्? यद्येवं तर्हि सिद्धसाधनम्, न्यायमतेऽपि सन्त्यनेके कुम्भादिकर्तारः स्वरूपतः सर्वत्र सम्बद्धाः तैरेव क्षित्यादीनां कर्तृसम्बन्धरूपं सकर्तृकत्वमायातम्, अतो न केवलं कर्तुः सम्बन्धमात्रं विवक्ष्यतेऽपितु सकर्तृकमित्यनेन चेतनव्यापारपूर्वकत्वं साधनीयम्। अधुना व्याप्तिग्रहणावसरे कार्यत्वेन व्यापारपूर्वकत्वेन च व्याप्तिग्रहणं भवति। नात्रास्ति व्याप्तौ कश्चिदुपयोगः चेतन-व्यापारपूर्वकत्वात्मकसाध्यविशेषणीभूतस्य चेतनपदस्य किन्तु सिद्धसाधनत्वनिवृत्तये तदुपादीयते तथैवास्माभिरपि व्यभिचारावारकमपि शरीरपदमसिद्धिवारणाय प्रदीयते। यथाऽस्मन्मते व्यर्थविशेषणत्वमुपपाद्यते भवता तथैव भवन्मतेऽपि व्यर्थविशेषण्त्वं दोष आपन्नो भवति।[२९]

नैयायिकास्तावत् स्वरूपासिद्धिवारणाय शरीरविशेषणे प्रयुक्ते द्वितीयाऽऽपत्ति-र्व्याप्यत्वासिद्धिरापद्यत इत्याक्षिपन्ति-तथाहि शरीराजन्यत्वे याऽकर्तृकत्वस्य व्याप्तिरस्ति सा व्याप्तिः वस्तुनोऽजन्यत्वनिष्ठाऽस्ति। व्याप्तिग्रहावस्थायां शरीरविशेष्णमकिञ्चित् करम्। तथा च विशिष्टस्य व्याप्त्यभावः, शरीराजन्यत्वे या व्याप्तिरस्ति साऽजन्य-त्वत्वावच्छेदेन विद्यते न हि शरीराजन्यत्वत्वावच्छेदेन "सम्भवति च लघौ गुरौ तदभावात्" इति न्यायेन व्याप्यतावच्छेदकीभूतो धर्मोऽजन्यत्वत्वमेव भविष्यति न हि शरीराजन्यत्वत्वम्, तस्य गुरुधर्मत्वात्। अतः व्याप्यताऽपि शरीराजन्यत्वत्वावच्छिन्ने नहि स्वीकर्तुं शक्या। अत्र समाधीयते विशिटाद्वैतिभिः यत् यत्र शरीराजन्यत्वमस्ति तत्र सर्वत्राप्यजन्यत्वमस्ति। फलतो यदि नामाजन्यत्वमकर्तृकत्व व्याप्यं भवति तर्हि शरीराजन्यत्वमप्यकर्तृकत्वव्याप्यं भविष्यत्येव नैतत् वारयितुं शक्यते। अर्थात् "सम्भवति लघौ गुरौ तदभावात्" इति नियमे नास्ति किञ्चिन्मानम्। यत्र लघुगुरुधर्मावेकत्र स्थले तिष्ठतः तत्रैव नियमोऽयमङ्गीकार्यः। यथा "पर्वतोऽग्निमान् नीलधूमात्" इत्यादावेकस्मिन्नेव धूमे धूमत्वनीलधूमत्वयोः समावेशोऽस्ति। अत्र व्याप्यतावच्छेदकं धूमत्वमेव न तु नीलधूमत्वम्। यत्र च नैवमस्ति तत्र नायं नियमः यथा प्रकृतस्थले शरीराजन्यत्वं नाम शरीरजन्यत्वाभावः, अजन्यत्वं नाम जन्यत्वाभावः उभावपि भिन्नौ पदार्थौ। द्वयोरभावयोः प्रतियोगिनोःभेदात् शरीरजन्यत्वाभावत्वं शरीरजन्य-त्वाभावेऽस्ति, जन्यत्वाभावत्वं जन्यत्वाभावे विद्यते। नास्त्युभयोः धर्मयोरेकस्मिन्

समावेशोऽत उभावपि धर्मौ व्याप्यतावच्छेदकौ भवतः अतः व्याप्यत्वासिद्धिदोषः वारितो भवति। यदि च नैवं स्वीक्रियते तदा कलमाङ्कुरात् कलमबीजानुमानमुच्छिद्येत यतो हि व्यतिरेकव्याप्तिरत्र भविष्यति, "यत्र यत्र कलमबीजाभावः तत्र तत्र कलमाङ्कुराभावः" अत्र "यत्र यत्र बीजाभावः, तत्र तत्र कलमाङ्कुराभावः" एवमपि व्यतिरेकव्याप्तिः सम्भवति इति व्यतिरेकव्याप्तौ व्यर्थविशेषणत्वदोष आपद्यते। अत्रापि "सम्भवति लघौ गुरौ तदभावात्" इति न्यायः प्रवर्तयितुं शक्यते। अतो नात्र सत्प्रतिपक्षानुमाने उपाधौ वा व्यर्थविशेषणत्वं व्याप्यत्वासिद्धिर्वाऽऽपद्यते।[३०]

अपि च, न केवलमेतावदेवापितु क्षित्यादेः सकर्तृकत्वसाधनाय कार्यत्वे हेतुविधया प्रयुक्ते व्यतिरेकव्याप्तिर्भवति "यदकर्तृकं तत् कार्यं न भवति" इति। अत्र चाहेतुकत्वमुपाधिः तथाहि यत्र यत्र कार्यत्वाभावस्तत्र तत्राहेतुकत्वमस्ति किन्तु यत्र यत्राकर्तृकत्वं तत्र तत्राहेतुकत्वं नास्ति यतोहि पक्षीभूते क्षित्यादौ सहेतुकत्वं निश्चितमस्ति किन्तु सकर्तृकत्वं निश्चितं नास्ति। यदि क्षित्यादिकमकर्तृकं भवेत् तर्हि तत्राहेतुकत्वस्यासत्त्वेन "यत्र यत्राकर्तृकत्वं तत्र तत्राहेतुकत्वं" इति व्याप्तेरसत्त्वात् साधनाव्यापकत्वस्य स्फुटत्वेनाहेतुकत्वस्योपाधित्वं (सन्दिग्धोपाधित्वं) स्फुटं भवति। यदि च सन्दिग्धोपाधेः दोषत्वं न स्यात् तदा गर्भस्थस्य मित्रातनयस्य श्यामत्वानुमानमपि स्यात् तदानीं शाकाद्याहारपरिणतेरनिश्चितत्वात्। शाकाद्याहार-परिणामस्यानिश्चितत्वेन न भवति श्यामत्वानुमानम्। यदि च सन्दिग्धोपाधिर्दोषो न स्यात्तदाऽनिश्चितत्वेऽपि श्यामत्वानुमानं स्यात्।[३१] अतः सन्दिग्धोपाधेरपि दोषत्वेन नेदं क्षित्यादेः सकर्तृकत्वानुमानं प्रभवति।

अपि च, क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र क्षित्यादिकमित्यत्रादिपदेनेश्वर-घटादिसंयोगोऽपि पक्षीक्रियते न वा? यद्यादिपदेनेश्वरघटादिसंयोगः पक्षीक्रियते तर्हि भागासिद्धिर्दुर्वारा प्रमाणसिद्धस्यैव पक्षीकर्तुं शक्यत्वेन परमेश्वरसिद्धेः पूर्वमीश्वर-घटादिसंयोगस्यासिद्धतया पक्षैकदेशस्यासिद्धेः। यदि चैतदनुमानेन सिद्धो य ईश्वरः तदीश्वरघटसंयोगः पक्षीकृतः तदाऽन्योन्याश्रयः यतो हीश्वरघटादिसंयोगं पक्षकोटौ निवेश्य पूर्वमिदमनुमानं प्रवर्तते, अनुमानप्रवृत्त्यनन्तरमेव चेश्वरघटादिसंयोगः सिद्ध्यति। यदि चेश्वरघटादिसंयोगो नहि पक्षीकृतः इति वदेत् भवान् तर्हि सन्दिग्धव्यभिचारित्वदोष आयाति तथाहीश्वरघटादिसंयोगविषये सन्देहोऽयं वरीवर्त्तते यत् सः सकर्तृको वाऽकर्तृको वेति? यदि चायमकर्तृकस्तर्हि निश्चयेन साध्याभाववान् तस्मिंश्च कार्यत्वहेतोः सत्त्वात् व्यभिचारः। यदि सकर्तृकस्तर्हि नायं व्यभिचारदोषः किन्तु ईश्वरघटादि-संयोगविषये सकर्तृको वाऽकर्तृको वेति सन्देहस्य विद्यमानतादशायां

सन्दिग्धानैकान्तिकता दुर्वारा। अत्र समाधातुं शक्यते यत् घटेश्वरसंयोगधर्मिके सकर्तृकत्वाकर्तृकत्वसन्देहे सत्यपीश्वरसिद्धिरविरुद्धा यतोहीश्वरसिद्धौ सत्यामेव तादृशः सन्देह उत्पत्तुमर्हन्ति किन्तु विशिष्टाद्वैतिनामत्रोत्तरमस्ति यत् तत् संयोगवदन्येषामपि केषाञ्चिदकर्तृकत्वं भवेदिति शङ्कामात्रमपि क्षित्यादीनां सकर्तृकत्वनिश्चयं प्रतिरोद्धुमर्हति। यावत् शङ्कैषा नैव प्रतिनिवर्तते तावत् क्षित्यादीनां सकर्तृकत्वं सेद्धुं नैव शक्यम्।

## अनुमानस्यास्य निर्दुष्टत्वस्वीकारेऽपि नेश्वरसिद्धिः सम्भवति

"तुष्यतु दुर्जनः" न्यायेन कथञ्चित् क्षित्यादीनां कार्यत्वे स्वीकृते सत्युपर्युक्तदोषेषु सत्स्वपि चेदस्यानुमानस्य निर्दुष्टत्वं स्वीक्रियते तदापि नहीश्वरसिद्धिः सम्भवति। यतो हि क्षित्यादीनां कार्यत्वेप्येकदैव क्षित्यादय एकेनैव विनिर्मिता इत्यत्र नास्ति किञ्चिदपि प्रमाणम्। यथा चैकस्य घटस्यैकं कार्यत्वं तस्यैकस्य घटस्य चैकः कर्ता भवति नैवं क्षित्यादीनां समेषामप्येकं कार्यत्वमस्ति येनैक एव कर्ता भवेत् पृथग्भूतेषु कार्येषु कालभेदो दृश्यते कर्तुश्च भेदो दृश्यते, कालस्यैक्यं भवति कर्तुरेकत्वं वा भवतीति नियमोऽत्र नहि दृष्टिपथमायाति।[३३] तथा चात्र स्थले क्षित्यादीनां कालभेदो दृश्यते क्रमशः क्षित्याद्यन्तर्गतानां वस्तूनां समुत्पत्तिरस्तीति सिद्धमेव। अतः कर्तृभेदोऽप्यत्रास्ति कल्पनमेतदुचितत्। नहि कर्तुरैक्यमङ्गीकार्यम्। यदि भवान् वदेत् यत् क्षित्यादीनां कर्तुरनेकत्वेऽपि केषां क्षित्यादिकर्तृत्वं स्वीकार्यम्? नहि क्षेत्रज्ञानां तत् सम्भवति तेषां विचित्रजगन्निर्माणाशक्यत्वात्। अतः कार्यत्वात् क्षेत्रज्ञातिरिक्तस्यैव क्षित्यादिकर्तुः स्वीकार उचितः। क्षेत्रज्ञातिरिक्तस्य कर्तुः स्वीकारे चानेककल्पनानुपपत्तेरेक एव कर्ता स्वीकार्य इति भवत्येकस्य क्षित्यादिकर्तुरीश्वरस्य सिद्धिः। तर्हि नैतदपि युज्यते यतो ह्युपचितपुण्यविशेषाणां क्षेत्रज्ञानां शक्तिवैचित्र्यं लोकेऽस्मिन् दृष्टिपथमायाति, तेषां क्षेत्रज्ञानामेवातिशयितादृष्टसम्भावनया तत्तद्विलक्षणकार्यहेतुत्वं सम्भवति। अतः क्षेत्रज्ञानामेव क्षित्यादिकर्तृत्वस्य स्वीकर्तुं शक्यतया तेभ्योऽतिरिक्तस्यास्यात्यन्तमदृष्टस्य च पुरुषस्य परमेश्वरस्य कल्पनं नहि विचारपदवीमधिरोहति।[३४] क्रमेणैव वेदानामप्युत्पत्तिविनाशौ दृश्येते फलतो दर्शनानुगुण्येनैव कल्पना कर्तव्या तथा च नैकः कर्ता क्षित्यादीनां स्वीकार्यः किन्तु अनेकेषां क्षेत्रज्ञानामेव दर्शनानुगुण्येन कर्तृत्वं स्वीकार्यम्। एककर्तृकत्वं तु साधयितुं नैव शक्यते क्षित्यादीनाम्, लोके सन्ति च कानिचन वस्तूनि यानि चानेकैः कर्तृभिः साध्यन्तेऽतोऽनेककर्तृके रथगोपुरादौ व्यभिचारः स्यात्। केवलं बुद्धिमत्कर्तृकत्वस्य सिद्धत्वात्।[३५]

## जीवानां कर्तृत्वे परमेश्वरस्याकर्तृत्वे च सन्त्यनुमानान्यपि

प्रयोक्तुं शक्यते "क्षित्यादि क्षेत्रज्ञकर्तृकं कार्यत्वात् घटवत्" इति। इदमनुमानं क्षेत्रज्ञकर्तृकत्वं क्षित्यादेः साधयितुं शक्नोति क्षित्याद्यन्तर्गतस्वशरीरकर्तृत्वमपि जीवानां सम्भवत्यनादिसूक्ष्मशरीरसद्भावात् एवमेवेश्वरस्य कर्तृत्वाभावसाधकान्यपि सन्त्यनुमानानि तथाहि "ईश्वरः कर्ता न भवत्यशरीरत्वात् मुक्तात्मवत्" ईश्वरस्य शरीरराहित्यन्तु स्वीक्रियत एव भवतापि। एवमीश्वरस्य क्षित्यादिकर्तृत्वे किञ्चित् प्रयोजनं नैव सम्भवति। अत एवमपि प्रयोक्तुं शक्यते-"ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात् मुक्तात्मवदिति"।[३६] अतो नहीश्वरस्य सिद्धिः क्षित्यादेः सकर्तृकत्वानुमानेन सम्भवति।

## अदृष्टाधिष्ठातृत्वानुमानेनापि नेश्वरसिद्धिः

अदृष्टस्याचेतनत्वान्नहि चेतनाधिष्ठानं विनाऽदृष्टस्य प्रवृत्तिः सम्भवति, अतस्तदधिष्ठाता कश्चित्स्वीकार्यः स चेश्वर इतीश्वरः सिद्ध्यतीति नैयायिकानां सिद्धान्तः। अत्र विशिष्टाद्वैती प्रवदति यदि कश्चिन्नियमोऽत्र स्यात् यत् चेतनाधिष्ठितमेवाचेतनं प्रवर्तते तदा भवानेवमीश्वरं साधयितुं शक्नोति, नियमश्चैतादृशोऽसिद्ध एव यतोह्ययस्कान्तमणिसमवधाने सति लौहश्चेतनानधिष्ठितोऽपि प्रवर्तते।[३७] अतो नैवमीश्वरोऽनेनानुमानेन साधयितुं शक्यते।

अपि च, प्रश्नो भवति यदिदमधिष्ठानं कदा विवक्षितमस्ति? यद्युच्यते-भवता प्रेरणमेवाधिष्ठानमिति तर्हि नैतत् साधु अमूर्तेषु पदार्थेषु प्रेरणस्याशक्यत्वात्। यद्युच्यते हेतुत्वेन ज्ञानमात्रमेवाधिष्ठानमिति तर्हि नैतदपि साधु ज्ञानमात्रस्यैवाधिष्ठानपदार्थत्वे त्वधिष्ठातुः प्रयत्नोऽकिञ्चित्करो भविष्यति यतो हि न ह्यधिष्ठातुः प्रयत्नोऽधिष्ठाने किञ्चिदप्युपयुज्यते। यदि च ज्ञानादित्रयवतः ज्ञानेच्छाकृतिमतः सन्निधानमात्रमेवाधिष्ठानमित्युच्यते तर्हि ज्ञानेच्छाकृतिमतः परमेश्वरस्य सर्वदैव सन्निधानमस्ति, अतोऽस्याधिष्ठानस्य नित्यत्वेन कार्यस्यापि सदातनत्वमापद्यते। यदि चादृष्टान्नियमोऽत्र स्वीक्रियते तर्हि परमेश्वराधीना नादृष्टप्रवृत्तिर्भविष्यति किन्त्वदृष्टाधीना परमेश्वरप्रवृत्तिर्भविष्यति, अदृष्टमेवेश्वरस्य नियामकं भविष्यति। यदीश्वरसन्निधानप्रभावाददृष्टस्य प्रवृत्तिः स्वीक्रियते तदा सततं प्रवृत्तिः प्रसज्यते। अतोऽदृष्टाधिष्ठायकत्वमपीश्वरस्य नैव सम्भवति।[३८] चेतनानधिष्ठितमेवादृष्टं प्रवर्तत इत्येव स्वीकार्यम्। अदृष्टस्य प्रवृत्तिः स्वकारणापनीतसहकारिकारणसम्पन्नतैव न ह्येतदतिरिक्ता काचिददृष्टस्य प्रवृत्तिरस्ति। एतादृशायां प्रवृत्तौ च नहि कस्यचिच्चेतनस्याधिष्ठानमावश्यकं भवति।

विशिष्टाद्वैतिनां मते चादृष्टनामकः कश्चिन्न्यायदर्शनानुसारी पदार्थः नास्ति। अत्र चेश्वरबुद्धिविशेष एवादृष्टस्थानाभिषिक्तः तदर्थं नास्ति स्वीकारोऽदृष्टस्य, अतो नानेनाप्यनुमानेन ईश्वरसिद्धिः कर्तुं शक्या।

**वेदपौरुषेयत्वानुमानेनापि नहीश्वरसिद्धिः**

विशिष्टाद्वैतिनो वेदानामपौरुषेयत्वमङ्गीकुर्वन्ति। तैः वेदानां पौरुषेयत्वानुमानं दूषयितुं प्रायशस्ता एव युक्तयः प्रदीयन्ते याश्च मीमांसकैरद्वैतिभिश्च प्रदत्ताः। वेद पौरुषेयत्वानुमानेनापि नह्येवं परमेश्वरः साधयितुं शक्यते। तत्वमुक्ताकलापे वेदान्तदेशिकः प्रधनमल्लं क्षित्यादेः सकर्तृकत्वानुमानं पराजित्य डिण्डिमघोषेण निर्वक्ति-

**तस्मादुल्लोकभूमा कथमनुमया विश्वकर्ता प्रसिद्ध्ये**
**च्छास्त्रानुक्तत्वबाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम्॥**"[३९]

अत्र व्याख्याने सर्वार्थसिद्धौ व्याख्यायते यदेवं जगत्कर्तृत्वानुमाने पराहते स्थालीपुलाकन्यायेन समेषां हेतूनां निरस्तप्रायता निगमनव्याजेन स्पष्टीभवति। एवं सिद्ध्यति यत् परमेश्वरो नानुमानेन साधयितुं शक्यते। अत एवानेकेषु स्थलेषु परमेश्वरस्य शास्त्रैकप्रमाणकत्वं प्रतिपाद्यते।[४०]

**नेश्वरः केवलं निमित्तकारणम्**

ईश्वरस्य केवलं निमित्तकारणत्वस्वीकारे केचन दोषाः समुपस्थाप्यन्ते। ते च प्रायशस्त एव येऽद्वैतिभिरुपस्थापिताः।[४१] परमेश्वरस्योपादानकारणत्वमप्यस्तीति प्रतिपादयन्ति विशिष्टाद्वैतिनः। अत्रापि ता एव युक्तय उपस्थाप्यन्ते याश्चाद्वैतिभिरुपस्थापिताः।[४२] किन्त्वन्तरमेतावदेव यदद्वैतिभिः परमेश्वरस्य (ब्रह्मणः) उपादानत्वसम्पत्तये विवर्त्तवादमाश्रीयते, विशिष्टाद्वैतिनश्च परिणामवादमाश्रयन्ते। अद्वैतिनामीश्वरो निर्गुणः विशिष्टाद्वैतिनां सगुणः। समस्तचिदचिद्वस्तुजातस्य जगतः परमेश्वरशरीरतया शरीरे विकारे जायमानेऽपि शरीरी न हि विकारी भवति किन्त्वविकार्य एवावतिष्ठते तथैव अचिद्भूतायां प्रकृतौ परमेश्वरशरीरे विकारे सञ्जातेऽपि परमेश्वरोऽविकार्य एवोच्यते। एवमीश्वरो न केवलं जगतोऽभिन्ननिमित्तोपादानमेवापितु जगत् प्रति कर्तृत्वं, प्रेरकत्वं, नियन्तृत्वं, प्रशासित्वं, प्रकाशयितृत्वं, सहकारित्वम्, अनुमन्तृत्वं उदासीनत्वादिकमपि विद्यत ईश्वरस्य।

**ईश्वरो न जीवात्मसजातीयः**

न्यायवैशेषिकदर्शने परमेश्वरो जीवात्मसजातीयः स्वीक्रियतेऽत्र तु न हि

जीवात्मसजातीयः परमेश्वरः किन्तु जीवात्मनामप्यात्मा सः। जीवात्मानस्तस्य परमेश्वरस्य शरीरभूताः न्यायवैशेषिकदर्शने परमेश्वरजीवयोरत्यन्तं भेदोऽङ्गीक्रियते, विशिष्टाद्वैतदर्शने जीवेश्वरयोः शेषशेषित्वं अपृथक्सिद्धिसम्बन्धः स्वीक्रियते। द्वयोः विशेषणविशेष्य-भावरूपश्च सम्बन्धः स्वीक्रियते। एवं विशिष्टाद्वैतदर्शन मीश्वरस्वरूपं जीवस्वरूपं चैवं स्फुटयति येन द्वयोर्भेदोऽपि विद्यतेऽभेदोऽपि विद्यते। नास्त्यत्यन्तं भेदो न्यायदर्शन-मिव नवाऽत्यन्तमभेदोऽद्वैतवेदान्तदर्शनमिव। स्वगतभेदो विद्यते किन्तु विशिष्टस्याभेदाद-भेदोऽप्यस्ति।

**निष्कर्षः**

निष्कृष्टत एतद्वक्तुं शक्यते यत् न्यायाभिमतेश्वरस्य विशिष्टाद्वैतिभिः स्पष्टं निरासः क्रियते परमशेवरे केवलं शास्त्रस्यैव प्रामाण्यं स्वीक्रियते शास्त्रेणैव च शास्त्रसिद्धस्येश्वरस्य जगदभिन्ननिमित्तोपादानत्वादिकं सिध्यति। न्यायदर्शने स्वीकृतमीश्वरस्य सर्वज्ञत्वादिकं यद्यपि स्वीक्रियते परन्तु तदपि शास्त्रप्रामाण्यादेव। जीवसाजात्यं नहीश्वरस्य किन्तु जीवाद्यन्तर्यामित्वम्, जीवस्यैवेश्वरशरीरत्वञ्च स्वीक्रियते।

## पादटिप्पणी

१. भा० द० की रूप०, पृ० ३८१
२. तच्च द्विविधम्-द्रव्याद्रव्यभेदात्। उपादानं द्रव्यम्। अवस्थाश्रय उपादानम्। य० म० दी०, पृ० ६१
३. य० म० दी०, पृ० ७२
४. तदेव
५. य० म० दी० प० अ०, पृ० १००
६. य० म० दी० स० अ०, पृ० ११७, १२७
७. य० म० दी०, पृ० १०६
८. य० म० दी० अ० अव०
९. य० म० दी० न० अव०
१०. य० म० पी० अ० अव०
११. तत्रापि जीवेश्वरयोरणुत्वविभुत्वनियम्यत्वनियन्तृत्वाधेयत्वाधारत्वविशेषणत्वविशिष्यत्व-शेषत्वशेषित्वशरीरत्वशरीररित्वादिभिरनेकविधैधर्मिभेदेर्व्यावृत्तधीसिद्धौ किमन्येन विशेषेण। न्या० परि०, पृ० ४९८
१२. सिद्धित्रयम् आ० सि०, पृ० १३
१३. एवं चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव जगदुपादानत्वं निमित्तत्वञ्च नानुमानगम्यमिति शास्त्रैकप्रमाणकत्वात्तस्य। वेदान्तसारः, पृ० १३

१४. ईश्वरस्य कार्यं प्रत्युपादानत्वनिमित्तत्ववत् कर्तृत्वप्रेरकत्वनियन्तृत्वप्रकाशयितृत्वानुमन्तृत्वसहकारित्वोदासीनत्वादिकमप्युपपद्यते य० म० दी० न० अव०, पृ० २३८

१५. ---स्वज्ञानस्वेतरसमस्तद्रव्यशरीरित्वमित्यादीनीश्वरलक्षणानि।
य० म० दी० न० अव०, पृ० २१७

१६. एवं सावयवत्वादनित्यत्वाभिधानेऽप्यवयवजन्यत्वं फलितमिति तत्रापि व्यर्थविशेषणता स्यात्। न ह्यवयवैः सम्बन्धमात्रं तेषु समवायमात्रं वा हेतुः, नित्येष्वपि जातिगुणादिषु तत्सम्भवात्। न्यायसिद्धिाञ्जन, पृ० ४३८-९

१७. यथादृष्टोपसंहारे बाधात् -----। न्या० सि०, पृ० ३२१-२

१८. ----अन्यथा ज्ञानेच्छयोरपि त्यागप्रसङ्गात्, नित्यज्ञानस्य शरीरादिनेव नित्यप्रयत्नस्यापि ज्ञानादिना निरपेक्षत्ववचनोपपत्तेः। न्या० सि०, पृ० ४२२

१९. स्वतोविषयप्रावण्ये ज्ञानत्वप्रसङ्गः इति चेन्न, जीवनपूर्वकप्रयत्नवदुपपत्तेः। अदृष्टात्तत्र नियम इति चेत्, अत्रापि तथास्तु। तदेव, पृ० ४२३

२०. ----अबुद्धिपूर्वप्रवृत्तस्य कथं स्वतन्त्रः कर्तेति लक्षणयोगः, कथन्तरामीश्वरत्वयोगः इति चेत्, अनिच्छापूर्वप्रवृत्तावपि सममेतत्।।---त० मु० क० सवार्थसिद्धिः, पृ० १२७

२१. --क्षित्यादिकर्तरि साध्यमाने विश्वकर्त्रा तेन घटादेः द्विकर्तृकत्वमायातम्, ततस्तद्दृष्टान्तेन पक्षस्य द्विकर्तृकत्वमापतेत्, ततस्सपक्षस्य त्रिकर्तृकत्वं स्यात्---। त० मु० क० सर्वार्थसिद्धिः, पृ० १२९

२२. एकेनेश्वरेण विश्वकार्यसिद्धौ द्वितीयक्लृप्तेर्निष्फलत्वात् तत्परित्याग इति। तत्र गौरवभिया त्याग एकस्मिन्नपि स्यात्----। तदेव

२३. नित्यं ज्ञानं विभोस्तन्न नियतविषयं तेन नान्यार्थनं चे
न्नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात्।। त० मु० क०, पृ० १२६, द्र० सर्वार्थसिद्धिः।

२४. ---अन्यत्र ज्ञानं सर्वं सकारणकं तत्प्रामाण्यं च कारणगुणाधीनमिति स्थापयद्भिरीश्वरज्ञानं तत्प्रामाण्यं च निष्कारणकमिति दृष्टविपरीतं कल्प्यते। तदेव, पृ० १२७

२५. धीर्हि जनयित्री चिकीर्षायाः विषयञ्च नियच्छेत्, सापि तादृशी यत्नस्य। इह तु जनकत्वाभावान्न ततस्तद्विषयनियमः, सामानाधिकरण्यमात्रात्तन्नियमे जीवेश्वरगुणान्तराणामपि सविषयत्वप्रसङ्ग इति भावः। तदेव, पृ० १२८

२६. न्या० सि०, पृ० ४३०-१, त० मु० क० स० सि०, पृ० १२९-३०

२७. आ० त० वि०, पृ० ३७९

२८. न्या० सि०, पृ० ४३२-४३३

२९. ---क्षित्यादिकं सकर्तृकमित्यत्र न हि कर्तृमात्रं साध्यम्, सिद्धसाधनत्वात्।
----अतः सकर्तृकमिति चेतनप्रयत्नपूर्वकं साध्यम्। तत्र व्यापारपूर्वकत्वनिवृत्तिमात्रेण कादाचित्कत्वमित्युपपत्तौ तद्विशेषणवैयर्थ्यं स्यात्। त० मु० क० स० सि०, पृ० १३१

३०. न्या० सि०, पृ० ४३४-४३५

३१. किं च, यदकर्तृकं तत् कार्यं न भवतीति व्यतिरेकव्याप्तावहेतुकत्वमुपाधिः। अहेतुकत्वमकर्तृकत्वव्यापकमिति चेन्न, पक्षे सन्दिग्धत्वेनोपाधित्वानपायात्। अन्यथा शाकाद्याहारपरिणतेरप्यनुपाधित्वेन मैत्रीतनयस्य श्यामत्वमनुमीयेत।
न्या० सि०, पृ० ४४४-४४६

३२. न्या० सि०, पृ० ४४७-४४९

३३. --पृथग्भूतेषु कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात्। श्रीभाष्यम्, पृ० १८९

३४. --"क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन, तेषामेवातिशयिता-दृष्टसम्भावनया च तद्विलक्षणकार्यहेतुत्वसम्भवात् तदतिरिक्तात्यन्तादृष्टपुरुषकल्पना-नुपपत्तेः। श्रीभाष्यम्, पृ० १८९

३५. तदेव, पृ० १९०

३६. तदेव, पृ० १९१

३७. --नियमासिद्धेः। दृश्यते ह्ययस्कान्तादिभिरप्ययःप्रभृतेः प्रवर्तनम्। न्या०सि०पृ० ४४०

३८. न्या० सि०, पृ० ४४१

३९. त० मु० क० नायकसरः, २३ श्लोकः, पृ० १३२

४०. श्रीभाष्यम् १/१/३, वे० सा० १/१/३

४१. द्रष्टव्य-वे० सा० एवं श्रीभाष्यम् पशुपत्यधिकरणम्

४२. वे० सा०, श्रीभाष्यम् प्रकृत्यधिकरणम्।

## चतुर्थोऽध्यायः ( भाग च )

# माध्ववेदान्तदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

मध्वाचार्येत्यपरनामधेयः आनन्दतीर्थः द्वैतवेदान्तदर्शनेतिसम्प्रदायान्तरं प्रावर्तयत्। अस्य दर्शनस्य तत्त्वमीमांसा मुख्यत उभयविधा क्रियते। अत्र स्वतन्त्रपरतन्त्रेति पदार्थयोर्द्वैविध्यम्। स्वतन्त्रो भगवान् विष्णुः परमेश्वरो निर्दोषोऽशेषसद्‌गुणवान्। परतन्त्रपदार्थयोरपि द्विप्रकारकत्वम् केचन भाववाचकाः केवन चाभाववाचकाः। भाववाचकानामपि द्वौ वर्गौ प्रथमे तावदात्मानो ये च चेतनाः, त आयान्ति द्वितीये वर्गेऽचेतनानि सर्वाणि वस्तूनि आयान्ति। संक्षेपतोऽत्र पदार्थमीमांसाऽग्रिमासु पंक्तिसु वर्ण्यते। पदार्थास्तावद् दशविधाः द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्ति-सादृश्याभावा इति[१] एतेषु पदार्थेष्वपि द्रव्याणि तावद्विंशतिः परमात्म, लक्ष्मी, जीव, अव्याकृताकाश, प्रकृति, गुणत्रय, महत्तत्त्व, अहङ्कारतत्त्व, बुद्धि, मन, इन्द्रिय, मात्रा, भूत, ब्रह्माण्ड, अविद्या, वर्ण, अन्धकार, वासना, काल, प्रतिबिम्बाः। एतेषु पदार्थेषु परिगणितानां गुणानां संख्या निर्धारिता नास्ति ते च गुणाः केचन त एव ये वैशेषिकदर्शने स्वीक्रियन्ते केचन च नवीनाः लघुत्व, मृदुत्व, शम, दम, तितिक्षा, बल, भय, लज्जा, गाम्भीर्य, सौन्दर्यादयः।[३] विहितनिषिद्धोदासीनभेदेन त्रिविधं कर्म[४] किन्तु लक्ष्मीनारायणयोस्तु कर्म लीलया मोहनाय वा भवति।[५] सामान्यं नित्यानित्यभेदेन जात्युपाधिभेदेन च द्विविधं भवति भेदाभावेऽपि सति भेदनिर्वाहको विशेषः। विशेषणयुक्तः पदार्थो विशिष्ट इत्युच्यते हस्तपादाद्यतिरिक्तः, समग्रावयवविशिष्टः पदार्थोऽंशी। शक्तिपदार्थस्य चतुष्प्रकारकत्वम् (१) अचिन्त्य-शक्तिरियं परमात्मन्येव तिष्ठति (२) आधेयशक्तिः सोच्यते याऽन्याहिता भवति विधितः प्रतिष्ठापनेन प्रतिमादौ या शक्तिरुत्पद्यते साधेयशक्तिः। (३) सहजशक्तिरियं कार्यमात्रानुकूला स्वभावरूपा शक्तिः। (४) पदशक्तिः पदपदार्थयोर्वाच्यवाचक-भावसम्बन्धात्मिका।[७] सादृश्यकल्पनायामभावकल्पनायां च नास्ति काचिदपि नवीनता।

**परमात्मा**

परमात्मा भगवान् विष्णुः। सोऽनन्तगुणपरिपूर्णः। सृष्टिस्थितिसंहारादिकर्ता स्वतन्त्रः एक एव नानारूपः। सर्वाण्यपि परमात्मनो रूपाणि पूर्णानि। समस्तैरपि

पदैः सः परमेश्वरो मुख्यया परमया वृत्त्या वाच्यो भवति। जडजीवप्रभृतिभ्यः सर्वेभ्योऽप्यत्यन्तं विलक्षणः। आनन्दात्मकः कल्याणविग्रहवान् दिव्यशरीरश्चतुर्भुजः वैकुण्ठनिवासी। अयमीश्वरो नानाविधानवतारान् गृह्णाति ते च सर्वेऽवतारा अपि पूर्णाः सर्वज्ञाश्च। ब्रह्मादयः लक्ष्मीः मुक्ताश्च जीवात्मानः सत्त्वगुणपरिणामभूतेन शरीरेण वैकुण्ठे धाम्नि परमेश्वरं सेवन्ते।[८]

**लक्ष्मीः**

परमात्मभिन्ना केवलं परमात्माधीना लक्ष्मीः। सेयं देशादिभिरपरिच्छिन्ना नानारूपाणि धारयति दिव्यविग्रहधारिणी नित्यमुक्ता।[९]

**जीवः**

मुक्तियोग्य, तमोयोग्य, संसारिभेदेन जीवानां त्रैविध्यम्। मुक्तियोग्यास्ते जीवा ये नारायणभक्तिपराः। तमोयोग्याः जीवाः दैत्य, राक्षस, पिशाचाधममनुष्याश्च। संसारिजीवाः सर्वदा सुखदुःखव्यामिश्रिताः भवन्ति। स्वीयकर्मानुसारं नीचोच्चभावं प्राप्नुवन्ति स्वर्गे, मर्त्ये, नरके च परिभ्रमन्ति। जीवाः परमेश्वरतो नितान्तं भिद्यन्ते जीवेभ्यश्च भिन्नाः मोक्षावस्थायामपि भिन्नाः विद्यमाना भवति। मुक्तजीवेष्वपि ज्ञानादिगुणैरिवानन्दानुभूतावपि भेदो भवति। जीवाश्चाणुस्वरूपाः नैवः स्वातन्त्र्यमर्हन्ति[१०]।

## अव्याकृताकाशादिशेषद्रव्याणि

अव्याकृताकाशो न्यायवैशेषिकदर्शनाभिमतो दिक् पदार्थः। साक्षिवेद्योऽयं न हि केवलमनुमेय एव शब्दसमवायिकारणत्वेन यतोहि यद्येवं स्यात्तर्हि भवत्याकाशप्रतीतिरतो प्रत्यक्षतोऽपि भवत्याकाशसिद्धिर्न केवलं शब्दकारणतयाऽनुमीयत एव[११]। अयमव्याकृताकाशः नित्य एको व्यापकश्च। लक्ष्मी चास्याभिमानिनी देवता। प्रकृतिः साक्षात् परम्परया वा जगत उपादानकारणम् इयं जडरूपा नित्या व्याप्ता सर्वजीवलिङ्गशरीररूपा। गुणत्रयम् सत्त्वरजस्तमांस्येव। गुणत्रयात्मसमुत्पन्नानि महत्तत्त्वाहंकारसत्त्वबुद्धितत्त्वानि मन इन्द्रियाण्यपि साङ्ख्यदर्शनानुसारीण्येव प्रायशः। तामसादहङ्कारात् पञ्चतन्मात्राः समुत्पद्यन्ते। तन्मात्राभिश्च गगनादयः पञ्चमहाभूताः समुत्पद्यन्ते। ब्रह्माण्डः प्रकृतेः विकृतिः। अविद्या आच्छादिका। अकारादयो वर्णाः नित्याः विभुस्वरूपाश्च। अन्धकारोऽपि द्रव्यम्। वासना संस्कारपदार्थतो भिन्ना, संस्कारो गुणो, वासना तु द्रव्यम्। कालः सर्वकलनाकारी जगतो धारकश्च ज्येष्ठकनिष्ठादिप्रत्ययसमुत्पादकः। प्रकृत्या समुत्पद्यतेऽत एव प्रकृतौ विलीयतेऽपि। प्रतिबिम्बः बिम्बसदृशो दृश्यमानो दर्पणादौ बिम्बाद्भिन्नो भवति[१२]। गुणादिविवेचनेन नास्ति किञ्चित् प्रयोजनमिति तत्त्यज्यते तेषु किञ्चिद्विशिष्टं नवीनत्वमपि नास्ति।

## न्यायमध्वमतयोरीश्वरविषये साम्यं वैषम्यं च

उभयोर्दर्शनयोरेकत्र स्थले मूलमन्तरमस्ति येनोभयोरपि परमेश्वरविषये वैमत्यं भवति तदिदं मूलमन्तरमस्ति यत् नैयायिकः परमेश्वरस्यानुमानिकत्वमङ्गीकरोति माध्वाश्च नहीश्वरस्यानुमानिकत्वमङ्गीकुर्वन्ति। किन्त्वस्ति तथापि केषुचित् स्थलेषूभयोरपि दर्शनयोः साम्यम् तथाहि न्यायमतेऽपि नहीश्वर एव केवलमेका सत्ताऽस्त्यन्येषामपि पदार्थानां सत्ता, माध्वमतेऽपि नहीश्वर एव केवलमेका सत्ता। न्यायमते परमेश्वरो निमित्तकारणमात्रमेवोपादानकारणीभूताः परमाणवः, मध्वमते परमेश्वरो निमित्तमुपादानभूता प्रकृतिः। न्यायमतेऽपीश्वरः सर्वज्ञत्वादिभिर्विभूषितः एक एव मध्वमतेऽपि। किन्त्वस्त्यनेकेषु स्थलेषु वैषम्यमपि तथाहि प्रमुखं वैषम्यमस्ति न्यायमतानुसारिण ईश्वरस्यानुमानसिद्धत्वम्। माध्वमते परमेश्वरस्य शास्त्रेणैव सिद्धिर्भवति। अतो न्यायमे परमेश्वरस्य तादृशमेव स्वरूपं स्वीक्रियते यत्तर्कतः सङ्गच्छते मध्वमते च शास्त्रतो यदपीश्वरस्य प्रतिपाद्यते तत् सर्वमीश्वरस्य स्वीक्रियते तदेव च तर्कतः पोषयितुं प्रयत्नो विधीयते। न्यायदर्शनानुसारी परमेश्वरोऽशरीरी मध्वमते तु शरीरवान् चतुर्भुजः। न्यायदर्शने विभुः परमेश्वरोऽत्रापि विभुः किन्तु वैकुण्ठप्रदेशस्थः। न्यायमते परमेश्वरस्येच्छाज्ञानकृतयो नित्याः किन्तु मध्वमते परमेश्वरेच्छाकृत्योः सम्भवतः नित्यत्वं नास्तीति प्रतीयते यतो हि पूर्णप्रज्ञभाष्ये न्यायभिमतेश्वरनिराकरणावसरे प्रतिपाद्यते यत्-यदीश्वरेच्छा नित्या स्यात्तर्हि प्रलयदशायामपि नित्यत्वात् तस्याः सत्त्वमावश्यकम् तदा परमेश्वरेच्छायाः सत्त्वेऽपि परमाणुकर्माभावादिदानीमपि तन्न स्यात्। इदानीमपि परमाणुकर्म न स्यात्।[१३] न्यायमते परमेश्वरो जीवात्मसजातीयो मध्वमते जडजीवप्रभृतिभ्योऽत्यन्तं विलक्षणः। न्यायमते परमेश्वरो वेदान् प्रतिसर्गं निर्माय प्रवर्तयति मध्वमते वेदा अपौरुषेयाः परमेश्वरः प्रतिकल्पं तानपौरुषेयान् वेदानुपदिशति।

## नानुमानत ईश्वरसिद्धिः सम्भवति

"शास्त्रयोनित्वात्" इति सूत्रं व्याकुर्वन् मध्वाचार्यो लिखति "न चानुमानस्य नियतप्रामाण्यम्" अत्र कूर्मपुराणोक्तं श्लोकद्वयं प्रमाणत्वेनापि निर्दिशति।[१४] अयमस्ति भावो मध्वाचार्यस्य यदनुमानं श्रुतिस्मृतिसहायं तदेव प्रमाणमस्ति, यच्चानुमानं श्रुतिसाहाय्यरहितं न तदनुमानं कुत्रचिदपि निश्चयादर्थं साधयितुं शक्नोति। नैयायिकास्तु प्रथमं श्रुतिस्मृतिसाहाय्यरहितेनानुमानेन परमेश्वरं साधयन्ति तदनन्तरमीश्वरप्रणीतत्वेन वेदानां प्रामाण्यं स्वीकुर्वन्ति। अतोऽत्रानुमानानि माध्वाः सन्दूषयन्ति परमेश्वरसाधकानि।

## न क्षित्यादेः कर्तृत्वानुमानेनेश्वरसिद्धिः

क्षित्यादेः सकर्तृकत्वानुमानं दूषयद्भिः मध्वानुयायिभिः स्वरूपासिद्धिनामको

दोषः प्रथमं दीयते। अत्र प्रश्नोऽस्ति तेषां यत् येषां प्राक्कोटिः (प्रागभावः) उपलभ्यते तेषां कार्यत्वन्तु प्रत्यक्षतः सिद्धं भवति किन्तु भूभूधरादीनां प्रागभावोऽनुपलब्धः तेषां कार्यत्वं कुतः सिद्धं स्यात्?[१५] कार्यत्वेऽसिद्धे कथङ्कारं सकर्तृकत्वानुमानं प्रवर्तेत? सावयवत्वाच्चेत् कार्यत्वं भवान् भूभूधरादौ साधयति तर्हि प्रश्नो भवति सावयवत्वं किं नाम? यदि चेत् सांशत्वमेव सावयवत्वं तर्ह्येतत् तु गगनादावपि विद्यते किन्तु तत्र कार्यत्वं नास्तीति सांशत्वरूपं सावयवत्वं कार्यत्वव्यभिचारी भवतीति नैवं कार्यत्वसिद्धिः भूभूधरादौ कर्तुं शक्या। गगनादेः सांशत्वं कुतश्चेत् तर्हि "गगनादिः सांशः संयोगित्वात् घटवत्" इत्यनुमानेन गगनादेः सांशत्वसिद्धेः।[१६] यदि च द्रव्यारब्धद्रव्यत्वेन कार्यत्वं भवान् साधयति तर्हि तत्त्वकार्यत्ववादिनां प्रत्यसिद्धमेव। द्रव्यसमतवेतद्रव्यत्वेन चेत् कार्यत्वं साधयति भवान् तर्हि नैतदपि शक्यम् यतो हि यथाऽद्रव्यस्य जातेः परममहत् परिमाणादेश्च द्रव्यसमवेतत्वेऽपि सति कार्यत्वं नास्ति तथैव द्रव्यसमवेतस्य द्रव्यस्यापि कार्यत्वं मा भवेत् इत्याशङ्कायां जातायां तन्निवारकतर्कशून्यत्वेनाप्रयोजकताऽस्यानुमानस्य।[१७] मध्यमपरिमाणवत्त्वेनापि कार्यत्वसाधनं नैव कर्तुं शक्यम् यतो ह्यस्यापि हेतोरप्रयोज- कत्वमस्ति विपक्षे बाधकाभावात्, मध्यमपरिमाणवत्त्वमस्तु कार्यत्वंमास्त्वितिशङ्काया अत्रापि निवारकाभावात्। गगनप्रदेशस्य सांशत्वेन मध्यमपरिमाणवत्त्वमप्युपपद्यते तथाहि प्रश्नो भवति यत् यथा सांशत्वेन मध्यमपरिमाणवत्त्वं कार्यत्वाभावे सत्यपि भवति तथैवात्रापि मध्यमपरिमाणवत्त्वेऽपि कार्यत्वं मास्तु। अस्या आशङ्कायाः निवारकः कश्चित्तर्कोऽत्रापि नास्ति। मध्यमपरिमाणवत्त्वं प्रति चावयवसापेक्षत्वमावश्यकं नास्ति फलत्रोऽत्रैषापि शङ्का सम्भवति यत् भूम्यादेरुपलभ्यमानाः भागाः नारम्भकरूपा अवयवाः यथा च गगनस्य प्रत्यक्षत उपलभ्यमाना प्रदेशाः नहि गगनारम्भकाः यथा च कालस्य क्षणदिनमासादयोंशाः एव नत्वारम्भका अवयवाः तथैव भूम्यादेरुपलभ्यमाना भागाः भूमिप्रदेशा एव भवन्तु, अंशा एव भवन्तु न त्ववयवा इत्याशङ्कासमवधाने नास्त्यस्या अपि कश्चिन्निवारकस्तर्क इति कार्यत्वमेव भूभूधरादौ सिद्धं न भवति[१८] कुतस्तेषां सकर्तृकत्वमनुमीयेत? अत एव तत्त्वनिर्णय उक्तम्- "न चानुमानात्तत्सिद्धिः विपर्ययेणाप्यनुमातुं शक्यत्वात्"[१९] तथा ह्यत्रैवमपि शक्यतेऽनुमातुम् "क्षित्यादिकमकार्यमनुपलब्धप्राक्कोटित्वात् गगनादिवत्" इति। यदि च घटादौ कार्यत्वसावयवत्वयोर्दर्शनात् भूभूधरादेरपि सावयवत्वमङ्गीकृत्य तेन कार्यत्वं भवान् साधयति चेत् तर्हि रूपादौ कार्यत्वमप्यस्ति निरवयवत्वं चास्ति प्रत्यक्षतः सिद्धमेतत् तर्हि परमाणुगगनादेः निरवयवत्वेन कार्यत्वानुमानं कथं नैव क्रियते?[२०] उभयत्रापि समा परिस्थितिः। अतो नैव कथमपि भूभूधरादौ कार्यत्वं साधयितुं शक्यम्।

अपि च, यदि नाम कार्यत्वं पक्षे स्वीक्रियतेऽपि तथापि नैव कार्यत्वेन

हेतुना सकर्तृकत्वं साधयितुं शक्यम्। यतो हि नैतदस्ति यत् कार्यत्वं सकर्तृकत्वे सत्येवोपपद्यतेऽर्थात् कार्यं प्रति सकर्तृकत्वमावश्यकं नास्ति किन्तु सकारणकत्व-मेवावश्यकम्।[२१] यदि च कर्तुरपि कार्यं प्रत्यावश्यकता स्यात् तदाऽयमभिप्रायो भवति यत् कार्यं प्रति सर्वेषामपि कारकानामावश्यकता भवति यत्रैतेषु कश्चिदपि कारको न भवति तत्र कार्यं नैव भवति। तथा चैवमासनशयनादिकार्यं न स्यात् एतेषु कार्येषु कर्मकारकस्याभावात्। यदि वदति भवान् यत् कर्मादिकारकं सार्वत्रिकं नास्ति किन्तु कर्ता कारकः सार्वत्रिकः तर्हि नैतच्छक्यते वक्तुमिदानीमपीदं सिद्धं नास्ति यत् कर्ता कारकः सार्वत्रिकः।[२२] यदि घटादौ कर्तृकारकस्य दर्शनमात्रेण सर्वत्र कर्तुरावश्यकतां भवाननुभवति चेत् तर्हि यथा घटादौ कर्त्रा कार्यत्वस्य सहभावस्तथैव कार्यत्वस्य शरीरजन्यत्व, सुखदुःखादिमज्जन्यत्वादिभिरपि सहभावोऽस्ति, तत्र च भवान् शरीरजन्यत्वादौ कार्यत्वस्य प्रयोजकतां नाङ्गीकरोति। अतः तथैव सकर्तृकत्वेऽपि कार्यत्वं प्रयोजकं नास्तीति भवता स्वीकार्यम्। एतस्य वारको नास्ति कश्चित्तर्को येन भवान् कर्तुं पारयेत् पूर्वोक्तमनुमानमित्यप्रयोजकताऽस्य।

अपि च, यदि कार्यं प्रति कृतिसामान्यस्य हेतुता स्वीक्रियतेऽपि तथापि जीवानामेवादृष्टद्वारककृत्या निर्वाहसम्भवात् सिद्धसाधनम् कार्यमात्रेऽदृष्टस्य हेतुतां तु भवानपि स्वीकरोति। यदि चादृष्टाद्वारककृतिजन्यत्वं साध्यते तर्हि नैवमस्ति कार्यं प्रति कृतेः कारणता किन्तु सामान्यतः कृतित्वेनैव कार्यकारणभावोऽस्ति। यदि वदति भवान् यत् विशेषतोऽपि कार्यकारणभावो भवति यतोहि कपालविषयककृत्यभावे घटो नोपजायतेऽतो यथा घटं प्रति कपालगोचरा कृतिः कारणत्वेन स्वीक्रियते तथैव क्षित्यादिकं प्रति अदृष्टाद्वारिकाया अपि कृतेः कारणता स्वीकार्या तर्हि नैतत् साधु यतो हि घटादौ व्यतिरेको दृश्यते क्षित्यादौ च नहि व्यतिरेको दृष्टिपथमारोहति। अतो नैवं शक्यं कल्पयितुम् घटादौ सकर्तृकत्वदर्शनमात्रेण सकर्तृकत्वानुमाने नहि भवदुक्तरीत्या कृतिजन्यत्वं सम्भवति। यतोहि भवान् परमेश्वरस्य चेष्टानिरपेक्षां कृतिं क्षित्यादिकारणीभूतां मनुते दर्शनानुगुण्येनैतत् साधने यथा घटादौ कारणीभूता कुलालादिकृतिश्चेष्टाद्वारिका भवति तथैव क्षित्यादिकारणीभूताया ईश्वरकृतेरपि चेष्टाद्वारकत्वं भाव्यम्। नैवं शक्यतेऽङ्गीकर्तुं भवता।[२३]

अपि च, घटकुलालकृत्योरन्वयव्यतिरेकदर्शनेन कार्यसामान्यकृतिसामान्ययोः कार्यकारणभावो भवता स्वीक्रियतेऽथवा विशेषयोः कारणत्वेन सामान्ययोरपि कारणत्वम्? यदि तावदाद्यः पक्षस्तर्हि अन्वयव्यतिरकयोस्तु भवदुक्तविपरीते एव कार्यकारणभावग्रहे सामर्थ्यमस्ति तथाहि घटकुलालकृत्योरन्वयव्यतिरेकाभ्यां घटत्वेन कुलालकृतित्वेनैव कार्यकारणभावग्रहः सम्भवति नहि कार्यत्वेन कृतित्वेन कार्यकारणभावग्रहणे सामर्थ्यम्। यदि द्वितीयः पक्षस्तदा नैषोऽपि सम्भवति यतो

हि घटकुलालयोः कार्यकारणभावे सत्यपि नहि कार्यसामान्यपुरुषसामान्ययोः कार्यकारणभावोऽङ्गीक्रियते। यदि भवान् वदेत् यथा धूमसामान्यवह्निसामान्ययोः कार्यकारणभावः स्वीक्रियते धूमविशेषवह्निविशेषयोः कार्यकारणभावेन तर्हि उत्तरमत्रैतदस्ति यदत्रान्या परिस्थितिरस्ति। अत्र कार्यकारणभावोऽनेन कारणेन नास्ति यत् धूमविशेषवह्निविशेषयोः कार्यकारणभावो विद्यतेऽपितु "यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः" इति व्यतिरेकं प्रत्यवच्छेदकीभूतवह्नित्वधूमत्वाख्यधर्मवत्त्वनिमित्त एषः कार्यकारणभावो विद्यते। अत्र चैवं व्यतिरेकव्याप्तिर्नास्ति यत् "यत्र यत्र कृत्यभावस्तत्र तत्र कार्याभावः" इति भवन्मतेत्वीश्वरीया कृतिः सर्वत्रैव वरीवर्ति।[२४] अतः कृतित्वं नहि व्यतिरेकावच्छेदकं भवति। अत्र नैयायिकः पृच्छति यत् यदि व्यतिरेकावच्छेदकत्वमेवंविधमेव कारणत्वसम्पत्तय आवश्यकम् तर्हि कुतः स्यादाकाशसिद्धिः? यतो ह्याकाशसिद्धिरपि शब्दसमवायिकारणत्वेन क्रियते, आकाशस्य विभुत्वेन व्यतिरेकावच्छेदकवत्त्वं नैव सम्भवति। माध्वाश्चैवं समादधति यदाकाश-सिद्ध्यर्थमनुमानस्यावश्यकता नास्ति तस्य तु प्रत्यक्षत एव सिद्धिः सम्भवति।[२५] एवं शब्दसमवायिकारणत्वेनासिद्धावपि शब्दस्य गुणत्वेन गुणस्य च द्रव्यसम-वेतत्वस्याप्त्या शब्दसमवायित्वेन तत् सिद्धिः कर्तुं शक्या।[२६] अपि चैवं शब्दसमवायिकारणत्वेनापि सम्भवत्याकाशसिद्धिः यतो हि निमित्तकारणत्वादिग्रहे "यत्र यदा न दण्डस्तत्र तदा न घटः" इत्येवं संसर्गाभावात्मकव्यतिरेकपरिग्रहेऽपि समवायिकारणस्थलेऽन्योन्याभावात्मकस्यैव व्यतिरेकस्य परिग्रहः क्रियते तथा चैवमत्र व्यतिरेकसहचारो गृह्यते "यन्न समवायिकारणं तत्र न कार्यम्" ईदृशश्च व्यतिरेकसहचारोऽत्रापि गृहीतुं शक्यस्तथाहि "यन्न गगनं न तत्र शब्दः" इति सहचारोऽत्यन्तं सुलभः।[२७] यथाऽत्र समवायिभिन्नः प्रसिद्धोऽस्ति नैवं कृतिविषयभिन्नः कश्चित् प्रसिद्धो भवन्मते येनान्योन्याभावव्यतिरेकेण कृतेरपि कारणता गृह्येत। पारिमाण्डल्येऽपि नास्ति परमेश्वरकृत्यभावः यतोहि तत्र विद्यमानस्य घटाभावस्य साक्षात्कारं प्रति संयुक्तसमवेतविशेषणतारूपप्रत्यासत्त्यन्तर्भूततया हेतुत्वेनेश्वरकृति-विषयत्वात्।[२८] तत्र विद्यमानस्य घटाभावस्य प्रत्यक्षविषयताया अपलापो नैव कर्तुं शक्यते यतो ह्यभावप्रत्यक्षे प्रयोजकीभूतस्य योग्यप्रतियोगिकत्वस्य विद्यमानता तत्रास्ति। एवं यथा देशकालाद्यपरिच्छिन्नकृतिजन्यत्वं साध्यते भवता तथैव तद्विपरीतमपि देशकालादिपरिच्छिन्नकृतिजन्यत्वमपि शक्यतेऽनुमातुम्।

अपि च, यद्भवता सकर्तृकत्वानुमानेन उपादानगोचरापरोक्षज्ञानचिकीर्षा-कृतिजन्यत्वमनुमीयतेऽत्रापरोक्षज्ञानस्य नास्ति काचिदावश्यकता यतो हि अन्धस्यापि भवति देशकालविशेषहेयोपादानज्ञाने आप्तोपदेशेन सञ्जाते हानोपादाने प्रवृत्तिः, तादृशहानोपादानकर्तृत्वमस्त्यन्धस्य किन्तु नास्त्यपरोक्षज्ञानम्।[२९]

अपि च, ज्ञानमनित्यमेव भवति, भवता चेश्वरीयज्ञानस्य नित्यत्वं स्वीक्रियते। यथा कृतिजन्यत्वमेव कार्यार्थमावश्यकम् न तु शरीरजन्यत्वमिति कृत्वा कृतिजन्यत्व एव लाघावात् कार्यत्वस्य प्रयोजकत्वं स्वीक्रियते भवता तथैव आत्मविशेषगुणत्वम् मनःप्रभृतिकारणजन्यत्वे प्रयोजकम् इति स्वीकार्यम्। आत्मविशेषगुणत्वमीश्वरीयज्ञानेच्छाकृतिषु विद्यतेऽतस्तेषां जन्यत्वमापद्यते जन्यत्वे चानित्यत्वं दुर्वारम्।[३०]

अपि च, ज्ञानेच्छयोः सिद्धिः कथमपि नैव सम्भवति, यदि कथञ्चित् कृतिकार्ययोः कारणकार्यभावः स्वीक्रियतेऽपि चेत् तदापि। यतोहि कार्यं प्रति कृतेरेव कारणता स्वीक्रियते कृतिं प्रति च नास्ति किञ्चिदपि कारणमत्र परमेश्वरीयकृतेः नित्यत्वात्। कार्यत्वेन कृतिसिद्धौ स्वीकृतायामपि नहि घटकृत्यादौ दर्शनादत्र ज्ञानेच्छयोः सिद्धिः सम्भवति तथाहि घटादौ कारणीभूता कृतिः जन्या स्वीक्रियते "ज्ञानजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः" इति न्यायेन कृतिमत्त्वसम्पत्तये ज्ञानेच्छावत्त्वमत्रावश्यकम्, किन्तु प्रकृतस्थले कृतेरजन्यतया नास्ति तदर्थं ज्ञानेच्छयोरावश्यकता। कृतेरिव स्वातन्त्र्येणापि नहि ज्ञानेच्छासिद्धिः सम्भवा यतो हि प्रश्नो भवति यत् कथङ्कारं ज्ञानेच्छयोः सिद्धिः? कृत्यानुषङ्गिकतया स्वातन्त्र्येण ज्ञानविषयस्यैव कृतिविषयत्वाद्वा। तत्र यदि प्रथमः कल्पस्तर्हि नैवं ज्ञानेच्छाकृत्योः नित्यत्वं स्यात् यतोहि यथाऽऽत्मनः शरीरसम्बन्धे ज्ञानोत्पत्तिस्तथैव ज्ञानादेव कृत्युत्पत्तिः सम्भवति सति चैवं जन्यकृतावेव ज्ञानेच्छापूर्वकत्वात् ज्ञानेच्छासहितजन्यकृतिजन्यत्वं सिद्ध्येत्, केवलं नित्यकृतिजन्यत्वं वा सिद्ध्येत्।[३१] यदि तावदपरः कल्पस्तदा भवन्मते विभुत्वेनात्मनः संयोगसत्त्वेऽपि यथा कृतिव्यतिरेको भवति तथैव कृतौ सत्यामपि ज्ञानाद्यसत्त्वे कार्याभावो नैव दृश्यत[३२] इति अन्वयव्यतिरेकाभावात् नास्ति ज्ञानेच्छासत्त्वमावश्यकमिति न ज्ञानेच्छासिद्धिः। यदि च तृतीयः कल्पस्तदाऽयमतिव्याप्तिदोष आपद्यते यत् चैत्रकृतौ मैत्रज्ञानस्यापि प्रत्यासत्तित्वं स्याद्यतो हि भवानस्मिन् कल्पे कृतिं प्रत्यकारणीभूतमपि ज्ञानं कृतिप्रत्यासत्तिं मनुते तथा सति चैत्रकृतौ अकारणीभूतमपि मैत्रज्ञानमपि कृतिप्रत्यासत्तिः कथं न स्यात्?[३३] अतो यदि ज्ञातस्यैव कृतिविषयत्वं भवतीति कल्पोभिमतस्तदा कृतेर्जन्यत्वमेव स्वीकर्तव्यम्।

अपि च, यदि कृतिप्रत्यासत्तित्वेन ज्ञानसिद्धिः स्वीक्रियतेऽपि तदापि नेच्छासिद्धिः सम्भवति नैव कयापि युक्त्या कृत्यानुषङ्गितया, स्वातन्त्र्येण, कृतिप्रत्यासत्तित्वेन वा।

अपि च, सत्प्रतिपक्षोऽप्यत्र सम्भवति शरीराजन्यत्वेनाकर्तृकत्वस्याप्यनुमातुं शक्यत्वात्।,[३४] तथैव शरीरजन्यत्वमुपाधिरपि दोषः। सत्प्रतिपक्षदोषं वारयता नैयायिकेनात्र व्याप्यत्वासिद्धिः प्रदर्श्यते तच्च बहुशः पूर्वं प्रपञ्चितम्। अत्र व्याप्यत्वासिद्धिं निवारयता मध्वानुयायिनोच्यते यत् व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्व-

मनुभवसिद्धमस्ति। अनुमितिपदेनाप्यनुमितितत्कारणोभयोरन्यतरमपेक्षितम्। अत्र यदि भवता साध्यसामानाधिकरण्यावच्छेदकवत्त्वात्मिका व्याप्तिः स्वीक्रियते तर्हि तत्र व्यभिचारग्रहोऽविरोधी परस्पराभावानात्मकत्वात्। अतः व्यभिचाराभावविशिष्ट-सहचारात्मिकैव व्याप्तिरिति स्वीकार्यम्। व्यभिचाराभावात्मिका व्याप्तिस्तु नीलधूमादावपि विद्यते शरीराजन्यत्वेऽप्यस्ति फलतो नानयोर्व्याप्यत्वासिद्धत्वं प्रतिपादयितुं शक्यम्।[३५] किञ्च हेतुशरीरघटकं द्विविधं भवति किञ्चित् सङ्कोचकं भवति किञ्चिच्च विकासकम्। यथा नीलधूमादिना वह्निसाधने नीलधूमघटकं नीलत्वं सङ्कोचकम् यतो हि धूमादित्यनेन धूमत्वाधिकरणमात्रग्रहो भवति, नीलत्वविशेषणे प्रदत्ते नीलधूममात्रग्रहो भवति। अत्रैव व्यर्थविशेषणतादोषो भवति। यत्र विकासकं हेतुशरीरघटकं भवति न तत्र व्याप्यत्वासिद्धिर्भवति यथा प्रमात्वाश्रयविषयत्वादित्यर्थके प्रमेयत्वादित्याश्रयविषयत्वम्। विकासकं यद्भवति तत् विकसितदेशे व्याप्तिग्रहौपयिकं भवत्यतो नैव व्यर्थताऽस्यापद्यते।[३६] असिद्धिवारकत्वेनैव यदि व्यर्थता स्यात्तदा "गुणाश्रयो द्रव्यम्" इत्यत्र गुणात्यन्ताभावानधिकरणत्वरूपद्रव्यलक्षणे गुणानधिकरणत्वस्याद्यक्षणस्थितघटादौ सत्त्वेऽपि द्वितीयादिक्षणेऽभावेनाव्याप्तिवारणायात्यन्ताभावेति विशेषणं यत् प्रदीयते तस्यापि व्यर्थता स्यात्।[३७] यथा तस्य व्यर्थता नास्ति तथैव शरीरपदं अजन्यत्वस्याङ्कुरादावसम्भावितस्य विकासकमस्तीति न तस्यापि व्यर्थतेति न व्यर्थविशेषणतया व्याप्यत्वासिद्धिः। अपि च, शरीराजन्यत्वादित्यत्र शरीरविशिष्टस्य जन्यत्वस्याभावो हेतुः, स च विशेषणविशेष्ययोर्भिन्न एव। सिद्धान्तरूपेणात्र माध्वाः वदन्ति यत् व्यर्थविशेषणत्वं नहि कुत्रचिदपि व्याप्यत्वासिद्धिविधया दूषणमस्ति किन्तु विशिष्टस्य हेतुत्वाभिप्रायेण प्रयोगेऽधिकनामकनिग्रहस्थानत्वेन दूषणमस्ति।[३८] प्रकृतस्थले तु विशिष्टाभावरूपेण हेतुना यः कार्यः क्रियते न सोऽन्येन क्रियतेऽतो नाधिकनामकं निग्रहस्थानमप्यत्रास्ति।[३९] अत्रार्थान्तरत्वरूपनिग्रहस्थानाशङ्कामपि माध्वाः दूषयन्ति तेषां कथनमस्ति यत् प्रकृतेऽनुपयुक्तान्वितोक्तिरर्थान्तरपदेनो- च्यतेऽत्र तु प्रकृतोपयोगिन्येवेयमन्वितोक्तिरसिद्धिवारकत्वेन।[४०]

अपि च, नैतावदेवापितु "विमतमनेककर्तृकं गुरुतरकार्यत्वात् प्रासादादिकार्यवत्" इत्याद्यपि विपरीतमनुमातुं शक्यमतो न क्षित्यादेः सकर्तृकत्वानुमानेन न्यायाभिमत ईश्वरः सिद्धिं कथमपि समधिगच्छति।

### अदृष्टाधिष्ठातृत्वानुमानेनापि नेश्वरः सिध्यति

अत्र प्रायशस्त एव प्रश्नाः समुपस्थाप्यन्ते ये पूर्वं विशिष्टाद्वैतिभिः मीमांसकैश्च

उपस्थापिता: यत् अदृष्टस्याधिष्ठानं कीदृशमत्रापेक्ष्यते? किं तावत् नोदनरूपम्, अथवाऽतिशयाधानम्। दूषणप्रकारोऽपि तादृश एव।[४२]

## वेदपौरुषेयत्वानुमानेनापि नेश्वरसिद्धि:

नैयायिकास्तावत् वेदत्व, वाक्यत्वादिभिर्हेतुभि: वेदानां पौरुषेयत्वं (सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं) साधयन्ति तत्र सन्दूष्यते माध्वै: यदस्माभिरपि वेदानामीश्वरोपदेशरूपता स्वीक्रियते सोऽयमीश्वर: प्रति कल्पं पूर्वकल्पानुपूर्वीकं वेदमस्मिन्नपि कल्पे उपदिशति किन्तु नहि तस्य वेदोच्चारणं पूर्वपूर्वकल्पीयोच्चारणान्तरापेक्षमत: सिद्धसाधनमेवास्ति। अस्माभिस्तु वेदानां नियतैकप्रकारकत्वरूपमपौरुषेयत्वं स्वीक्रियते।[४३] पूर्वोक्तेन भवदुक्तेनानुमानेन नहि वेदप्रणेतृत्वेनेश्वर: साधयितुं शक्य: तद्बाधकस्य सबलस्य वेदापौरुषेयत्वसाधकस्यानुमानस्य विद्यमानत्वात्। तथाहि "वेदतात्पर्यविषयो पौरुषेयेतरप्रमाणक: पौरुषेयशब्दाप्रमाणकत्वे सति सप्रमाणकत्वात्" अत्र व्याप्तिरेवं "यत् यदप्रमाणकत्वे सति सप्रमाणकं तत्तदितरप्रमाणकम्" यथा श्रोत्राद्यप्रमाणकत्वे सति सप्रमाणकं रूपं श्रोत्रादीतरचक्षु: प्रमाणकम्।[४४] पक्षधर्मताबलाच्चापौरुषेयशब्दसिद्धि:। एवमेव "वेदतात्पर्यविषयोऽपौरुषेयशब्दप्रमाणक: इन्द्रियलिङ्गपौरुषेयशब्दप्रमाणकत्वे सति सप्रमाणकत्वात्" इत्यप्यनुमानं वेदापौरुषेयत्वं साधयितुं शक्नोति[४५] एवमेव "वेदत्वमपौरुषेयवृत्ति तदितरावृत्तित्वे सति वृत्तिमत्त्वात्, यद्यदितरावृत्तित्वे सति वृत्तिमत् तत्तद्वृत्ति यथा घटेतरावृत्तित्वे सति वृत्तिमद्घटत्वं घटवृत्ति" इत्याद्यनुमानै: शक्यते साधयितुं वेदापौरुषेयत्वम्।[४६]

नैयायिक: वेदानां पौरुषेयत्वं स्वीकरोति तत्र माध्वा: आक्षिपन्ति यत् पौरुषेयत्वे सति वेदानामप्रामाण्यं स्यात् पुरुषेष्वज्ञानमिथ्याज्ञानविप्रलम्भप्रमादकरणापाटवादिदोषाणां सम्भवात्। एतद्दोषनिवृत्त्यर्थं यदीश्वरस्य नित्यसार्वज्ञ्यमङ्गीक्रियते तर्हि तदपेक्षया शब्देऽपौरुषेयत्वमेव स्वीकार्यम्, तेनैव च समस्तदोषाशङ्कावारणसम्भवात्।[४७] अप्रामाणिकानां सार्वज्ञ्य, अविप्रलम्भकत्व, अप्रमाद, करणापाटवादीनामीश्वरे स्वीकारे तत्कृतत्वस्य च वेदे स्वीकारे कल्पनागौरवमपि स्यात्।[४८]

अपि च, नहि सार्वज्ञ्येऽपि सति परमेश्वरेऽविप्रलम्भकत्वादिसिद्धि: सम्भवति यतो हि सर्वज्ञेष्वीश्वरावतारेष्वपि बुद्धादिषु विप्रलम्भकत्वादि दृश्यते।[४९] सर्वज्ञस्य शरीरमपि स्वीकार्यं शरीरं विनोपदेशासम्भवात्, एवं च सति शरीरकृतकरणापाटवादिकं पुनरप्यापद्यते। कार्यत्वाद्यनुमानेन तु नहीश्वरस्य सार्वज्ञ्यादिसिद्धिस्तस्य निरस्तत्वात् वेदादपि नहि सार्वज्ञ्यसिद्धि:,वेदप्रामाण्यस्येश्वरसार्वज्ञ्याधीनत्वात्,

ईश्वरसार्वज्ञ्यस्य च वेदप्रामाण्याधीनत्वादन्योन्याश्रयप्रसङ्गात् अन्या अपि वेदपौरुषेयत्वखण्डने युक्तयः प्रदीयन्ते ताश्च प्रायशः मीमांसाविशिष्टाद्वैताद्वैतवेदान्त-दर्शनेषु प्रतिपादिताः वेदापौरुषेयत्वसाधनाय चान्येऽपि केचनानुमानप्रयोगाः प्रदर्श्यन्ते।[५०]

## कुसुमाञ्जल्युक्तैरन्यैरप्यनुमानैर्नेश्वरसिद्धिः

कुसुमाञ्जलौ आयोजनधृत्यादिलिङ्गकान्यपि कानिचनानुमानानीश्वरसाधनाय प्रयुज्यन्ते तान्यपि दूष्यन्ते माध्वैः। तत्रायोजनहेतुकानुमानेन यत्परमाण्वोश्चेतनाधिष्ठातृत्वं साध्यते तत्रोच्यते यदस्मदादीनामेवादृष्टद्वारेणाधिष्ठातृत्वं सम्भवतीति सिद्धसाधनम्। धृतिहेतुकेऽनुमानेऽप्युक्तरीत्यैव सिद्धसाधनमस्मदादेरदृष्टद्वारा ब्रह्माण्डधारकप्रयत्नवत्त्वस्य सम्भवात्, पततोऽपि ब्रह्माण्डादेः महत्त्वेन पतनं नोपलभ्यते इत्याशङ्कायाः विद्यमानत्वात् सन्दिग्धासिद्धत्वमपि।[५१] पदहेतुकानुमाने लाघवेन सर्गादिभवानां सुप्तप्रबुद्धन्यायेन कल्पान्तरीयसंस्कारोद्बोधमात्रस्यैव कल्पनात् घटादिनिर्माणादेकरुपपत्त्या हेतूनाम-प्रयोजकता। प्रत्ययहेतुकानुमानेऽप्येवमेवाप्रयोजकता सम्भवति।[५२] संख्याविशेषलिङ्ग-कानुमानमेतस्मिन् न्यायसिद्धान्त आधारितमस्ति यत् जन्यपरिमाणं त्रिविधं भवति परिमाणजन्यं, प्रचयजन्यं संख्याजन्यं च। द्व्यणुकादिपरिमाणं संख्याजन्यं भवति तस्य परिमाणजन्यत्वे महदारब्धस्य महत्तरत्ववदण्वारब्धस्याणुतरत्वप्रसङ्गः परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणारब्धकत्वात्। अणोश्चोत्कृष्टम् परिमाणमणुतरपरिमाणमेव। माध्वास्तावदिमं सिद्धान्तं खण्डयन्ति ते वदन्ति यदत्र परिमाणस्यारम्भकः परमाणुसंयोग एवास्तु,[५३] किं वा संख्याजन्यत्वेऽपि परिमाणस्यास्य कुतोऽपेक्षाबुद्धिजन्यद्वित्व-संख्याजन्यत्वं स्वीक्रियते उभयोः परमाण्वोर्विद्यमाना यैकैकशः एकत्वसंख्या सैव कुतः कारणं न स्यात् परिमाणस्यास्य।[५४] अपि चेदानीं ब्राह्मणस्य यथा ब्राह्मणपूर्वकत्वं किन्तु सर्गादिकालीनब्राह्मणस्य नैव ब्राह्मणपूर्वकत्वं तथैवेदानींतनद्वित्वबुद्धिर्द्वित्व-संख्यायाश्चापेक्षाबुद्धिजन्यत्वेऽपि सर्गकालीनायाः द्वित्वसंख्याया अदृष्टविशेषोपहित-परमाणुमात्रपूर्वकत्वमस्तु, अन्यथा नित्यापेक्षाबुद्धिवन्नित्यब्राह्मणोऽपि कल्पनीयः।[५५] अथवा द्वित्वादेरपेक्षाबुद्धिजन्यतैव मास्तु। वस्तुतस्तु द्वणुकपरिमाणं प्रति परमाणु-परिमाणस्यैव कारणत्वं स्वीकार्यम्, यथा त्रसरेण्वादौ विद्यमानमेव महत्त्वमेकजातीय-मेवोत्कर्षापकर्षवत् भवति यथा च परमाणौ द्व्यणुके च विद्यमानमणुत्वमेकजातीय-मेवोत्कर्षापकर्षवत् तथैव सिद्धान्ततः एकविधमेव (एकजातीयमेव) परिमाणं सर्वेषु द्रव्येषूत्कर्षापकर्षवत् भवति। नास्ति परिमाणस्य काचिन्महत्त्वाद्यवान्तरा जातिः।[५६] अतः सम्भवति द्व्यणुकपरिमाणस्यापि परिमाणजन्यत्वम्।

## नहीश्वरस्याशरीरत्वादि

ईश्वरस्य माध्वमते सशरीरत्वं प्रतिपाद्यते, वैकुण्ठनिवासित्वादिकं च स्वीक्रियते

यच्च नहि न्यायदर्शने स्वीक्रियते। सः सर्वोऽपि सिद्धान्तः शास्त्रेण सिद्धत्वात् स्वीकृतः। तत्र नाधिकं न्यायाभिमतस्येश्वरस्य तर्कयुक्त्याऽऽलोचनं क्रियते। न्यायाभिमतस्येश्वरस्य जगता सम्बन्धो नैव युज्यतेऽशरीरत्वात्, पृथिव्याद्यधिष्ठाने सति एव कुम्भकारो घटादि कर्तुं शक्नोति नान्यथा। न्यायाभिमतेश्वरस्तु न ह्यशरीरत्वात् कर्तुमधिष्ठातु वा किञ्चित् समर्थम्।[५७] माध्वमते परमेश्वरे ये ये धर्माः गुणादयः स्वीक्रियन्ते तद्विषये स्पष्टमुल्लिखति मध्वाचार्यः स्वकीये ब्रह्मसूत्रभाष्ये यत् "वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते"[५८] इति यदन्यदालोच्यते न्यायाभिमतेश्वरस्तत् शस्त्रैकप्रमाणकत्वान्माध्वानाम्।

**निष्कर्षः**

माध्वाः शास्त्रस्यैव प्रमाणत्वं स्वीकुर्वन्ति फलतो न्यायाभिमतपरमेश्वरस्यानुमानिकत्वनिराकरणे विशेषतो बलमाधीयते। यच्च न्यायाभिमतेश्वरस्यानुमानेन साध्यते तन्निवारणेऽपि बलं प्रदीयते, शास्त्रतो यत् सिद्धं भवतीश्वरे तदेव स्वीकार्यमिति विद्यते मुख्यः सिद्धान्तः।

## पादटिप्पणी

१. म० सि० सा०, पृ० १
२. तदेव, पृ० २
३. तदेव, पृ० ३
४. तदेव
५. तदेव, पृ० ५
६. भेदाभावेऽपि भेदव्यवहारनिर्वाहका अनन्ता एव विशेषाः। तदेव, पृ० ७
७. म० सि० सा०, पृ० १८-२२
८. म० सि० सा०, पृ० ३३-३७
९. तदेव, पृ. ४१
१०. तदेव, पृ० ४२
११. शब्दज्ञानविधुरजातिबधिरादेरप्याकाशप्रतीत्या शब्दकारणतयैवाकाशधीरिति नियमाभावात् साक्षिणैवेत्युक्तम्। त० ता० १, न्यायदीपटीका, पृ० ३२४
१२. तदेव, पृ० ८१
१३. ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि तत् स्यात्। पूर्णप्रज्ञभाष्यम्, पृ० ११३
१४. श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित्।
निश्चयेत् साधयेदर्थं प्रमाणान्तरमेव च।।

श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा।। पूर्वप्रज्ञभाष्यम्, पृ० ११-१२

१५. अनुपलब्धप्राक्कोटिषु भूभूधरादिषु कार्यत्वमेव कुतः? त० ता०, पृ० ३०९

१६. गगनादेः परमाणोश्च संयोगित्वेन सांशत्वसिद्धेः। तदेव, पृ० ३१०

१७. द्रव्यसमवेतद्रव्यत्वं चेत् जात्यादेरिवाकार्यत्वेनाप्युपपत्त्या अप्रयोजकता। तदेव, पृ० ३११

१८. तदेव, पृ० ३११-३१२

१९. उद्धृत त० ता०, पृ० ३१३-३१४

२०. ---दर्शनमात्रेण परमाण्वादेः सावयवत्वविपर्ययेण निरवयवत्वेन कार्यत्वानुमानं किं न स्यात्। तदेव, पृ० ३१४

२१. किञ्च कर्त्रभावेऽपि कार्यत्वस्य सकारणकत्वमात्रेणोपपन्नत्वेनाप्रयोजकता। तदेव, पृ० ३१५

२२. तस्यैवाद्याप्यसिद्धेः। तदेव

२३. तदेव, पृ० ३१७-३१८

२४. धूमवह्निसामान्यवदित्यत्र व्यतिरेकावच्छेदकरूपवत्त्वस्यैवोपाधित्वात्। तदेव पृ० ३२३

२५. साक्षिणैव तत्सिद्धेः। तदेव, पृ० ३२४

२६. शब्दादिकारणत्वेन तदसिद्धावपि गुणस्य समवेतत्वव्याप्त्या शब्दसमवायित्वेनैव तत्सिद्धेः। तदेव

२७. तदेव, पृ० ३२५

२८. परिमाण्डल्यस्यापि स्वनिष्ठघटाभावसाक्षात्कारं प्रति संयुक्तसमवेतविशेषणतारूप प्रत्यासत्त्यन्तर्भूततया हेतुत्वेनेश्वरकृतिविषयत्वात्। तदेव

२९. अत एवान्धस्याप्तवाक्यादिना देशकालविशेषहेयोपादेयज्ञाने सति हानोपादाने युक्ते। तदेव, पृ० ३२७

३०. तदेव, पृ० ३२७-३३०

३१. आत्मनः शरीरसम्बन्धे ज्ञानगतकार्यत्वस्येव ज्ञानादिसम्बन्धेऽपि त्वदुक्तकृतिविपरीतत्व मात्रविपरीतकृतिगतकार्यत्वस्यैव तन्त्रत्वात्। तदेव, पृ० ३३६

३२. ---ज्ञानादिव्यतिरेकेण कार्यव्यतिरेकादर्शनात्।। तदेव, पृ० ३३७

३३. कृत्यजनकज्ञानस्य प्रत्यासत्तित्वेऽतिप्रसङ्गात्।। तदेव

३४. "अकर्तृकत्वस्य शरीराजन्यत्वेनानुमातुं शक्यत्वात् सत्प्रतिपक्षता। तदेव, पृ० ३३९

३५. तथा च व्यभिचाराभावविशिष्टसहचाररूपा व्याप्तिर्बीजधूमे शरीराजन्यत्वे चास्तीति कथं तयोर्व्याप्यत्वासिद्धिः। तदेव, पृ० ३५०

३६. तत्र सङ्कोचकविपरीतस्यान्त्यस्य स्वेन विकसितदेशे व्याप्तिग्रहौपयिकत्वान्न व्यर्थता। तदेव, पृ० ३५१

३७. त० ता० न्यायदीप, पृ० ३५१-३५२

३८. तस्माद् व्यर्थविशेषणस्य न क्वापि व्याप्यत्वासिद्धत्वेन दूषणता। किन्तु विशिष्टस्य हेतुत्वाभिप्रायेण प्रयोगेऽधिकत्वेन। त० ता०, पृ० ३५६-३५७
३९. प्रकृते तु विशिष्टाभावरूपकार्यस्यान्येनाकरणान्नाधिकत्वम्। तदेव
४०. असिद्धिवारकत्वेन प्रकृतोपयोगात्। तदेव, पृ० ३५७-३५८
४१. त० ता० न्या० दी०, पृ० ३५८-५९
४२. त० ता० न्या० दी०, पृ० ३६१
४३. उक्तं च सुधायां "नियतैकप्रकारत्वमपौरुषेयत्वम्" इति। त० ता०, पृ० २४७
४४. तदेव, पृ० २३१-२३२
४५. तदेव, पृ० २३३-२३४
४६. तदेव, पृ० २३५
४७. तन्निवृत्त्यर्थमीश्वरस्य नित्यसार्वज्ञ्याद्यङ्गीकारे च तदर्थं धर्मबोधके शब्द एवापौरुषेयत्वमात्रं कल्प्यताम्। तदेव, पृ० २३८-२३९
४८. तदेव, पृ० २४०
४९. सर्वज्ञेश्वरावतारेष्वपि बुद्धादिषु विप्रलम्भादिदर्शनात्। तदेव
५०. त० ता० वेदापौरुषेयत्ववाद:
५१. "पततोऽपि तस्य महत्त्वेन पतनानुपलम्भसम्भवात्" न्यायसुधा उद्धृत त० ता० न्या० दी०, पृ० ३६२
५२. त० ता०, पृ० ३६२-३६४
५३. किं च द्रव्यारम्भकत्वेन क्लृप्तस्य त्वदुक्तसङ्ख्याविपरीतस्यैकस्य संयोगस्यैव परिमाणहेतुता कल्प्या। त० ता०, पृ० ३६९
५४. सङ्ख्यायोनित्वेपि द्व्यणुकपरिमाणं प्रति त्वदुक्तपरमाणुगतद्वित्वविपरीतयोः परमाणुगतैकत्वयो:---- असमवायिकारणत्वसम्भवात्। तदेव, पृ० ३६७-६८
५५. अन्यथा नित्यापेक्षाबुद्धिवन्नित्यब्राह्मणोपि कल्प्यः स्यात्। तदेव, पृ० ३७०
५६. वस्तुतस्तु यथा त्र्यणुकादिषु महत्त्वमेकजातीयमेवोत्कर्षापकर्षवत्, यथा चाणुत्वं परमाणुद्व्यणुकयोः एवं परिमाणवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते। तदेव, पृ० ३७६
५७. अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत्। मध्वभाष्यम्, पृ० १२०, सूत्र २/२/११/३८
५८. मध्वभाष्यम्, पृ० ११३

## चतुर्थोऽध्यायः (भाग छ)

# निम्बार्कवेदान्तदर्शनदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

भेदाभेदसिद्धान्तप्रवर्तकाः निम्बार्काचार्याः, चिदचिदीश्वराणां त्रयाणां सत्त्वमङ्गीकुर्वन्ति। एतयोस्त्रयोः स्वरूपं प्रायशो रामानुजदर्शनानुरूपमेवास्ति। किन्तु मूलत एतदन्तरमस्ति यत् रामानुजाचार्यो जडजीवयोरीश्वरशरीरतां स्वीकरोति निम्बार्काचार्योऽशांशिभावमङ्गीकुर्वन् परमेश्वरांशत्वं जडजीवयोरङ्गीकरोति।[१] किन्त्वंशो नाम केवलं शक्तिरेव नत्ववयवः।[२] परमात्मन एव परिणामौ जडजीवौ शक्तिरूपेण सर्वदा परमात्मनि तिष्ठतः। सृष्टिकाले सत्याविर्भवतः, प्रलये च तिरोभवतः। अत्र चैवमेव द्वैताद्वैतौ विद्येते यथा सुवर्णाभूषणे कुण्डले कटकादौ कटककुण्डलादिरूपेण द्वैतमस्ति सुवर्णरूपेण चाद्वैतमस्ति यथा च भूविकाराणां वज्रवैदूर्यपद्मरागादीनां भूम्यात्मकत्वेन भूमित्वाविशेषोऽद्वैतम्, स्वरूपतश्च द्वैतमपि विद्यते, यथा द्रुमादिविकाराणां पत्रादीनां वृक्षत्वाविशेषेण वृक्षात्मकत्वादभेदोऽद्वैतमस्ति किन्तु द्रुमाभिन्नत्वेऽपि न द्रुमत्वम् द्रुमाद् भेदोऽपि भवति द्वैतमपि भवति, यथा हि वज्राद्यभिन्नापि वज्रप्रभा भिन्नास्ति एवमेव जीवस्य जडस्य च ब्रह्माभिन्नत्वेऽपि स्वरूपेण ब्रह्मभिन्नत्वं युक्तिसङ्गतमेवास्ति।[३] एष एव द्वैताद्वैतसिद्धान्तोऽस्ति। अयं जीवेश्वरयोर्भेदः मोक्षकालेऽपि विद्यमान एव भवति न ह्यस्य भेदस्य कदाचिदपि दूरीकरणं भवति किन्त्वन्तरमेतावदेव यत् संसारकाले योऽभेदो विद्यते सः विद्यमानोऽपि नैव प्रतीयते मोक्षावस्थायान्तु सोऽभेदः प्रतीयते, संसारकाले यो भेदोऽस्ति स एव प्रतीयते मोक्षावस्थायां नैव प्रतीयते इत्येवास्ति उभयोरन्तरम् किन्तु द्वैताद्वैतस्तु ब्रह्मणा सर्वदैव विद्यमानो भवति।

**जीवः**

दशश्लोक्यां जीवस्वरूपं प्रतिपादयन्नुच्यते यत् जीवो ज्ञानस्वरूपः ज्ञानमेवास्य स्वरूपमस्ति, अत एव ज्ञानमयोऽप्युच्यतेऽयम्। किन्तु ज्ञानस्वरूपत्वे सति

ज्ञानाश्रयोऽप्ययम्।[४] यथा सूर्यः प्रकाशमयोऽप्यस्ति प्रकाशाश्रयश्च। एवं रीत्या ज्ञानात्मकस्य जीवस्य ज्ञानाश्रयत्वमपि प्राप्तं भवति, इदं ज्ञानद्वयमपि नास्ति भिन्नं भिन्नं किन्तु धर्मधर्मिभावेन भिन्नताऽपि विद्यते। अयमीश्वराधीनोऽस्ति, अस्य कर्तृत्वादिकमपीश्वराधीनमेव न तु स्वातन्त्र्येण। स ईश्वरो यमुन्निषति तं साधुकर्मणि प्रवर्तयति यञ्चाधो निनीषति तमसाधुकर्मणि नियोजयति। एवं कर्तृत्वादौ सर्वत्रापि जीवः परमेश्वराधीनः।[५] अतोऽयं नियम्यः परमेश्वरश्च नियामकः। अस्य परिमाणविषये प्रतिपाद्यते यदयमणुः। प्रतिशरीरं भिन्नः शरीराणामानन्त्यात् जीवानामप्यानन्त्यम्। अस्याणुत्वेऽपि तथैव सम्पूर्णे शरीरे संस्थितिर्भवति यथा कक्षकोणे स्थितस्य प्रदीपस्य प्रकाशरूपेण सम्पूर्णे कक्षे स्थितिर्भवति। अयं जीवः शरीरसंयोगवियोग-योग्योऽस्ति, शरीरेण संयुज्यते वियुज्यते च। अस्य द्वैविध्यमस्ति बद्धमुक्तभेदात्। बद्धस्यापि द्वैविध्यमस्ति बुभुक्षमुमुक्षुभेदात्। विषयानन्दोपभोगेच्छुको बुभुक्षुरित्युच्यते विषयानन्दविरक्तो मोक्षकामो मुमुक्षुरित्युच्यते। मुक्तस्याप्येवमेव द्वैविध्यमस्ति मुक्तनित्यमुक्तभेदात्। ये जीवाः गर्भजन्ममरणादिभिर्नित्यं विरहितास्ते नित्यमुक्ताः ये च एभिर्मुच्यन्ते ते मुक्ता इत्युच्यन्ते।

## अचित्

चेतनाविरहितः पदार्थोऽचित्पदेनोच्यते। इदमेव प्रकृतिपदेनाप्युच्यते किन्त्वेतावदन्तरमस्ति यत् अचित्पदे प्रयुक्ते कालोऽपि गृहीतो भवति किन्तु प्रकृतिपदप्रयोगे कालो नैव गृहीतो भवति। अस्याचितः पदार्थस्य त्रयः प्रकाराः सन्ति प्राकृतं अप्राकृतं कालश्च। प्राकृतपदेन महत्तत्त्वादारभ्य महाभूतपर्यन्तं प्रकृतिजातं सर्वं जगत् परिगृहीतं भवति। प्रकृतिश्च सत्त्वरजस्तमोगुणा साङ्ख्यदर्शने यथा स्वीकृता तादृश्येवात्रापि स्वीक्रियते। अप्राकृतपदेन ते पदार्थाः गृह्यन्ते येषु प्रकृतेः सम्बन्धो नास्ति यथा च भगवतो लोकादयः। कालश्च समस्तपरिणामानां जनक उपाधिभेदेनानेकविध उच्यते। जगतो नियामकत्वेऽपि परमेश्वराधीनः कालः।

## ईश्वरः

ईश्वरस्य स्वरूपमेवमुच्यते स्वभावत एव समस्तदोषा अपास्ताः सन्ति। स ईश्वरः समस्तैः प्रकृतिजन्यैरविद्यास्मितादिभिर्दोषैर्विरहितः समस्तकल्याणगुणानां ज्ञानबलादीनां निधानं चास्ति नास्तीयत्ता कल्याणगुणानाम् अनन्तास्ते।[७] तैरनन्तैः कल्याणगुणैर्विभूषितः परमेश्वरः। कर्मानुसारं प्राणिभ्यः कर्मफलं वितरति। अयमीश्वरः सर्वव्यापी सर्वनियन्ता निरतिशयसूक्ष्मो निरतिशयमहांश्चास्ति। नास्ति शक्तीनां

सामर्थ्यानाञ्चावधिः। सर्वज्ञो जगतः सृष्टिस्थितिलयादिविधाता सत्यत्वादिमान् स्वाभाविकभेदाभेदाश्रयः।[८] शास्त्रैकप्रमाणकश्च।[९]

## न्यायनिम्बार्कमतयोरीश्वरविषये वैमत्यम्

न्यायमते परमेश्वरस्य सिद्धिरनुमानतः क्रियते तत्रैतेषामस्ति विद्वेषः परमेश्वरस्य शास्त्रैकप्रमाणकत्वात्। अतः प्रथमं तावत् परमेश्वरस्यानुमानिकत्वमेतेऽपि खण्डयन्ति अपरं तावत् नैयायिकाः परमेश्वरस्य जीवसजातीयतां स्वीकुर्वन्ति अत्रापि निम्बार्कस्य विरोधोऽस्ति, निम्बार्कस्त्वीश्वरजीवयोः साजात्यं नाङ्गीकरोति। अपरं तावन्नैयायिकाः परमेश्वरस्य निमित्तकारणतामात्रत्वं स्वीकुर्वन्ति निम्बार्कस्तु परमेश्वरस्याभिन्ननिमित्तो-पादानकारणतां स्वीकरोति। नैयायिकोऽदृष्टाधिष्ठायकत्वमीश्वरस्य स्वीकरोति निम्बार्कस्तु नैवादृष्टस्य सत्तामपि स्वीकरोति। नैयायिको वेदप्रणेतृत्वमीश्वरस्य स्वीकरोति नैतत्स्वीक्रियते निम्बार्कानुयायिभिः वेदानामपौरुषेयत्वस्वीकारात्।

## ईश्वरस्यानुमानिकतायाः खण्डनम्

ईश्वरस्य शास्त्रयोनित्वस्वीकारात् नानुमानिकत्वमीश्वरस्य सम्भवति यतो हीतरप्रमाणविघातकानां हेतूनां निर्देशः क्रियते श्रुतिवाक्येभ्यः "नावेदविन्मनुते तं बृहन्तम्" इत्यादिभ्यः। अयमीश्वरो नानुमानगम्य इति कथं लभ्यते तत्रेदमेव प्रमाणमस्ति यदनेकेभ्यः श्रुतिवाक्येभ्यो बहुशोऽनुमानादिप्रमाणगम्यत्वं खण्ड्यते। अत्र नैयायिकोक्तं यदनुमानमस्ति कार्यत्वलिङ्गकं क्षित्यादेः सकर्तृकत्वसाधकं तद्दूष्यते प्रथमो दोषोऽत्र स्वरूपासिद्धिः तथा चोच्यते यदाकाशादिभूतोत्पत्तिर्नैव शास्त्रप्रामाण्यस्वीकारं विना स्वीकर्तुं शक्याऽतः आकाशादौ कार्यत्वस्यासिद्धत्वेन हेतोः स्वरूपासिद्धता।[१०] यदि भवान् वदति यद्वेदेनाकाशादेः कार्यत्वसिद्धौ तेन कार्यत्वेन सकर्तृकत्वानुमानं कर्तुं शक्यं तर्हि प्रश्नो भवति यत् यथा वेदादि नैव कार्यत्वसिद्धिः स्वीकृता भवता तथैव जगत्कारणत्वमपि वेदादेव सिद्धं स्वीकरोतु काऽऽवश्यकताऽनुमानस्य। एवं रीत्याऽनुमाने चास्मत्पक्षप्रवेशोऽपि भवति भवतः।[११] अत्र नैयायिको वक्तुं शक्नोति यद्भवता यत्राकाशे स्वरूपासिद्धिः प्रदर्श्यते तत्तु मयाऽजन्यमेव स्वीक्रियते, तत्र यदि कार्यत्वं नैव सिद्धं भवति मा भवेत् नास्ति काचित् क्षतिर्मम, मया तु क्षित्यङ्कुरादिकं पक्षीकृत्य कार्यत्वेन हेतुना सकर्तृकत्वमनुमीयते तत्र च कार्यत्वं वेदसाहाय्यं विनापि सिद्धं भवति। तर्हि समाधीयते यदेवमपि नैव क्षित्यङ्कुरादीनां सकर्तृकत्वानुमितिः शक्या कर्तुम् यतोहि भूबीजजलजीवादीनामेवाङ्कुरादिकारणत्वं सम्भवति फलतोऽदृष्टस्येश्वरस्य कल्पना नास्ति न्यायसिद्धा।[१२] अपि चैतेनानुमानेन

यदि कर्ता सिद्धोऽपि भवति तर्हि सामान्यतः कर्तृमात्रसिद्धिः। सामान्यतश्च कर्तृमात्रसिद्धौ "यत्र यत्र कर्तृत्वं तत्र तत्र दोषवत्त्वं कुलालादिवत्" अस्यापि प्रत्यक्षतो गृहीतत्वेन दोषवत्त्वमपीश्वरस्य सिद्धं भवेत। दोषवत्त्वं नैवेश्वरस्य स्वीकर्तुं शक्यम्, तथा सतीश्वर एव न स्यात्। अतो जीवस्यैव कर्तृत्वेन सिद्धिः सम्भवा न त्वीश्वरस्य। यद्भवता पक्षधर्मताबलेन क्षित्यादिकर्तुः सर्वज्ञत्वादिकं स्वीक्रियते तदपि शास्त्रमन्तरेण ग्रहीतुमशक्यमेवास्ति। यदि च शास्त्रादेव परमेश्वरस्य स्वरूपादिकं निर्णीय तद्वतो जगत् कारणत्वमनुमीयते तर्हि तथा त्वस्माभिरपि स्वीकृतिरस्ति।[१३]

अपि च, यत्र यत्र कार्यत्वं दृश्यते तत्र तत्र तत्तत्कार्यानुरूपः क्षेत्रज्ञ एव कर्ता भवतु इत्यपि स्वीकर्तुं शक्यम्। समेषु कार्येषु कश्चिदेकः कर्ता नेदमनुमानतः साधयितुं शक्यम्। यतोहि शास्त्रं विना सम्पूर्णस्य विश्वस्य कार्यत्वमप्रसिद्धमतो नैव कार्यत्वहेतुना सकर्तृकत्वानुमानसम्भवः। अतो जगत्कर्ता वेदादेव ज्ञातुं शक्यो नत्वनुमानसहस्रेणापि।[१४] अत्र वेदान्तकौस्तुभे प्रतिपाद्यते यत् सर्वज्ञैर्मन्त्रैः ऋषिभिश्च साकल्येन सर्वथाऽगम्यं दुर्बोधं अनन्तगुणशक्त्यादिमज्जगत्कारणं ब्रह्मानुमानादिवेद्यमिति नैवानुन्मत्तः कश्चिद्वक्तुं शक्नोति किन्तून्मत्त एव कश्चिदेवं वक्तुं पारयति।[१५] अतो जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेवास्ति नान्यं किञ्चिदपि ब्रह्मणि प्रमाणभूतमस्ति।

## ईश्वरो नैव जीवसजातीयः

ईश्वरस्य जीवसाजात्यं न्यायमते प्रतिपाद्यते तदत्र निम्बार्कमते खण्ड्यते, जीवोऽणुस्वरूपः परमेश्वरस्तु विभुः नास्त्युभयोः साजात्यम्। जीवः परमेश्वरांशभूतः, नैवात्यन्तभिन्नो यथा नैयायिकाः स्वीकुर्वन्ति नैव चात्यन्तमभिन्नो यथा चाद्वैतिनो-ऽङ्गीकुर्वन्ति। उभयत्रापि श्रुतिः प्रमाणत्वेन लभ्यते भेदव्यपदेशेऽपि, अभेदव्यपदेशेऽपि। उभयविधानामपि वाक्यानां तुल्यबलवत्त्वात् जीवपरमात्मनोः स्वाभाविकौ भेदाभेदौ विद्येते।[१६] तत्त्वमस्यादिभिर्वाक्यैर्यत् ब्रह्माभिन्नत्वं जीवस्याभिधीयते तस्यासम्भवात् ब्रह्मनिरपेक्षस्थितिप्रवृत्त्यभावाद् ब्रह्माभिन्नत्वमभिधीयते न तु स्वरूपतः।[१७] अंशांशिनोरपि भेदो भवत्येव। ब्रह्मणो जगदुपादानत्वमिति जीवोपादानत्वमपीश्वरस्य। न तु साजात्यमु-भयोः स्वीकर्तुं शक्यम्।

## नैव निमित्तकारणमात्रमीश्वरः

नैयायिकाः यदीश्वरस्य निमित्तकारणतामात्रं प्रतिपद्यन्ते तदत्र खण्ड्यते निमित्तकारणतैव केवलं नास्तीश्वरस्य किन्तूपादानकारणताऽपि। तत्र कारणमस्ति श्रुतिप्रामाण्यम् श्रुतौ प्रतिज्ञा यथा क्रियते तथैव दृष्टान्तोऽपि प्रदीयते-प्रतिज्ञा तावत्

क्रियते "उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातम्" इति अनया प्रतिज्ञया परमात्मनः उपादानत्वं गम्यते। दृष्टान्तः प्रदीयते "यथा सोम्य! एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्यादि। अनेन दृष्टान्तेन दार्ष्टान्तिकेऽपि परमात्मन उपादानत्वं गम्यते। सर्वज्ञः सर्वशक्तिः प्रच्युतस्वरूपः परमात्मा स्वात्मक-स्वाधिष्ठितनिजशक्तिविक्षेपेण स्वात्मानं जगदाकारं परिणमयति। एवं भूतेन परिणामेन च ब्रह्मणो निमित्तत्वमुपादानत्वञ्चोभयमपि सिद्धं भवति। अत्र प्रायशस्त एव तर्काः समुपस्थाप्यन्ते ये चाद्वैतवेदान्ते प्रतिपादिताः।[१८] अन्तरमेतावदेव यदद्वैतिनो विवर्तवादमाश्रयन्ते निम्बार्कमते च परिणामवाद आश्रीयते। जगदीश्वरयोः उपादेयो-पादानभावः स्वीक्रियते। यथा संवेष्ठितः पटः प्रागनभिव्यक्तोऽपि असन्न भवति किन्तु प्रकारान्तरेण स्थितः सदेव भवति, किन्तु प्रसारितः सन् पटत्वेन गृह्यते तथैव सृष्टेः प्राक् जगतोऽनभिव्यक्तत्वात् जगतो जगत्त्वेन ग्रहणं न भवति किन्तु तथापीदं जगत् सदेव भवति नासत् भवति।[१९] सर्गे सञ्जाते चास्य नामरूपमभिव्यक्तं भवति तथा च स्पष्टमिदं विश्वं गृह्यते। अयमीश्वरो जगतोऽभिन्ननिमित्तोपादानकारण- मस्ति।[२०] अत्र नैवमप्यस्ति कश्चिन्नियमो यन्निमित्तकारणमुपादानकारणभिन्नमेव भवेत् एकस्यापि निमित्तकारणत्वमुपादानकारणत्वञ्चोभयमपि सम्भवति। यथा च घटेश्वरसंयोगं प्रति परमेश्वरस्य निमित्तकारणताऽस्ति कार्यमात्रं प्रति तस्य निमित्तत्वश्रवणात्, उपादानकारणताऽपि विद्यते संयोगसमवायित्वात्।[२१] अतः परमेश्वरस्यैव निमित्तकारणत्वमुपादानकारणत्वमुभयमपि स्वीकार्यम्। जगदिदं ब्रह्मोपादानकत्वात् ब्रह्मवदेव सत्यमस्ति, ब्रह्मभिन्नत्वेऽपि ब्रह्माभिन्नं जगत्।

यदि केवलं निमित्तत्वमेवेश्वरस्य स्वीक्रियते तर्हि श्रुतिविरोधात् नैवं सम्भवति येन शास्त्रप्रमाणेन ब्रह्मणः सिद्धिर्भवति तेनैव निमित्ताभिन्नोपादानकारणताऽपि सिद्धा भवति। यथा च नैयायिकः स्वीकरोति निमित्तकारणतामात्रं तत्र तर्कविरोधोऽपि विद्यते। यथा परमाणुषु द्व्यणुकजनकं कर्म कुत उत्पद्यते? स्वत उत्पद्यते वा परमाणुप्रभावाद्वोत्पद्यते नैव स्वत उत्पत्तिः शक्या स्वीकर्तुं नास्ति च किञ्चिन्निमित्तं यमाश्रित्योत्पद्यते। परमाणुप्रभावादप्यत एव कर्म नोत्पत्तुं शक्नोति अचेतनत्वेन कर्मप्रवर्तकत्वानुपपत्त्या परमाणूनां चेतनत्वमापद्यते। अदृष्टहेतुकमपि कर्म नोत्पत्तुं शक्यते यतोहि नादृष्टं परमाणुषु विद्यते येन तत् परमाणुनिष्ठं कर्म जनयेत् जीववृत्तेरदृष्टस्य नैव कथमपि जडपरमाणुगतकर्मचोदनं सम्भति। यदीश्वरप्रयुक्त कर्मेति मतं तर्हि नैतदपि शक्यम् यतो हि तदा प्रश्नोऽयं भवति एष परमेश्वरः यश्च कर्म प्रयुङ्क्ते सः वेदप्रोक्तोऽस्ति उतानुमानादिसिद्धः यदि वेदप्रोक्तस्तर्हि तेनैव वेदेनैव सर्वस्यापि वस्तुजातस्य परमेश्वरोपादानकत्वं प्रतिपाद्यते नैव परमाणुकारणवादः

स्वीकर्तुं शक्यः, यदि चानुमानसिद्ध ईश्वरस्तर्हि तस्त तु स्वरूपतः सिद्धिरेव न भवति।[२२] अपि च, परमाणूनां प्रवृत्तिस्वभावत्वं, निवृत्तस्वभावत्वं, उभयस्वभावत्व-मनुभयस्वभावत्वं वा नैव सम्भवत्येतेषु कश्चिदपि कल्पः आद्ये सृष्टेर्नित्यत्वं प्रलयाभावश्च प्रसक्तो भवति, द्वितीये कल्पे सर्गाभाव आपद्यते नित्यप्रलयप्रसक्तिश्च। तृतीयचतुर्थयोः कल्पयोः सम्भावनापि नास्ति एकस्यैव पदार्थस्य प्रवृत्तिनिवृत्त्युभय-स्वभावत्वं नैव सम्भवति, प्रवृत्तिनिवृत्त्युभयास्वभावत्वं नैव सम्भवति[२३]। इति परमाणुकारणवादस्यैव स्वीकर्तुमशक्यतया कुतस्तदाश्रितः परमेश्वरनिमित्तकारणतावादः स्वीकर्तुं शक्यः। अपि च, परमेश्वरस्य निमित्तकारणत्वमात्रस्वीकारे वैषम्यनै-र्घृण्यादयोऽपि दोषाः सम्भावयितुं शक्यन्ते।

## ईश्वरो नादृष्टाधिष्ठाता

नैयायिका ईश्वरस्यादृष्टाधिष्ठायकत्वं स्वीकुर्वन्ति। निम्बार्कमतेऽदृष्टस्य सत्तैव न स्वीक्रियते। अत्रायमभिप्रायोऽस्ति यत् उभयी स्थितिः सम्भवति, कर्मैवापूर्वद्वारेण फलं ददाति, अथवा तत्तदाराधयिता परमेश्वरः। तत्र कर्मणां क्षणिकत्वात् कालान्तरभाविफलदायकत्वं नैव सम्भवति। अदृष्टमेव कर्मजन्यं कालान्तरे फलदाने समर्थमस्तीत्यपि न, अचेतनस्यादृष्टस्य काष्ठलोष्टसमस्य चेतनाप्रवर्त्तितस्य प्रवृत्तिरनुपपन्नेति कश्चित् प्रवर्त्तकः स्वीकार्य एव स्वातन्त्र्येण तस्य फलप्रदानसामर्थ्ये प्रमाणाभावात्। यदि च प्रवर्तक ईश्वरः स्वीक्रियते तर्ह्येवं स्वीकारे लाघवमस्ति यत् सर्वाध्यक्षः सर्वज्ञः सर्वशक्तिर्महोदारः परमेश्वरः तत्तत्कर्मभिराराधितः तत्तत्कर्मानुरूपं फलं काले प्रददाति काऽऽवश्यकता प्रथममदृष्टस्वीकारस्य तदनन्तरं च तदधिष्ठायकस्वीकारस्य[२४]।

## ईश्वरो न वेदप्रणेता

नैयायिकाः ईश्वरस्य वेदप्रणेतृत्वं स्वीकुर्वन्ति किन्तु निम्बार्कमते वेदाः अपौरुषेयाः नास्ति वेदानां कश्चित् प्रणेता। अत्र प्रधानस्तर्कोऽयमेवास्ति यत् कुत्रापि वेदकर्तुः विषये नोल्लिख्यते यत्र कुत्रदिपि समुल्लेखो भवति तत्रर्षीणां मन्त्रस्मर्तृत्वेन मन्त्रद्रष्टृत्वेन चोल्लेखो भवति न तु वेदकर्तृत्वेन। वेदकर्तृत्वं नैवेश्वरस्यापि श्रूयते। एष तर्कोऽद्वैतिभिः विशिष्टाद्वैतिभिः किं वा वेदापोरुषेयत्वाङ्गीकर्तृभिः सर्वैरपि दर्शनैः प्रदीयते।

**निष्कर्षः**

निष्कर्षरूपेणैवं वक्तुं शक्यते यन्निम्बार्कमते ब्रह्मपरिणामवादमाश्रित्य परमेश्वरस्यैव

जगन्निमित्ताभिन्नोपादानकारणत्वं स्वीक्रियते। शास्त्रैकप्रमाणक त्वाच्चेश्वरस्यानुमानिकतादि निरस्यते। शास्त्रेण निमित्ताभिन्नोपादानकारणत्वसिद्धेः न केवलं निमित्तकारणतामात्रम्। जीवस्येश्वरांशत्वान्नेश्वरस्य जीवसाजात्यम्। वेदानामपौरुषेयत्वात् वेदप्रणेतृत्वाभावः परमेश्वरेऽदृष्टाभावाच्च नादृष्टाधिष्ठायकत्वम्।

## पादटिप्पणी

१. परमात्मनो जीवोंशः। वे० पा० सौ० सूत्र २/३/४२।
२. अंशो हि शक्तिरूपो ग्राह्यः। वे० कौ० २/३/४२।
३. वे० कौ० २/१/१३, वे० पा० सौ० तथा वे० कौ० २/१/२२।
४. ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोग्यम्।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहुः।। दशश्लोकी १
५. तस्य जीवस्य कर्तुत्वं पराद्धेतोरस्ति। वे० पा० सौ० २/३/४०
६. अप्राकृतं प्राकृतरूपकं च कालस्वरूपं तदचेतनं मतम्।
मायाप्रधानादिपदप्रवाच्यं शुक्लादिभेदाश्च समेऽपि तत्र।। दशश्लोकी ३
७. स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्।। दशश्लोकी ४
८. सर्वज्ञः स्वाभाविकाचिन्त्यानन्तयावदात्मवृत्तिगुणशक्त्याद्याश्रयो ब्रह्मरुद्रेन्द्र प्रकृतिपरमाणुकर्मस्वभावादिनियन्ता दोषास्पृष्टसीमा चिदचित्स्वाभाविकभेदाभेदाश्रयो भगवान् वासुदेवः श्रीपुरुषोत्तमः। वे० कौ० १/१/१।
९. शास्त्रमेव योनिस्तज्ज्ञप्तिकारणं यस्मिंस्तदेवोक्तलक्षणलक्षितं वस्तु ब्रह्मशब्दाभिधेयमिति। वे० पा० सौ० १/१/३।
१०. आकाशविभूतोत्पत्तेर्वेदमन्तरेण ज्ञातुमशक्यत्वात्तन्निष्ठकार्यत्वस्यासिद्धत्वेन हेतोः स्वरूपसिद्धत्वात्। वे० कौ० १/१/३, पृ० १६।
११. वे० कौ० १/१/३, पृ० १६
१२. भूबीजजललवादीनां तत्कारणत्वकल्पनासम्भवाददृष्टकल्पनाया अन्यायत्वात्। तदेव
१३. कौस्तुभप्रभा १/१/३, पृ० २७।
१४. कृत्स्नस्य तु विश्वस्य वेदं विना कार्यत्वमप्रसिद्धमतो जगत्कर्ताऽपि वेदादेव ज्ञातुं शक्यो नत्वनुमानसहस्रेण। वे० कौ० १/१/३. पृ० १६
१५. किं सर्वज्ञैर्मन्त्रैः ऋृषिभिश्च साकल्येन सर्वथाऽगम्यं दुर्बोध्यचिन्त्यानन्तगुण शक्यादि- मज्जगत् कारणं ब्रह्मानुमानादिवेद्यमिति कोऽनुन्मत्तो ब्रूयात। तदेव
१६. वे० कौ० ३/२/२७, पृ० २९०।
१७. वे० कौ० ३/२/२८, पृ० २९१।
१८. वे० कौ० १/४/२३-२७।

१९. यथा च पूर्वसंवेष्टितः पश्चात्प्रसारितः पटस्तद्विश्वम्। वे० पा० सौ० २/१/१८ द्रष्टव्य वे० कौ० २/१/१८।

२०. तथा च जगदभिन्ननिमित्तोपादानत्वे सति सत्यत्वादिमत्त्वं ब्रह्मलक्षणं सिद्धम् वे० कौ० २/१/२, पृ० १३।

२१. न चोपादानाभिन्ननिमित्तस्य कारणत्वं कुत्रापि न दृश्यते इति वाच्यम्, घटेशसंयोग जीवगतज्ञानादौ ईशजीवयोस्तथा दर्शनात्। कौ० प्र०, पृ० २०

२२. वे० कौ० २/२/१२, पृ० १८७।

२३. कौ० प्र० २/२/१४, पृ० १७८।

२४. कौ० प्र० ३/२/३८, पृ० ३२२।

## चतुर्थोऽध्यायः (भाग ज)

# वाल्लभवेदान्तदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनम्

श्रीमान् वल्लभाचार्यः शुद्धाद्वैतवेदान्तमतं स्वकीयेऽणुभाष्ये प्रत्यपीपदत्। अस्य शुद्धाद्वैतपदस्यार्थो भवति शुद्धं नाम मायासम्बन्धरहितं तदेव ब्रह्मात्र कार्यकारण-रूपं भवति न तु मायिकम्। अत एवायं सिद्धान्तः शुद्धाद्वैतपदेन द्योत्यते।[१] यद् ब्रह्मकार्यरूपं यच्च कारणरूपं तच्छुद्धमेव न तु मायिकम्। अत्र शुद्धाद्वैतसिद्धान्ते केवलस्य ब्रह्मण एव सत्ता स्वीक्रियते न हि तदतिरिक्तस्य कस्यचिदपि पदार्थ-जातस्यास्तित्वम्। अद्वैतवेदान्तमतेऽपि यद्यपि केवलस्य ब्रह्मण एवास्तित्वं किन्तु तत्र मायासम्बन्धेन कार्यकारणभावो भवति। अत्र तु मायासम्बन्धं विनैव कार्यकारणभावो भवति। अतः स्पष्टीभवत्येतत् यदत्र दर्शने तत्त्वमीमांसादृष्ट्या केवलं ब्रह्मण एवास्तित्वमस्ति। अस्यैव ब्रह्मणः तिस्रः कोटयः सन्ति स्वरूपकोटिः कारणकोटिः कार्यकोटिश्च[२]। ब्रह्मणः स्वरूपमस्ति सच्चिदानन्दम्। कारणकोटौ इच्छा, माया, कर्म, प्रकृति, पुरुष, कालाः प्रविष्टाः भवन्ति। एतेषां यद्यप्याविर्भावतिरोभावौ भवतः यथापि नैतेषामनित्यत्वं भवति। यतो ह्यनित्यत्वं नाम कस्मिंश्चित् काले विद्यमानत्वं कश्मिंश्चित् कालेऽविद्यमानत्वम्। किन्तु कालः स्वयमप्यत्रैतेषु सहैव आविर्भवति[३]। अतो नैवेच्छादीनां नित्यत्वं खण्डितं भवति, नित्या एवेच्छादयः स्वीक्रियन्ते। ब्रह्मणः स्वभावोऽपि कारणकोटावेव प्रविष्टो भवति। कार्यकोटौ महदादिशरीरान्तं ब्रह्माण्डान्तं जगत् प्रविष्टमस्ति। किन्त्वेतेषामपि नैवोत्पादविनाशौ भवतः किन्त्वाविर्भावतिरोभावावेव भवतः। आविर्भावो नाम अनुभवविषययोग्यता। तदविषयत्वयोग्यता तिरोभावः।[४] अत्र प्रमुखतः त्रय एव तत्त्वमीमांसादृष्ट्या प्रतिपाद्यन्ते ब्रह्म जीवः जगच्च। यद्यपि परवर्तिनोरुभयोर्नास्ति ब्रह्मातिरिक्ताऽस्तिता। किन्तु स्पष्टप्रतिपत्तये तत्प्रतिपादनमावश्यकमिव प्रतिभाति। अन्येषां मायादीनां प्रतिपादनं प्रकृतानुपयोगीति तत्त्यज्यते।

## ब्रह्म

व्यापकमद्वयं ब्रह्म सच्चिदानन्दस्वरूपम्। ''सर्वं खल्विदं ब्रह्म'' इत्यादिश्रुतिगिरा समस्तस्य पदार्थजातस्य ब्रह्मात्मकत्वं सिद्धं भवति। इदं ब्रह्म सर्वधर्म विशिष्टं स्वीक्रियते यतोहि विरुद्धयोर्धर्मयोरपि व्यपदेशोऽस्ति ब्रह्मणि, निर्गुणत्वश्रुतिरपि विद्यते सगुणत्वश्रुतिरप्यस्ति। उभयव्यपदेशेन विरुद्धधर्माणामप्याश्रयो भगवान्। अनेकाविरुद्धधर्मवत्त्वप्रतिपादिका श्रुतिरस्ति, अतः सर्वाविरुद्धधर्माणामाश्रयो भगवानस्ति।[५] अतः सगुणमपि ब्रह्म तदेव निर्गुणमपि। एषा विरुद्धधर्माणां ब्रह्मणि सत्ता स्वाभाविक्यैव भगवतो महिम्नो नास्ति क्वचित् सीमा। तद् ब्रह्माणोरणीयानप्यस्ति, महतो महीयानपि। कार्यकारणयोरत्र भेदानङ्गीकारात् जगतो ब्रह्मणाऽद्वैतमस्ति। यथा सुवर्णनिर्मितं कुण्डलादि सुवर्णेन भिन्नं न भवति किन्तु सुवर्णात्मकमेव भवति। तथैव ब्रह्मारब्धमिदं जगत् नैव ब्रह्मभिन्नं किन्तु ब्रह्माभिन्नमेव। अस्य ब्रह्मणो जगत्कर्तृत्वमपि स्वाभाविकमेव न तु मायिकम्।

## जीवः

यदा ब्रह्मणो रमणेच्छा भवति तदा नानारूपात्मकस्य जगतः जीवानां च व्युच्चरणं भवति। व्युच्चरणं समुत्पत्तिर्नास्तीति व्युच्चरणे सत्यपि जीवननित्यतायाः ह्रासो न भवति। अत्र मते जीवो ज्ञाता ज्ञानस्वरूपोऽणुरूपश्च। भगवतः संदेशेन जडानां चिदंशेनाविर्भावो भवति। निरंशमपि ब्रह्म श्रुतिबलेन सांशमपि स्वीक्रियते तस्य विरुद्धधर्माश्रयत्वस्वीकारात्। यथाऽग्नेर्विस्फुलिङ्गा आविर्भवन्ति तथैव ब्रह्मणः जीवा आविर्भवन्ति जडानां चिदंशेन जीवानामाविर्भावेऽपि सति नैव ब्रह्मणि विकारः स्वीक्रियतेऽविकृतपरिणामवादस्वीकारात्[६]। जीवोऽयं त्रिप्रकारको भवति स्फुलिङ्गवद्व्युच्चरणकालेऽस्यानन्दांशस्य तिरोधानं भवति। तदाऽविद्यासम्बन्ध-भवनात् पूर्वं जीवोऽयं शुद्ध इत्युच्चते। अविद्यासम्बन्धे सम्पन्ने जीवः संसारी भवति। संसारबन्धान्मुक्तः मुक्तो भवति[७]।

## जगत्

अविकृतपरिणामवादाभ्युपगमेन जगदुत्पत्तिरत्र स्वीक्रियते। जगदिदं ब्रह्मणो-ऽभिन्नमेव तथैवास्ति यथा सुवर्णकुण्डलं सुवर्णादिभिन्नं न भवति किन्तु सुवर्णमेव भवति। अत्र जगतः सत्यता स्वीक्रियते न तु मायिकत्वं किन्तु जगतः सत्यत्वं विद्यते। यद्यपि ब्रह्मत्वेनैव जगतः सत्यत्वं नहि जगत्त्वेन।[८] अत्र दर्शने जगदुत्पत्तिविषये विस्फुलिङ्गवत् उत्पत्तिः प्रतिपाद्यते। अत्रैको विशेषः-

जगत् संसारयोर्विलक्षणं पार्थक्यं स्वीक्रियते। ईश्वरेच्छाविलासेन सदंशेनाविर्भूतं जगदस्ति। तस्मिन् जगति अविद्यया जीवकल्पितः ममत्त्वादिरूपः संसारः। अयं संसारोऽसत् जगच्च सदस्ति। अविद्यानिवृत्तौ संसारो निवर्तते जगत्तु तदाप्यनुभूयते। अविद्यायाः पञ्च पर्वाणीमानि (१) स्वरूपाविस्मरणम् (२) देहाध्यासः (३) इन्द्रियाध्यासः (४) प्राणाध्यासः (५) अन्तः करणाध्यासश्च[९]। अत्र स्पष्टं भवतीदं यद्वस्तुतो ब्रह्मैवैकं तत्त्वमस्ति वाल्लभसिद्धान्ते। सर्वमपि जडजीवादि ब्रह्मैव ब्रह्मणोऽखिलात्मकत्वात्।

## न्यायाभिमतेश्वरस्य वल्लभाभिमतब्रह्मणश्च तुलना

न्यायमते परमेश्वरस्य स्वरूपं यदा पश्यामस्तदा दृष्टिपथमायाति यद्यथा परमेश्वरस्य पारमार्थिकमस्तित्वं तथैवान्येषामपि पदार्थानाम्। एतदत्रापि दर्शनेऽस्ति यथा ब्रह्मणः पारमार्थिकी सत्ता तथैव जडजीवानाम् तयोः ब्रह्मांशत्वात् किन्तु प्रमुखं पार्थक्यमप्यत्रैवास्ति न्यायाभिमतेश्वराद्भिन्नानि वस्तूनि सन्ति तानि च स्वातन्त्र्येणा भिन्नानि विद्यन्ते। अत्र तु जडजीवादीनि न हि परमार्थतो ब्रह्मणो भिन्नानि किन्तु ब्रह्मात्मकान्येव तयोः ब्रह्मणः सह तथैवाभेदो यथा कटककुण्डलयोः सुवर्णेनाभेदो भवति। एतच्च शास्त्रप्रमाणेन सिद्धं भवति। ब्रह्मणः शास्त्रैकप्रमाणकत्वं वाल्लभ-सिद्धान्तेऽपि न्यायाभिमतेश्वरस्य त्वानुमानिकत्वमस्ति। अत्राप्यस्ति पार्थक्यमुभयोः दर्शनयोः सिद्धान्तेषु। न्यायदर्शने परमेश्वरो निमित्तकारणमात्रमस्ति, अत्र तस्यैव समवायिकारणत्वमप्यस्ति। अत्र दर्शने ब्रह्मणः समवायिकारणत्वं प्रतिपाद्यते न तूपादानपदेन व्यवहारः क्रियते तत्र कारणमस्ति यल्लोके ह्युपादानपदेन कर्तृक्रियया परिच्छिन्नस्यैवाभिधानं भवति दृश्यते च। अतः समवायिकारणपदेनात्र व्यवहारः।[१०] समवायिकारणस्य विकृतत्वनियमस्तु नास्त्येवाविकारेऽपि सुवर्णस्य कुण्डलसमवायि-कारणत्वात् इदं ब्रह्म च निमित्तान्तरनिरपेक्षं कारणमस्ति। न्यायाभिमतेश्वरस्तु निमित्तकारणमात्रमिति समवायिकारणीभूतान् परमाणून सहकारिकारणमदृष्टा दिकं चापेक्षते। न्यायाभिमतेश्वरोऽदृष्टाधिष्ठाता, अत्र तु ब्रह्मैव सर्वेषां कर्मणां फलं प्रददाति नास्त्यदृष्टस्य काचिदप्यावश्यकता। फलतोऽदृष्टस्य सत्तैव न स्वीक्रियतेऽद्वैत-विशिष्टाद्वैतादिसिद्धान्तवत्। न्यायमत ईश्वरो वेदानां प्रणेताऽत्र तु वेदाः अपौरुषेयाः स्वीक्रियन्ते।

## ईश्वरानुमानिकत्वालोचनम्

वाल्लभसिद्धान्तेऽपि शाङ्कररामानुजनिम्बार्कादिवत् शास्त्रस्यैव परमं प्रामाण्यं स्वीक्रियते। वेदविषयेऽत्रोल्लिख्यते "वेदश्च परमाप्तोऽक्षरमात्रमप्यन्यथा न वदति"

अग्रे च वेदप्रामाण्यस्यास्वीकारे दोषाशङ्का प्रदीयते यद्यदि वेदेष्वपि प्रामाण्यसत्त्वे विश्वासो नास्ति तर्हि सर्वत्रैवाविश्वासः प्रसक्तो भवति। अतः परमेश्वरस्य जगत उत्पत्तिस्थितिविनाशकर्तृत्वं वेदबोधितत्वात् स्वीक्रियते। तस्य परब्रह्मणो यथा सत्यत्वादिधर्मवत्त्वं वेदेन बोध्यते तथैव कर्तृत्वादिकमप्युपपद्यते।[१२] प्रापञ्चिकस्य कर्तृत्वस्य देहाध्यासकृतत्वात् संसारिधर्मत्वेऽपि ईदृशस्यालौकिकस्य कर्तृत्वस्य ब्रह्मधर्मत्वमप्युपपद्यते। इदं जगत् अनेकभूतभौतिकदेवमनुष्याद्यनेकलोकाद्भुतरचनायुक्तं ब्रह्माण्डकोटिरूपं मनसाप्याकलयितुमशक्यरचनम्। अस्योत्पत्तिस्थितिभङ्गकरणं तदप्यनायासेनालौकिकमेवातस्तत्कर्तृत्वमसंसारिणो ब्रह्मण एव सम्भवति।[१३] एतच्च सर्वं शास्त्रयोनित्वादेव सिद्धं भवति ब्रह्मणः। नैयायिकास्तावदनुमानत ईश्वरस्य निमित्तकारणत्वादिकमीश्वरं च तद्गतसार्वज्ञ्यादिकं च साधयन्ति। तानि चानुमानानि संदूष्यन्तेऽत्र। कार्यत्वहेतुकेऽनुमाने बीजोत्पन्नाङ्कुरवत् इति साधारणोऽयं हेतुर्भवति।[१४] अत्र यद्यप्येवं प्रयुज्यमाने सत्प्रतिपक्षत्वं भवति हेतोः किन्तु यद्यङ्कुरादेः बुद्धिमत्कारणजन्यत्वाभावः स्वीक्रियते यथा च दर्शनेनानुभूयते तर्ह्यवश्यमयं हेतुः साधारणो भवति। अपि च जगता सहेश्वरसम्बन्धोऽत्यन्तमदृष्ट इति साध्यस्य पक्षधर्मत्वाभावात् विरुद्धोऽयं हेतु स्यात्[१५]। यस्य कस्यचित् बुद्धिमतः साधने सिद्धसाधनत्वमापद्यते जीवानामेवादृष्टद्वारा बुद्धिमत्कारणत्वसम्भवात्।[१६] अत्र परमेश्वरस्यानुमानिकत्वं दूषयद्भिः रामानुजाचार्यैः ये दोषाः प्रदीयन्ते तेऽत्र दर्शनेऽपि वल्लभानुयायिभिः न्यायाभिमतेश्वरं दूषयितुं प्रदीयन्ते।[१७] पूर्वोक्ताश्च दोषाः भास्कराचार्येण प्रदीयन्ते इति रीत्येश्वरस्य प्रमाणान्तरसिद्धत्वं निराकृत्य शास्त्रैकसमधिगम्यत्वं सिद्धान्तयन्ति वाल्लभाः।

## नहीश्वरो जडजीवादिभिन्नो

ईश्वरो जडजीवादिभिन्नो नास्त्यस्मिन् दर्शने तस्येश्वरस्य ब्रह्मणो जडजीवाद्य-खिलात्मकत्वात्। न्यायदर्शने जडजीवादिभिन्नः परमेश्वरः। अत्रैतन्न स्वीक्रियते शास्त्रेण तथाऽप्रतिपादनात्। किन्तु "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किञ्चन" इत्यादिश्रुत्यनुरोधात्, ब्रह्मात्मकत्वमेवाखिलस्य जगतः जीवानां च।

## नेश्वरो जीवसजातीयः

न्यायदर्शने स्वीकृतमीश्वरस्य जीवसाजात्यमपि नैवास्मिन् दर्शने स्वीकर्तुं शक्यम्, जीवस्यापि ब्रह्मात्मकत्वात्, ब्रह्मांशत्वात्। भिन्ने सत्येव साजात्यं भवति, वाल्लभसिद्धान्ते च जीवेशयोर्भेदाभावात् साजात्यं नास्ति। जीवस्यांशत्वे शास्त्रप्रामाण्य-मस्तीति तत् स्वीक्रियते। जीवसाजात्यप्रतिपादिका च नास्ति काच्छ्रुतिर्येन जीवसाजात्यं ब्रह्मणि स्वीक्रियेत।

## ईश्वरो न निमित्तकारणमात्रम्

ईश्वरो निमित्तकारणमात्रं नास्ति किन्तूपादानमपि शास्त्रद्वारा तथैव प्रतिपादनात्। यदि च केवलं निमित्तकारणत्वं स्वीक्रियते यथा च न्यायदर्शने स्वीक्रियते तर्हि सम्भवन्त्यनेके दोषाः, तथाहि निमित्तकारणमात्रमङ्गीकार्य ईश्वरो लौकिकन्यायेनैव कल्पनीयो भवेत्। लौकिकश्च कर्ताऽधिष्ठित एव किञ्चित् करोति, अत ईश्वरेऽप्यधिष्ठानमङ्गीकर्तव्यम्। अधिष्ठानं नाम शरीरम् एवं यदीश्वरस्य शरीरं स्वीक्रियते तर्हि भवत्सिद्धान्तहानिः, भवता परमेश्वरस्याशरीरत्त्वस्वीकारात्। अपि च, तस्य शरीरस्यापि कश्चित् कर्ता भाव्यः स चाप्यधिष्ठित एव किञ्चित् कुर्यादित्येवमनवस्थाप्यापन्ना भवति। अनवस्थायामापन्नायां कथङ्कारमीश्वरः सिध्येदित्यसम्भव एव स्यात्।[१८] एवमेवात्राद्वैतवेदान्तदिशा भोगादिप्रसक्तिरूपो-दोषोऽन्तवत्त्वमसर्वज्ञता च प्रदीयते दोषरूपेण[१९]। अतः श्रुत्युक्तदिशा परमेश्वरस्य निमित्ताभिन्नोपादानकारणत्वं स्वीकरणीयम्। श्रुत्या च "प्रतिज्ञादृष्टान्तानुरोधात्" "अभिध्योपदेशाच्च" एकस्यैवाऽविकृतपरिणामवादमाश्रित्य निमित्तकारणत्व-मुपादानकारणत्वं च प्रतिपाद्यत इत्येतत् सर्वं तथैवात्रपि स्वीक्रियते यथा शाङ्करमत एकस्यैवोपादानकारणत्वं निमित्तकारणत्वञ्च साध्यते।[२०]

## नादृष्टाधिष्ठातेश्वरः नैव च वेदप्रणेता

अदृष्टस्यानङ्गीकारेणादृष्टाधिष्ठातृत्वमपीश्वरस्य नास्ति। परमेश्वरो जीवानां पुण्यापुण्यानुसारेण कर्मफलं वितरति यथा च स्वामी सेवकेभ्यः तेषां कर्मानुसारेण पुरस्कारं वा दण्डं वा प्रददाति[२१]। एतदप्यद्वैतवेदान्तदिशैव। वेदानामपौरुषेयत्वस्वी-करणात् वेदप्रणेतापि परमेश्वरो नास्ति। अत्रापि वेदपौरुषेयत्वनिवारणे ता एव युक्तयो व्यवहारपथमानेयाः याश्चान्यैः दार्शनिकैः प्रतिपादिताः। वाल्लभसम्प्रदायस्य ग्रन्थसम्पत्तेरल्पतया नाधिकमत्रोपलभ्यते।

## निष्कर्षः

वाल्लभमतपर्यालोचने कृते सतीदं स्पष्टमेव सिद्धं भवति यत् प्रमुखो विरोधः परमेश्वरस्य शास्त्रैकप्रमाणकत्वे शास्त्रान्यप्रमाणकत्वे चास्ति। वाल्लभमते परमेश्वरस्य शास्त्रैकप्रमाणकत्वे बलमाधीयतेऽत एवानेकेषु स्थलेषु न्यायदर्शनाभिमतस्ये-श्वरस्य खण्डनं विधीयते।

## पादटिप्पणी

१. मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं शुद्धं ब्रह्म न मायिकम्।। शुद्धाद्वैतमार्तण्डः २८ श्लोकः।

२. द्वादशदर्शनसङ्ग्रहः भूमिका, पृ० ७६

३. तदेव, पृ० ३६५।

४. अनुभवविषयत्वयोग्यता आविर्भावः। तदविषयत्वयोग्यता तिरोभावः।
विद्वन्मण्डनम्, पृ० ७

५. तस्मात्सकलविरुद्धधर्मा भगवत्येव वर्तन्त इति न कापि श्रुतिरुपचरितार्थेति सिद्धम्।
अणुभाष्यम् ३/२/२७

६. विस्फुलिङ्गा इवाग्नेर्हि जडजीवाः विनिर्गताः
सर्वतः पाणिपादान्तात् सर्वतोऽक्षिशिरोमुखात्।।
निरिन्द्रियात् स्वरूपेण तादृशादिति निश्चयः
सन्देशेन जडाः पूर्वं चिदंशेनेतरे अपि।। अणुभाष्यम् २/३/४३, पृ० ७५०-५१।

७. शु० अ० मा०, पृ० ७२

८. ब्रह्मत्वेनैव जगतः सत्यत्वं नान्यथेति। अणुभाष्य १/४/२३, पृ० ५३५

९. शु० अ० मा०, पृ० ७३

१०. अणुभाष्यप्रकाशः, पृ० ११८

११. अणुभाष्यम्, पृ० ५५

१२. सत्यत्वादिधर्मवत् कर्तृत्वस्याप्युपपत्तेः। तदेव

१३. अणुभाष्यम्, पृ० ५६

१४. जगत् न बुद्धिमत्कारणपूर्वकं कार्यत्वाद् बीजोत्पन्नाङ्कुरवदिति साधारणो हेतुः।
अणुभाष्यप्रकाशः, पृ० ७१

१५. किञ्च जगता सहेश्वरसम्बन्धस्यात्यन्तापरिदृष्टत्वेन साध्यस्य पक्षमर्त्वाभावादयं विरुद्धोऽपि।
तदेव

१६. यस्य कस्यापि बुद्धिमतः साधने सिद्धसाधनत्वं च। तदेव

१७. अणुभाष्यप्रकाशः, पृ० ७१-७७

१८. अणुभाष्यम् २/२/३९

१९. अणुभाष्यम् २/२/४०-४१

२०. अणुभाष्यम् १/४/२३-२७

## पञ्चमोऽध्यायः

# समीक्षणमुपसंहारश्च

एवं रीत्या तत्तद्दर्शनदृष्ट्या क्रमशो न्यायाभिमतः परमेश्वरः पर्यालोचितः। इदानीं तत्तद् दर्शनैराक्षिप्ता युक्तयः समीक्ष्यन्ते। न्यायाभिमतेश्वरस्य परमेश्वरस्य विषये न्यायदर्शनसमानतन्त्रं वैशेषिकदर्शनं योगदर्शनं च परित्यज्यान्यैः सर्वैरपि दर्शनैराक्षेपाः प्रदर्शिताः वैशेषिकदर्शनन्तु न्यायदर्शनस्य समानतन्त्रमेवास्ति, योगदर्शनस्यापि न्यायाभिमतपरमेश्वरस्वरूपविषये मतसाम्यमस्ति। यश्च मतभेदो विद्यते योगन्यायमतयोरीश्वरस्वरूपविषये स तत्तत्सिद्धान्तानुसारी मूलतो नैतयोर्दर्शन-योरीश्वरविषये किञ्चन वैमत्यम् तत्रैक आक्षेपः सर्वेषु दर्शनेषु समानः। सोऽयमाक्षेपो विद्यते परमेश्वरस्यानुमानेन सिद्धिर्नैव सम्भवति।

### अनुमानस्याप्रामाण्यान्नेश्वरोऽनुमानतः सिध्यतीति चार्वाकमतस्य समीक्षा

अत्र चार्वाकस्तावत् प्रवदति यत् प्रत्यक्षामूलकस्यानुमानस्य प्रामाण्यमिष्यते। एतच्चार्वाकमतमनादरणीयमेव, तत्र कारणमेतदस्ति यत् प्रश्नोऽयं जायते यत् चार्वाको भूतेभ्यश्चिदुत्पत्तिमङ्गीकरोति तत् केन प्रमाणेन सिध्यति? किं तावत् प्रत्यक्षतः उत वाऽनुमानेन? न तावत् प्रत्यक्षप्रमाणेन भूतेभ्यश्चिदुत्पत्तिः सिध्यति। यदि प्रत्यक्षतो भूतेभ्यश्चिदुत्पत्तिः सिद्धा स्यात्तदा नैवं दर्शनान्तरैः प्रत्यक्षस्यैवमपलापः कर्तुं शक्यः। नहि प्रत्यक्षतो भूतेभ्यश्चिदुत्पत्तिः सिद्धा। यदि चात्रानुमानस्य प्रामाण्यं स्वीक्रियते तर्हि नैतदपि शक्यमस्यानुमानस्य प्रत्यक्षमूलकत्वाभावात् नहि भूतेभ्यश्चिदुत्पत्तिसाधकं लिङ्गं किञ्चिद्गम्यते।[१] यदि च देहसत्त्वे चैतन्यं देहाभावे च चैतन्याभाव एवं स्यात्तदा भूतेभ्यश्चिदुत्पत्तिर्देहस्य च चैतन्यं स्वीकर्तुं युक्तं भवेत् किन्तु नैवमस्ति देहाभावे चैतन्याभाव इति व्यतिरेकस्याप्रसिद्धेः। देहाभावे चैतन्याभावः केन प्रमाणेन सिद्ध्येत्[२]? वस्तुतश्चार्वाकाणामेष सिद्धान्तोऽत्यन्तं खण्डनीयोऽस्ति यदनुमानस्य प्रामाण्यं प्रत्यक्षाधीनमेवास्ति। यद्येवं स्वीक्रियते तर्हि न हि केवलं चार्वाकसिद्धान्ता एव खण्डिताः भवन्ति, अपितु नैके व्यवहारा अपि नैव समाधातुं

शक्यन्ते। तथाहि चार्वाकसिद्धान्तोऽस्ति यत् प्रत्यक्षामूलकस्यानुमानस्य प्रामाण्यं नास्ति कुत एतत् सिद्धं भवति? प्रत्यक्षेण तावन्नास्य सिद्धिर्भवति। यदि च लिङ्गतोऽस्य सिद्धिः तर्हि स्वमतविरोधः। न ह्यस्यानुमानस्य प्रामाण्यं प्रत्यक्षतः प्रमाणीकर्तुं शक्यते। अतश्चैतन्यस्य भूतकार्यत्वं नैवाङ्गीकर्तुं शक्यम्। अनुमानमात्रस्यैव प्रामाण्यं स्वीकरणीयमेव तदनुमानं प्रत्यक्षमूलकं भवेत् नवा भवेत्, केवलं व्याप्तिनिश्चयादिकमपेक्षितं भवति अनुमायाः प्रामाण्यसम्पत्तये।

## नेश्वरोऽनुमानस्य विषय इत्यस्य समीक्षा

परमेश्वरस्यानुमानतः सिद्धिर्नैव सम्भवतीति वदन्तो वदन्ति यदनुमानस्य नास्ति नियतप्रामाण्यम् तर्कस्याप्रतिष्ठानात्। एको विद्वान् यं तर्कं समुपस्थाप्य परमेश्वरस्यास्तित्वं साधयति अपरश्च किञ्चिद्व्यत्यासेन तमेव तर्कं प्रयुज्य परमेश्वरास्तितां खण्डयति। अतोऽनुमानं परमेश्वरविषये नैव सम्भवति। एतत् सर्वं वेदान्तदर्शनानुसारं न्यायाभिमतेश्वरस्य पर्यालोचनावसरेऽद्वैतविशिष्टाद्वैतमध्वनिम्बार्कवल्लभसिद्धान्ताननुसृत्य बहुशः प्रतिपादितम्। अत्रैतेषामैकमत्यमस्ति यत् परमेश्वरस्य सिद्धिर्नह्यनुमानतः कर्तुं शक्या। यतो ह्यनुमानं नाम अव्यभिचारिणी व्याप्तिः सा च न सम्भवति परमेश्वरे। किन्तु व्याप्त्याभासमात्रत्वमीश्वरसाधकानुमानानाम् विपरीतोदाहरणसम्भवात्। अतो युक्तिभिरिमाभिः केवलं सम्भावनामात्रमेव प्रदर्श्यते। तत्र श्रुतिसिद्धार्थस्य सम्भाव्यतायामेव युक्तीनां स्वारस्यमस्ति। परमेश्वरस्तु शास्त्रैप्रमाणकः। व्याप्तिरूपत्वमस्ति न्यायदर्शनोक्तानामनुमानानां नवेत्यग्रे विचारयामः किन्त्विदानीमेतदवश्यं विचारणीयं यत् शास्त्रैकप्रमाणकत्वादीश्वरस्य स्वीकरणमुचितं वाऽनुचितं वेति?

अत्र प्रथमस्तावत् प्रश्नो विद्यते यत् शास्त्रपदेन किमपेक्ष्यते? अद्वैत विशिष्टाद्वैतमध्वनिम्बार्कवल्लभप्रभृतिभिर्दर्शनैः शास्त्रैकप्रमाणकत्वात् परमेश्वरस्यास्तित्वं स्वीक्रियते परन्त्वाश्चर्यावहमेतदस्ति यदेतेषां दर्शनानामपीश्वरस्वरूपविषयेऽत्यन्तं मतभेदः। अद्वैतवेदान्ते मूलतः परब्रह्मण एवैकमस्यास्तित्वं पारमार्थिकं स्वीक्रियते, विशिष्टाद्वैतवेदान्तदर्शने चिदचिदीश्वराणां त्रयाणां तत्त्वानामस्तित्वं स्वीकृतमस्ति, मध्ववेदान्ते तु बहूनां पदार्थानां सत्ताऽङ्गीकृता, निम्बार्कमते परमेश्वरस्यैकत्वेऽपि द्वैताद्वैतसिद्धान्तोऽङ्गीकृतः, वाल्लभसिद्धान्ते च शुद्धाद्वैतसिद्धान्तः। शास्त्रैकप्रमाणत्वेऽप्येतेषां दर्शनानां सिद्धान्तभेदे कारणं किम्? शास्त्रपदेन शाङ्करवेदान्ते ऋग्वेदादयोऽभिप्रेताः, मध्वानुयायिनस्तावत् स्कन्दोक्तं श्लोकमिमं शास्त्रस्वरूपविषये उदाहरन्ति–

''ऋग्यजुःसामाथर्वा च भारतं पाञ्चरात्रकम्।
मूलरामायणं चैव शास्त्रमित्यभिधीयते।।
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्[३]।।''

अद्वैतवेदान्ते पाञ्चरात्रस्य प्रामाण्यं नैवाङ्गीक्रियते। ''उपपत्त्यसम्भवात्'' इति सूत्रव्याख्यानावसरे शङ्कराचार्याः पाञ्चरात्रस्याप्रामाण्यं प्रतिष्ठापयन्ति[४]। अस्यैव सूत्रस्य व्याख्यानावसरे रामानुजाचार्याः पाञ्चरात्रस्य प्रामाण्यं व्युत्पादयन्ति।[५] पाञ्चरात्रपदेन पौष्करकपिञ्जलादयः संहिताः द्योत्यन्ते। बहुषु स्थलेष्वाचार्याः गीताश्लोकमुदाहरन्ति। वल्लभाचार्याणां श्रीमद्भागवतव्याख्यानभूता सुबोधिनी वाल्लभसिद्धान्तान् ख्यापयति। श्रीरामानुजाचार्यानुयायिभिः श्रीभाष्यप्रबन्धानां परमं प्रामाण्यं स्वीक्रियते।[६] एवं सति शास्त्रपदेन किं ग्राह्यमिति विवादास्पदमेव। अत्र समेषां दर्शनिकानां स्वकीया मानसिकभावनैव कार्यं करोति। स्वकीयपूर्वाग्रहानुसारमेव तत्तच्छास्त्राणां प्रामाण्यमुपपाद्यते। बौद्धाः जैनाश्च बुद्धाद्यागमानां शास्त्रत्वं स्वीकुर्वन्ति। इति परमेश्वरस्य शास्त्रयोनित्वे महद्वैमत्यं भवेत् सर्वेषामपि स्वकीयाऽन्यैव सरणिः स्यात्, स्वस्वशास्त्रानुसारेण सर्वोऽपि परमेश्वरं प्रत्येयात् न वा प्रत्येयात्। शास्त्रप्रामाण्यस्य विशेषत आदरप्रदानेन बौद्धिकताया अनादरो भवेत् स्वकीयः पूर्वाग्रह एव लोकानां विजयं प्राप्नुयात्।

किञ्च शास्त्रेभ्योऽर्थाधिगमः कुतो भवति? तत्र तु तर्कस्यैवाश्रयणं क्रियते ''अग्निहोत्रं जुहुयात् स्वर्गकामः'' इति वाक्यस्य'' ''खादेत् श्वमांसं स्वर्गकामः'' इत्यप्यर्थः सम्भवति।[७] किन्तु न हीदृशोऽर्थोऽत्र विधीयते, तर्काश्रयणं विना नैतत् सम्भाव्यते। श्रुतीनामेव शास्त्रत्वमस्ति नान्येषां ग्रन्थानामित्यत्र तर्कं समुदाहरन्ति वेदानामपौरुषेयत्वम् यच्च वस्तुतोऽसम्भाव्यमेव तच्चाग्रे विचारयामः। सिद्धान्तत एतत् स्वीकार्यमेवास्ति परमेश्वरस्य शास्त्रैकप्रमाणकत्वाङ्गीकारे मानवीयायाः बुद्धेः नहि किमपि मूल्यम् सम्भवति। बुद्ध्यपेक्षया शास्त्रप्रामाण्यस्य गरीयस्त्वे बुद्धेर्न्यासरूपतैव स्यात्। मानवीयायाः बुद्धेरेव सर्वोत्कृष्टं निर्णायकत्वं स्वीकार्यमित्यस्मदीयो विचारः। शास्त्रैकप्रमाणत्वे परमेश्वर आस्थायाः विषयो भवेत् नैव तर्कस्य। तर्काविषयत्वे च परमेश्वरस्य सत्त्वं वाऽसत्त्वं वा नैव ख्यापयितुं शक्यम्, अतो नास्त्यस्मिन्नाक्षेपे किञ्चिद्बलं यत् परमेश्वरो नानुमानस्य विषयः।

## अनुमानतो नेश्वरसिद्धिः सम्भवाऽस्या युक्तेः समीक्षणम्

प्रायशः भारतीयदर्शनेषु योगन्यायवैशेषिकदर्शनान् परित्यज्य समेषां दर्शनानामत्र मतैक्यमस्ति यन्नानुमानेनेश्वरसिद्धिः सम्भवा। न्यायदर्शनानुसारिभिः विद्वद्भिः परमेश्वरसाधनाय यान्यनुमानानि प्रस्तूयन्ते तेषु विविधा आक्षेपाः दार्शनिकैरुपस्थापिताः ते च तत्तद्दर्शनानुसारेण न्यायाभिमतेश्वरपर्यालोचनावसरे प्रदर्शिताः। इदानां क्रमशः तेषां समीक्षणं विधीयते। प्रथमं तावत् क्षित्यादेः सकर्तृकत्वानुमाने य आक्षेपाः–

### स्वरूपासिद्धिः

क्षित्यादिकं पक्षीकृत्य कार्यत्वहेतुना सकर्तृकत्वं नैयायिकाः साधयितुं वाञ्छन्ति। हेतोः पक्षे सत्त्वमावश्यकं भवत्यनुमानाय। जैनाः मीमांसकाश्चात्राशङ्कन्ते यत् संसारक्रमस्यानादित्वात् कार्यत्वहेतोः पक्षेऽभाव एवास्ति। माध्वा अप्याशङ्कन्ते यत् कुतः कार्यत्वं पक्षे सिध्यति? किन्तु माध्वानां दृष्टिर्भिन्नास्ति तेषामाशयोऽस्ति यत् यद्यपि सर्गसंहारौ विद्येते किन्तु नैयायिकः कथं सर्गसंहारावङ्गीकरोति? तत्र श्रुत्यादीनामस्ति प्रामाण्यम् किन्तु किमु त्वया नैयायिकेन श्रुतिप्रामाण्यात् सर्गसंहारौ स्वीक्रियते? यद्योमित्युच्यते तर्हि काऽऽवश्यकताऽनुमानस्य? श्रुतितः एव परमेश्वरसिद्धेरपि सम्भवात्। नहि केनचिदपि प्रमाणेन प्रत्यक्षतः अनुमानेन वा कार्यत्वस्य सिद्धिः सम्भवति। फलतः स्फुटा स्वरूपसिद्धिः। जैनैः मीमांसकैश्च सर्गप्रलययोः सत्त्वमेव नाङ्गीक्रियते तेषां सिद्धान्तोऽयमस्ति यदनादिकालतः संसरणशीलोऽयं संसारोऽनन्तकालं यावत् संसरति नास्ति कुत्रचिदस्यारम्भबिन्दुर्नवा कुत्रचिदस्य समाप्तिबिन्दुः। जैनैः माध्वैश्च कार्यत्वहेतोः स्वरूपासिद्धत्वख्यापनाय बहु प्रोच्यते किन्तु तत्र सारमेतावदेवास्ति, अन्यत् सर्वं बुद्धेर्विलासमात्रमस्ति। नैयायिकाः सिद्धान्ततः प्रागभावप्रतियोगित्वरूपं कार्यत्वं स्वीकुर्वन्ति, अस्य खण्डनाय जैनाः वदन्ति यत् प्रागभावप्रतियोगित्वं नाम अभूत्वा भावित्त्वम् तच्च नैव सम्भवति क्षित्यादीनां यतो हि यथा "भुक्त्वा व्रजति" इत्यादौ भोजनगमनक्रियाभ्यां कश्चिदेक एवाधारो भवति तथैवात्राप्यभवनभवनक्रियाभ्यां कश्चिदेक एवाधारभूतः कर्ताऽऽवश्यकः, तच्च न सम्भवति एकस्यैव भावाभावोभयाश्रयत्वविरहात्। विचार्यते चेत्तदा नैतत्स्वारस्यं वहति यतो हि भवनक्रियावन्नह्यभवनस्यापि क्रियात्वम् तत्तु क्रियायाः अभाव एव। भावाभावयोरपि भिन्नकालावच्छेदेनैकस्मिन्नप्यधिकरणे विद्यमानत्वं सम्भवति। अतो निःसार एवैष आक्षेपः। सावयवत्वादिकं समाश्रित्य यत् खण्ड्यते तत् बुद्धेर्विलासमात्रम्।

वस्तुतोऽत्रैष एव मुख्यो मतभेदोऽस्ति, आक्षेपश्चास्ति यत् येषामुत्पत्तिविनाशौ

दृष्टिपथमागच्छतंस्तेषां प्रागभावप्रतियोगित्वं सिद्धं भवति क्षित्यादीनां नोत्पत्तिविनाशौ केनापि पुरुषेण दृष्टौ न चानुमानेन क्षित्यादेः उत्पत्तिविनाशौ सिद्ध्यतः तर्हि प्रागभावप्रतियोगित्वात्मकं कार्यत्वं कया रीत्या सिद्ध्येत्। जैनैः मीमांसकैश्च नहि क्षित्यादीनां प्रागभावः स्वीक्रियते तेषां प्रतीश्वरसाधने स्फुटैव स्वरूपासिद्धिः।

श्रीमन्त उदयनाचार्याः सृष्टिप्रलयौ साधयितुमनुमानप्रयोगान् काञ्चन समुपस्थापयन्ति तथाहि "विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः समवायिभिरारब्धः सन्तानत्वात् अरणिजन्यवह्निसन्तानवत्"[८] अनेनानुमानेन विश्वसन्तानस्य दृश्यसन्तानशून्यसमवायिभिरारब्धत्वं साध्यते दृष्टान्तोऽस्ति अरणिजन्यो वह्निसन्तानः। अरणिजन्यवह्निसन्तानारम्भे प्राथमिकवह्न्युत्पत्तिररणिकाष्ठे संयुक्तेभ्यः वह्निपरमाणुभ्यो भवति तदानीं नैव स्थूलवह्नेः साहचर्यं तेन लक्ष्यते। स एव च सृष्टिकालः। मीमांसकाः ये च सृष्टिप्रलयौ नैवाङ्गीकुर्वन्ति ते नैयायिकानाक्षिपन्ति (१) प्रलयस्वीकारे सतीदानीं यो नियमो दृश्यते यदहोरात्रमहोरात्रपूर्वकं भवति प्रलयस्वीकारे स नियमो भज्येत। अत्रानुमानमपि "विप्रतिपन्नमहोरात्रमहोरात्रपूर्वकमहोरात्रत्वाद-धुनातनाहोरात्रवत्" (२) अदृष्टस्य प्रबलेनादृष्टान्तरेणैव वृत्तिरोधो भवति नान्यथा, अनन्तजीवानामनन्तान्यदृष्टानि तेषां विपाककालश्च भिन्नो भिन्नो भवति। नहीदृशः कश्चिदपि कालः स्वीकर्तुं शक्यो यदा समेषामदृष्टाानां वृत्तिरोधः सम्भाव्येत कस्यज्जिीवस्यादृष्टन्तु भोगोन्मुखमेव स्यात् जीवानामानन्त्यात्। प्रलये स्वीकृते तदानीं समेषां जीवात्मनामदृष्टानां वृत्तिरोध आवश्यक इति दृष्टिविपरीतं कल्पितं भवति (३) अधुना ब्राह्मणस्य पितरौ ब्राह्मणौ भवतः सर्गप्रलयस्वीकारे चैष नियमो भज्येत, सर्गकाले, ब्राह्मणदम्पतिभ्यामजातोऽपि ब्राह्मण एव स्यात् (४) शाब्दबोधार्थं शक्तिग्रहोऽपेक्षितः स च वृद्धव्यवहारतो भवति। सर्गप्रलयस्वीकारे सर्गकाले वृद्धाभावादेष नियमोऽपि भज्येत (५) सर्गप्रलयस्वीकारे घटादीनां सम्प्रदायो भज्येत, घटादिनिर्माणचातुर्यं कुतः स्यात्? एते समेप्याक्षेपा उदयनाचार्येण समाधीयन्ते (१) यथा वर्षायाः प्रथमो दिवसो वर्षादिनपूर्वको न भवति यद्यप्यन्येषां दिनानामस्ति वर्षादिनपूर्वकत्वं तथैव सर्गप्रलयस्वीकारे कृते स्वीकर्तुं शक्यत एतत् सर्गप्रथमाहोरात्रं नाहोरात्रपूर्वकम्, यथा "वर्षादिनं वर्षादिनपूर्वकं वर्षादिनत्वात्" नैतदनुमातुं शक्यते तथैव अहोरात्रमात्रस्यैवाहोरात्रपूर्वकत्वमपि नानुमातुं शक्यम् (२) यथा च सुषुप्तिकाले बहूनां जीवानामदृष्टस्य वृत्तिरोधा भवन्त्येकदैव तथैव सर्गकाले समेषां जीवानामदृष्टानां वृत्तिरोधः सम्भवति (३) यथा चेदानीं उद्भिन्नामकः शाकविशेषः तण्डुलकणेभ्योऽपि जायते तद्बीजेभ्योऽपि, वृश्चिकस्य प्रथमोत्पत्तिः गोमयाद्भवति, अनन्तरं च वृश्चिकादेव तथैव सर्गप्रलयस्वीकारेऽपि वर्णव्यवस्था

सम्भवति (४) मायाविनोच्यमाने सति पुत्तलिकादिभिः वस्त्वानयने कृतेऽपि यथा बालकः शक्तिं गृह्णाति तथैव प्रयोजकवृद्धाभावेऽपि परमेश्वरादेव भवति शक्तिग्रहः (५) घटादिनिर्माणसम्प्रदायोऽपि परमेश्वरेणैव प्रयर्त्यते? एवं सर्गप्रलयविषय आक्षिप्ता आक्षेपाः समाधीयन्त आचार्यैः।

अत्र तावदेतत् विचारणीयम् यत् किमेवं वस्तुतः क्षित्यादेः कार्यत्वं सिद्धं भवति। मीमांसकोपस्थापितानां दोषाणां दूरीकरणेन सर्गप्रलयस्वीकारे बाधाः दूरीक्रियन्ते किन्तु नैवं सर्गप्रलयोः सिद्धिर्भवति। यश्चानुमानप्रयोगो दर्शितः क्षित्यादेः सर्गं साधयितुम् सोऽपि संसारस्य सर्गं साधयितुं वस्तुतोऽसमर्थ एव। यतो ह्यनुमानप्रयोगेऽस्मिन् आरणेयविह्नसन्तानवत् जगतो दृश्यसन्तानशून्यसमवायिभिरारब्धत्वं साध्यते। जगतः दृश्यसन्तानशून्यसमवायिभिरारब्धत्वे सिद्धेऽपि न हि सर्गस्य सिद्धिः सम्भवति। तत्र कारणं चेदमस्ति यत् अनन्ताः पदार्थाः जगदन्तर्गताः तेषां क्रमश एवोत्पत्तिविनाशस्वीकारे कृते सत्यपि सिद्धं भवति दृश्यसन्तानशून्यसमवायिभिरारब्धत्वम्। सिद्धान्ततः क्षित्यादेः कार्यत्वं यन्नैयायिकाः स्वीकुर्वन्ति स च पूर्वानुभविकः सिद्धान्तः (Priory) विद्यते, स्वीकृतमेतत् यत् यत् समस्तानि सावयवानि वस्तूनि कार्याणि सन्ति, क्षित्यादि च सावयवम्। अतः अस्य समीक्षणमनुभवानुसारेणोचितं नास्ति। जैनैः मीमांसकैः माध्वैश्चात्र यदाक्षिप्यते नैव तत् स्वारस्यमावहति।

**भागासिद्धिः**

न्यायसिद्धाञ्जनेऽनुमानेऽस्मिन् अनुमाने परमेश्वरघटसंयोगः पक्षीकृतो नवेति पृष्ट्वा पक्षीकृतत्वेऽपक्षीकृतत्वे चोभयस्मिन्नपि पक्षे दोषे दीयते, यदि पक्षीकतः तदा प्रमाणसिद्धस्यैव पक्षीकर्तुं शक्यतयाऽस्य प्रमाणासिद्धत्वात् भागासिद्धिः, यदि च नैव पक्षीकृतः तर्हि सन्दिग्धव्यभिचारी भवत्ययं हेतुः। यतो हिं सन्देहो भवति यदयं सकर्तृको वाऽकर्तृको वेति? अतः सन्दिग्धानैकान्तिकताऽस्य। किन्तु नैष दोषो विद्यते जन्यत्वेन जन्यमात्रस्य पक्षीकरणान्नोक्तविकल्पसम्भावनापि, केवलमेतत् बुद्धेर्विलासमात्रमस्ति।

**सत्प्रतिपक्षः**

क्षित्यादेः सकर्तृकत्वसाधनाय हेतुविधया कार्यत्वे प्रयुक्ते सत्प्रतिपक्षप्रसङ्गमुत्थापयन्ति मीमांसकाः, माध्वाः, विशिष्टाद्वैतिनश्च प्रमुखतः, तथाहि क्षित्यादिकं सकर्तृकत्वाभाववत् शरीराजन्यत्वात् आकाशादिवत्। अत्र नैयायिकाः व्यर्थविशेषणत्वं समुपस्थाप्य सत्प्रतिपक्षं निवारयन्ति। तत्र नैयायिकानामाशयोऽस्ति यत् हेतोर्यद्विशेषणं व्यभिचारकारकं न भवति तद् व्यर्थम्। स्वरूपासिद्धिवारणेन तस्य सार्थक्येऽपि

व्याप्यत्वासिद्धिर्दुर्वारा स्यात्। एतच्च विशिष्टाद्वैतदर्शनानुसारेण न्यायभिमतेश्वरपर्यालोचनावसरे विशिष्टाद्वैतिभिः वार्यते (पृ० २०७-९) माध्वदर्शनानुसारेण च वार्यते (पृ० २२३) अत्रैष एव सारोऽस्ति यत् जन्यत्वाभावादतिरिक्त एव शरीरजन्यत्वाभावो हेतुविधयाऽत्रोपस्थापितः। उभयोरभावयोः प्रतियोगिनौ भिन्नौ भिन्नौ विद्येतेऽतः जन्यत्वाभावत्वस्य शरीरजन्यत्वाभावत्वस्य चैकत्र समावेशाभावादुभयोरपि धर्मयोर्व्याप्तावच्छेदकत्वं सम्भवति। अतः "सम्भवति च लघौ गुरौ तदभावात्" इति न्यायेन लघुन एव धर्मस्य व्याप्तावच्छेदकत्वसम्भवेऽपि न हि शरीराजन्यत्वस्य व्याप्यतावच्छेदकत्वहान्या व्याप्यत्वासिद्धिरूपो दोषः सम्भवति। सेयं व्याप्यत्वासिद्धिः स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितधर्म एव व्याप्तावच्छेदकत्वाभावात् प्रसरति। अतोऽत्रैवं रीत्या नहि व्याप्यत्वासिद्धिप्रसङ्ग इति सत्प्रतिपक्षदोषो दुरुद्धर एवाभाति।

अत्र सत्प्रतिपक्षदोषसमाधानाय रामरुद्र्यां प्रतिपाद्यते यत् यः शरीराजन्यत्वेन सकर्तृकत्वाभावं कृतिजन्यत्वाभावरूपं साधयितुं वाञ्छति सः शरीराजन्यं कृतिजन्यं नैव मनुते शरीराजन्यमात्रमेव कृत्यजन्यमङ्गीकरोति। अतो यत्र शरीरजन्यत्वाभावो विद्यते तत्र तत्र सर्वत्र कृतिजन्यत्वाभावोऽप्यङ्गीकृत एवास्त्येतन्मते। समनियताभावयोश्च न हि परस्परं भेदः स्वीक्रियते नास्ति तत्र किञ्चित् प्रमाणमिति शरीरजन्यत्वाभावकृतिजन्यत्वाभावयोरभेदः सिद्ध्यति, एवं च कृतिजन्यत्वत्वापेक्षया शरीराजन्यत्वत्वस्य गुरुत्वेन गुरुधर्मावच्छिन्नप्रतियोकिताकाभावस्याप्रसिद्ध्या न शरीरजन्यत्वाभावस्य हेतुत्वसम्भावनाऽपि, फलतः यावन्ति शरीरजन्यत्वानि तावत्प्रतियोगिताकस्यैवाभावत्वेनैव हेतुत्वं वाच्यम्। तदपेक्षया च कृतिजन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव हेतुता वक्तव्या।[१०] इति शरीराजन्यत्वेन हेतुना कृतिजन्यत्वाभावसाधने व्याप्यत्वासिद्धिः स्यात्। परन्त्वयमाक्षेपोऽप्यसार एव प्रतिभाति। यद्यभावयोः समनियतयोरभेदो नैवाङ्गीक्रियते यत्र च विद्यते वैमत्यं विदुषां तर्हि नैवं व्याप्यत्वासिद्धिः सत्प्रतिपक्षानुमाने प्रयोक्तुं शक्या।

सत्प्रतिपक्षदोषनिवारणाय सत्प्रतिपक्षानुमानेऽप्रयोजकत्वमपि समुपस्थाप्यते। तत्र रामरुद्र्यां प्रतिपाद्यते यत् कृतिजन्यत्वाभावशरीरजन्यत्वाभावयोरत्यन्ताभावत्वेन नहि कार्यकारणभावमूलकस्तर्कोऽत्र सम्भवति, अत्यन्ताभावस्य नित्यत्वात्।[११] तदपि मन्ये नास्ति मोदावहं यतो हि वह्न्यभावेन हेतुना धूमाभावसाधने तत्र च व्यभिचारशङ्कायां सञ्जातयां कस्तर्कः प्रदीयते? नहि वह्न्यभावधूमाभावयोः कार्यकारणभावो विद्यते येन कार्यकारणभावमूलकस्तर्कोऽत्रोपादीयेत। अत एतत्

सिद्धान्तयितव्यं यत् व्याप्तिग्रहकोऽनुकूलस्तर्क एव केवलमपेक्ष्यते स तर्कः साध्यसाधनयोः कार्यकारणमूलक एव स्यादिति नास्त्यावश्यकता। किन्त्वत्रैतद्विचारणीयमस्ति यत् किमु शरीरजन्यत्वकृतिजन्यत्वयोरस्ति कार्यकारणभावः? यदि स्यादनयोः कार्यकारणभावे किञ्चित् प्रमाणं तर्हि सत्प्रतिपक्षानुमानं निर्दुष्टमिति निश्चितम्। यदि च नास्त्यनयोः कार्यकारणभावे प्रमाणं तदा त्वस्यानुमानस्य सदोषता स्वीकार्या। एतच्चाग्रे कर्ता शरीरी एव भवतीत्याक्षेपे विचारयामः।

**अप्रयोजकता**

अप्रयोजकत्वमपि व्यभिचारावारकतर्कशून्यत्वादत्राक्षिप्यते माध्वैः (पृ० २२०) तेषामाशयोऽस्ति यद्यत्र व्यभिचारसन्देहः स्यात् तथाहि कार्यत्वमस्तु सकर्तृकत्वं मास्तु तर्हि नास्त्यस्य वारकः कश्चिदनुकूलस्तर्कः। यतोहि कार्यनिष्पत्तये केवलं सकारणकत्वमेवावश्यकमस्ति न तु सकर्तृकत्वमपि। कर्ता कारकः सार्वत्रिको यदि स्यात्तदा सकर्तृकत्वं सिद्धं भवेत् कार्यत्वहेतुना, अनुकूलस्तर्कश्च प्रदीयेत "यदि सकर्तृकत्वं न स्यात्तदा कार्यत्वं न स्यात्" किन्तु नैवमस्ति। यदि च कार्यं प्रति कर्ताऽऽवश्यकस्तदा कार्यं प्रति शरीरी कर्ताऽऽवश्यक इत्येव वक्तव्यम्। नैयायिकस्तावत् कार्यमात्रस्यैव सकर्तृकत्वमङ्गीकुर्वन् कर्तृत्वेन कार्यत्वेन कार्यकारणभावमेवानुकूलं तर्कं मनुते। अयं चाक्षेपोऽत्र विद्यते यत् कार्यमात्रं सकर्तृकं न भवति। किन्तु सत्येवं निर्धारणीयमेतत् यत् कीदृशं कार्य सकर्तृकं भवति कीदृशं च सकर्तृकं न भवति, नैव माध्वानुसारतो वक्तुं शक्यते यत् कार्यमात्रं सकर्तृकं न भवति। कार्यं प्रति कृतेः कारणता यद्विशेषयोः कार्यकारणभावः तत् सामान्ययोरपि इतिं न्यायेन स्वीकार्या। अस्य स्वीकारे चाप्रयोजकता वारिता भवति।

**उपाधिः**

अत्र शरीरजन्यत्वमुपाधिः प्रदत्ता। तथाहि यत्र यत्र सकर्तृत्वं सिद्धमस्ति तत्र तत्र शरीरजन्यत्वमपि विद्यते घटपटादौ किन्तु यत्र यत्र कार्यत्वमस्ति तत्र तत्र शरीरजन्यत्वं नास्ति फलतः साध्यव्यापकत्वे सति साधनाव्यापकत्वात्मिका उपाधिः। अत्रोदयनाचार्याः समादधति यत् जगति चत्वारो हि भावाः भवन्ति (१) साधनविरोधी (२) बहिर्वृत्तिः साधनव्यापकः (३) सहवृत्तिः साधनसमनियतः (४) अन्तर्वृत्तिः साधनव्याप्यः। तत्रैतेषु भावेषु नहि प्रथमस्य द्वितीयस्य वोपाधित्वमाशङ्कनीयम् तथाहि प्रथमो भवेत् कार्यत्वविरोधी अकार्यत्वमेव तस्य उपाधित्व आशङ्कितेऽकार्यत्वस्य साध्यव्यापकत्वेन विवक्षणादकार्यस्यैव सकर्तृत्वं प्रसज्येत। द्वितीयः स्यात् तर्हि

कार्यत्वबहिर्वृत्तिरुपाधित्वे कार्यत्वव्यतिरेकेणाप्युपाधिसद्भावादकार्यस्यापि सकर्तृकत्वं स्यात्। अतो नैव प्रथमस्य द्वितीयस्य वोपाधित्वं शङ्कनीयम्। तृतीयः सहवृत्तिः साधनसमनियतः न ह्यस्यापि सम्भवत्युपाधित्वं साधनसमनैयत्येन साधनव्यापकत्वात्। चतुर्थस्यैव सम्भवत्युपाधित्वं तच्चान्तर्वृत्तिः साधनव्याप्यः एव स्यात् अर्थात् कार्यत्वन्यूनवृत्तिः कार्यत्वव्याप्यो धर्मः उपाधिः स्यात्। तत्र प्रश्नोऽयं भवति यदिदं शरीरजन्यत्वं नाम कार्यत्वसमनियतमस्ति, कार्यत्वन्यूनवृत्तिकार्यत्वव्याप्यं वाऽस्ति। यदि तावत् कार्यत्वसमनियतं शरीरजन्यत्वं तर्हि नात्रोपाधिः सम्भवति, यदि कार्यत्वन्यूनवृत्तिकार्यत्वव्याप्यं शरीरजन्यत्वमस्ति यथा च प्रतीयते तत्रापि पक्षत्रयमुपस्थितं भवति यदयमुपाधिः शरीरजन्यत्वं शरीरान्तर्वृत्ति सहवृत्ति बहिर्वृत्ति वा स्यात्। तत्र यदि शरीरान्तर्वृत्ति शरीरजन्यत्वं तर्हि शरीरस्य शरीरजन्यत्वं प्रति व्यापकत्वेन कर्तृप्रयोजकोपाधिव्यतिक्रमेणापि विद्यमानस्य कर्तृव्यतिरेकेणापि स्थितिश्चेत् तर्हि शरीरहेतुकस्यापि कस्यचित् कार्यस्य चेतनपूर्वकत्वाभावप्रसङ्गः नैतच्च स्वीकर्तुं शक्यते। यदि शरीरसहवृत्ति शरीरजन्यत्वं तर्हि तुल्ययोगक्षेमे शरीरशरीरजन्यत्वे यदि तावत् देहस्य नोपाधित्वं तर्हि नैव शरीरजन्यत्वस्याप्युपाधित्वम् द्वयोस्तुल्ययोगक्षेमत्वाभावे तु सहवृत्तिनियमो न स्यात्। यदि भवान् वदत्यस्तु शरीरजन्यत्वमिव-शरीरस्याप्युपाधित्वं तर्हि नैतदपि शक्यं शरीरस्य कर्त्रव्यापकत्वात् तथाहि ज्ञानचिकीर्षाकृतिसमवायित्वरूपं कर्तृत्वमस्ति यत्र हि ज्ञानादीनां शरीरकार्यत्वेन कर्तृशरीरकार्यत्वं भवति तत्रैव शरीरवतः कर्तृत्वं यत्र तु ज्ञानादौ न तत् कार्यत्वं शरीरकार्यत्वं तत्र शरीरं विनापि कर्तृत्वं भवत्यतः शरीरं नैव कर्तृव्यापकमिति नैव शरीरस्योपाधित्वम्, शरीस्योपाधित्वाभावे शरीरजन्यत्वस्यापि नोपाधित्वम्। नाप्यधिकवृत्तिशरीरस्य शरीरजन्यत्वमिति पक्षः सम्भवति यतोह्येवं स्वीकृते स्वीकरणीयमेतत् भविष्यति यत् कर्त्रुपाधिः शरीरजन्यत्वादि शरीराधिकवृत्ति, कर्त्रुपाधेः शरीराधिकवृत्तित्वेऽशरीरस्यापि कर्तृत्वं स्यात् नैतत् स्वीक्रियतेऽनीश्वरवादिभिः।[१२] अतो वस्तुत उपाधिदोषे नास्ति किञ्चित् स्वारस्यम्।

**बाधः**

मीमांसकास्तावद् वदन्ति यदनुमानप्रयोगेऽयं नियमोऽस्ति यद्यो हेतुः यादृशविशेषणविशिष्टेन साध्येन दृष्टान्तस्थलेषु नियमतः सहचरितो दृश्यते तादृशविशेषविशिष्टं साध्यमेव सः हेतुः साधयति। यदि साध्यं तद्विपरीतविशेषणं भवति, तदा सः हेतुरेव तं विपरीतं विशेषण बाधयति निर्विशेषस्य साध्यस्य नास्ति सम्भावनापि। कार्यत्वं शरीरिकर्तृकत्वेन घटादौ व्याप्तं दृष्टं तद्विपरीताशरीरित्व-

विशेषणविशिष्टं कर्तृकत्वं नैष हेतुः साधयितुं समर्थः स्वयमेव बाधयति (पृ० १५८) किन्तु वस्तुतो मीमांसकानामस्मिन्नाक्षेपे बलं नास्ति तथाहि महानसादौ धूमे महानसीयधूमस्यैव साहचर्यं दृष्टं पर्वतादौ तु धूमहेतुना नहि विपरीत पर्वतीयत्वविशेषणं बाध्यतेऽपि तु केवलं वह्निमात्रस्यैव सिद्धिर्भवति। यथा तत्र केवलं वह्निधूमयोः सहचारो गृह्यते तथैवात्रापि केवलं सकर्तृकत्वकार्यत्वयोः सहचारो गृह्यत इति समानम्। नैवमेवं विशेषणबाधात्मको बाधः सम्भवति।

## कर्तुः शरीरवत्त्वमावश्यकं न वा

क्षित्यादेः सकर्तृकत्वानुमानस्य हेत्वाभासत्वापादनानन्तरं यत्र परमेश्वरस्यानुमानिकत्वनिवारणाय प्रयासो विहितः सा युक्तिरेषैव। प्रायशः समेषामीश्वरानुमानिकतानिराकरणे प्रवृत्तानां दार्शनिकानामेष आक्षेपो विद्यते यत् यद्यनुमानतः कर्ता साध्यते तर्हि तस्य शरीरित्वमावश्यकम्। अनुमानेन चेदीश्वरसिद्धिः सम्भवति तर्हि सशरीरस्यैवेशरस्य सिद्धिः सम्भवा। सशरीरस्येश्वरस्य स्वीकारे तदीयं शरीरं नित्यं वाऽनित्यं वेत्याक्षिप्यानवस्थादिकमप्युपस्थाप्यते। अत्रोदयनेन प्रश्नः समुपस्थाप्यते यत् किं देहद्वारैव कारकाणि प्रयुङ्क्ते चेतनः, अतः कर्ता शरीरी एव भवतीति सिद्धान्तयति भवान्? किं वा देहं प्रयुञ्जान एव कारकाणि प्रयुङ्क्तेऽतः कर्ता शरीरी एव भवति इति प्रतिपादयति? यदि तावदत्र प्रथमः कल्पः यतो हि सत्येवं देहमपि कारकं भवति तस्यापि प्रयोगे देहान्तरप्रयोज्यता स्यात् देहद्वारैव कारकाणि चेतनः प्रयुङ्क्तेऽस्य सिद्धान्तस्य स्वीकृतत्वात्। एवं पुनः देहान्तरप्रयोगेऽपि देहान्तरप्रयोज्यता स्यात् इत्यनवस्थाऽऽपद्यते। यदि तावदपरः कल्पो विद्यते यत् देहं प्रयुञ्जान एव कारकाणि प्रयुङ्क्ते चेतनः तर्हि नैष शक्यः यतोहि जाङ्गलिको देहमप्रयुञ्जानोऽपि विषशकलं ध्यानमात्रेण चालयन् दृश्यते। एवमस्य नियमस्य व्यभिचारात् स्वीकरणं नोपयुज्यते। यद्युच्यते देहं धारयन्नेव चेतनः कारकाणि प्रयुङ्क्ते यथा च जैनादिभिराक्षिप्यते, तदा प्रश्नो भवति यदयं देहः किमु कारकतया धार्यः, उत कारकान्तरप्रयोगार्थं धार्यः, अथवा स्वकर्मोपात्ततामात्रेण धार्यः? तत्र यदि तावत् प्रथमः पक्षः यत् कारकतया देहो धार्यस्तर्हि नात्र सन्देहावसरः देहस्यापि कार्यविशेषे कारणत्वेनाधिष्ठाननियमात्। किन्तु यत्र देहः कारको न भवति तत्रापि देहाधिष्ठानमावश्यकमेवेति कश्चेतनः स्वीकुर्यात् यतोहि कारकतयैव शरीरं धार्यं यत्र न शरीरं कारकं तत्र शरीरधारणमनुपयोगि। जगत् सृजनादौ तु शरीरं कारकमेव न भवति, अतः शरीराधिष्ठानमनावश्यकम्। यदि तावद् द्वितीयः पक्षः स्वीक्रियते यत् कारकान्तरप्रयोगार्थं शरीरं यथा घटोत्पत्तौ कारकान्तरं दण्डादिकं प्रयोक्तुं

चेतनस्य शरीरधारणमावश्यकम् तर्हि भवत्यत्रापि सन्देहो यद्यः साक्षादधिष्ठातुमशक्तः सः साक्षाद् योऽधिष्ठेयो भवति तमधिष्ठाय कारकान्तरं प्रयुञ्जीत अथवा यः साक्षादप्यधिष्ठातुं समर्थः सोऽपि शरीरमधिष्ठायैव कारकान्तरं प्रयुङ्क्ते? अत्रैतदेवावधार्यं यद्यः कुलालादिः दण्डादीनि कारकाणि साक्षादधिष्ठातुमशक्तः स एव साक्षादधिष्ठेयं शरीरमुपादाय शरीरद्वारा कारकाणि प्रयुङ्क्ते यस्तु साक्षादपि कारकान्तरमधिष्ठातुं समर्थः सोऽपि शरीरमुपादायैव शरीरद्वारा कारकाणि प्रयुक्तेऽत्र नास्ति किञ्चदपि मानम्। एवन्तु नास्ति नियमो यदेकस्य साक्षादधिष्ठानयोग्यम् तदन्यस्यापि साक्षादधिष्ठानयोग्यमेव भवेत्। अस्य नियमस्य तु देह एव व्यभिचारो दृश्यते तथाहि चैत्रशरीरं चैत्राधिष्ठानयोग्यमस्ति न तदन्यस्य मैत्रस्याप्यधिष्ठानयोग्यम्। यदि तावत्तृतीयः कल्पो विवक्षितः स्वकर्मोपात्ततामात्रेण देहो धार्यः तर्ह्यत्र कल्पे तु देहोऽजागलस्तन इवानपेक्षितः यतोहि स्वकर्मोपात्तदेहं परित्यक्तुमशक्तस्तं धारयन्नेव कारकाणि चेतनः प्रयुङ्क्तेऽतः स्वकर्मोपात्तं देहं धारयतः एव कारकप्रयोजकत्वेऽपि शरीरस्य कारकान्तरप्रयोगेऽनुपयोगात् देहो भवेन्नवा भवेत् इति किमप्यर्थं नैव वहति कर्तृत्वसम्पत्तये। तस्य कश्चिदप्युपयोगो नास्ति यथा धूममात्रं प्रति तार्णवह्नेरन्वय-व्यतिरेकग्रहणे नैवालोकवत्तोपयुज्यत आवश्यकी वा भवति तथैव कर्तृत्वं प्रति अकारकस्याकारकप्रयोगद्वारकस्य देहस्य स्वकर्मोपात्ततामात्रेणापेक्षा नैव युज्यते। यदि च भवान् वदति यदकारकस्याकारकप्रयोगद्वारकस्यापि देहस्यावश्यमपेक्षा कर्तृत्वसम्पत्तये स्यात् तर्हि यश्चेतनः कुलालादिशरीरवान् घटस्य कर्ता स एव चेतनः करभयोनि-जन्मनिमित्तेन कर्मणा करभशरीरवानपि घटकारणभूतान् दण्डादीन् प्रयुञ्जीत यथा कुलालशरीरपरिग्रहः स्वकर्मोपात्तस्तथैव करभशरीरप्ररिगहोऽपि स्वकर्मोपात्त एव। उभयत्रापि शरीरे स्वकर्मोपात्ततामात्रं समानमस्ति। यदि कार्यविशेषेऽनुपयोग्यपि कार्यविशेषोऽपेक्षणीय इति मतं तर्ह्यत्र तु व्याघातः यो हि कार्येऽनुपयुक्तः स एवापेक्षणीय इति अनुपयुक्तत्वापेक्षणीयत्वयोः परस्परं विरोधेन व्याघातः। अतो यस्मिन् कार्ये यस्य शरीरस्य कारकत्वं प्रयोजकत्वं वा तस्मिन् कार्ये तस्य शरीरस्याधिष्ठानमिति नियमः न तु शरीरत्वेन शरीरस्याधिष्ठानमपेक्ष्यते।[१३] नैव च शरीरस्य सर्वत्र कारकत्वं प्रयोजकत्वं वा विद्यते येन सर्वत्र कार्ये शरीराधिष्ठानमावश्यकं भवेत्।

दृश्यते यदस्ति श्रीमतामुदयनाचार्याणां युक्तिषु बलम्। नैव शरीरस्यावश्यकतास्ति काचित् कर्तृत्वसम्पत्तये। किन्तु चिन्तनीयमेतदस्ति तदत्र श्रीमतोदयनेन "देहं प्रयुञ्जान एव चेतनः कारकाणि प्रयुङ्क्ते" अस्य खण्डनं विधातुं प्रोक्तं यत् "जाङ्गलिको ध्यानमात्रेणैव विषशकलं चालयन् दृश्यते" इति। किं वस्तुतो

जाङ्गलिको ध्यानमात्रेण विषशकलं चालयति? ध्यानार्थमपि ज्ञानेच्छाकृतीनामावश्यकता भवति, जानाति, इच्छति, यतते इत्येव नियमात्। ज्ञानेच्छाकृतीनामुत्पत्त्यर्थं शरीरस्यावश्यकता तु भवत्येव नहि मुक्तात्मनां ज्ञानं भवति, इच्छा वा कृतिर्वा। अतः ज्ञानेच्छाकृतिसम्पत्तये शरीरमावश्यकम्। एवं सति शरीरमप्रयुञ्जान एव जाङ्गलिकः विषशकलं चालयन् दृश्यते नैतत् साधु निश्चितं भवति। किन्त्वेवमवश्यं वक्तुं शक्यते यत् केवलं ज्ञानेच्छाकृतीनां सम्पत्तये शरीरस्यावश्यकता विद्यते न तु कारकान्तरप्रयोगाद्यर्थं शरीरापेक्षा। एवं सति केवलमेतावदेव वक्तुं शक्यते यत् कर्तृत्वसम्पत्तये ज्ञानेच्छाकृतीनामावश्यकता भवति, ज्ञानेच्छाकृतीनां सम्पत्त्यर्थं च शरीरापेक्षा भवति। नहि कर्तृत्वसम्पत्तये साक्षात् शरीरापेक्षा। एवं कर्तृत्वसम्पत्तये शरीरजन्यत्वस्यानुपयोगात् पूर्वोपस्थापितः सत्प्रतिपक्षदोषो निवारितो भवति। यदि तावत् शरीरजन्यत्वप्रयुक्तं सकर्तृकत्वं स्यात्तदा शरीरजन्यत्वाभावप्रयुक्तः सकर्तृकत्वाभावः स्यादिति हेतोः साध्यव्याप्यता स्यात्। न चैवमस्ति यत् सकर्तृकत्वं शरीरजन्यत्वप्रयुक्तं स्यात् किन्तु सकर्तृकत्वं जन्यत्वप्रयुक्तमस्तीति शरीरजन्यत्वाभा- वस्याखण्डस्यापि हेतुत्वे सत्प्रतिपक्षदोषो नैव सम्भवति तस्य साध्यव्याप्यत्वाभावात्[१४]। साध्यव्याप्य एव हेतुः साध्यं साधयितुं समर्थो भवति न हि साध्याव्याप्तोऽपि। अत एव शरीरजन्यत्वात्मिका नोपाधिरपि सम्भवति शरीरजन्यत्वस्य सकर्तृकत्वाव्यापकत्वात्। एवं शरीरजन्यत्वाभावस्य सकर्तृकत्वाभावाव्याप्तत्वात् न सत्प्रतिपक्षदोषः, शरीरजन्यत्वस्य सकर्तृकत्वाव्यापकत्वात् नोपाधिरपि सम्भवः।

किन्त्वेवं सकर्तृकत्वसम्पत्तये साक्षात् शरीरस्याप्रयोजकत्वेऽपि ज्ञानेच्छा कृतिमत्त्वसम्पत्तये परम्परया शरीरं प्रयोजकं भवत्येव। नहि शरीराभावे ज्ञानं सम्भवति, ज्ञानाभावे च नेच्छा सम्भवति, इच्छाया अभावे च न कृतिः। अतः परमेश्वरस्यापि कर्तृत्वसम्पत्तये ज्ञानाद्युपकरणतया शरीरमावश्यकमेवेति वक्तुं शक्यते। तत्र च नैयायिकाः समादधति यत् ज्ञानादीनां त्रयाणामपि (ज्ञानेच्छाकृतीनाम्) परमेश्वरीयाणां नित्यत्वात् नास्ति तत्र शरीरापेक्षा। एवं सति विशिष्टाद्वैतिनो माध्वाश्च आक्षिपन्ति यत् यदि ज्ञानादीनां नित्यत्वेन शरीरस्य तत्र नास्ति काचिदपेक्षा तर्हि ज्ञानेच्छाप्रयत्नानामपि त्रयाणां नित्यत्वेन मास्तु परस्परमपेक्षा तेषामपि। यत्र तु ज्ञानादीनां जन्यता तत्रैवेच्छायाः ज्ञानाधीनत्वं, कृतेश्च ज्ञानेच्छाधीनत्वमिति युज्यते। अत्र त्रयाणां नित्यत्वेन नैव परस्परमपेक्षेति नित्येच्छा नैव नित्यज्ञानमपेक्षते, नित्यश्च प्रयत्नो नैव ज्ञानेच्छेऽपेक्ष्येत इत्येव प्रतिपद्यते। तथाहि यथा शरीरनिवृत्तिरीश्वरस्य तथैव ज्ञानेच्छयोरपि निवृत्तिः प्राप्ता भवति यथाहि ज्ञानादीनां नित्यत्वे शरीर- पूर्वकत्वनिवृत्त्या शरीराभावेऽपि बुद्ध्यादीनां सत्त्वं प्रतिपाद्यते तथैवेश्वरप्रयत्नस्यापि

नित्यत्वात् प्रयत्नहेतुभूतयोर्ज्ञानेच्छयोरभावेऽपि प्रयत्नसत्त्वं सम्भवति तत्र ज्ञानेच्छयोरनुपयोगात्। तथाहि केवलं प्रयत्नेनैव सर्गसम्भवे ज्ञानेच्छयोः कल्पना व्यर्थैव। नैयायिकैश्च समाधीयते यत् प्रयत्नस्य द्वौ धर्मौ विद्येते ज्ञानकार्यो ज्ञानैक-विषयश्च प्रयत्नो भवति। ज्ञानादीनां त्रयाणामपि नित्यत्वस्वीकारेण ज्ञानकार्यत्वं प्रयत्नस्य निवर्तते किन्तु ज्ञानैकविषयत्वं नैव निवर्ततेऽतो विषयार्थं ज्ञानापेक्षा नित्यप्रयत्नस्यापि विद्यते।[१५] अत्राक्षिप्यते न्यायमतदूषकैर्यत् यत्र ज्ञानादीनां जन्यता तत्रैव ज्ञानजन्यतया ज्ञानैकविषयो भवति प्रयत्नः। अत्र तु ज्ञानादेरजन्यत्वात् प्रयत्नस्य ज्ञानजन्यत्वाभावात् ज्ञानैकविषयत्वं प्रयत्नस्य नैव युज्यते। तदजन्यस्यापि प्रयत्नस्य कुतो ज्ञानैकविषयता स्यात् ज्ञानेन कुतः समानविषयता नियम्यतेऽत्र। यदि प्रयत्नस्य कारणं ज्ञानं स्यात् तदा विषयव्यवस्था स्यादपि परन्तु प्रयत्नस्य ज्ञानाजन्यत्वेऽपि कुतो विषयव्यवस्थेति रहस्यात्मकमेव। स्वत एव प्रयत्नः सविषयो भविष्यति नित्यत्वात्। अत्र चाक्षिप्यते नैयायिकेन यत् प्रयत्नस्य स्वरूपतो विषयप्रावण्ये ज्ञानत्वं प्रसक्तं भवति ज्ञानात् प्रयत्नस्यायमेव भेदोऽस्ति यत् ज्ञानं स्वरूपतः सविषयकं भवति प्रयत्नस्तु न स्वरूपतः सविषयको भवति किन्तु ज्ञानस्य सविषयकत्वात् प्रयत्नः सविषयको भवति।[१६] एवं हि प्रयत्नस्य स्वरूपतो विषय-प्रावण्ये ज्ञानत्वं प्रसक्तं भवति।

अत्र द्वयोः मतालोचनेन ज्ञायते नैयायिकस्य पक्षो दुर्बलः। प्रयत्नस्य ज्ञानाजन्यत्वेऽपि ज्ञानेन कथं विषयनियमो भवतीति रहस्यपूर्णमेवाभाति। अत्रैकोऽपरोऽपि दोषः प्रदीयते यत् यदि प्रयत्नाजनकेनापि ज्ञानेन प्रयत्नस्य विषयप्रावण्यं तर्हि प्रयत्नेन ज्ञानस्य तत्र विषयप्रावण्यं कुतो न स्यात्? ज्ञानेन प्रयत्नस्य विषयप्रावण्यमित्य-स्यायमेवार्थो भवति यज्ज्ञातस्यैव प्रयत्नविषयत्वमस्ति ज्ञातविषयकः प्रयत्नो भवति, अज्ञातविषये प्रयत्नो न भवति यतो हि प्रयत्नस्य ज्ञानकार्यता। ज्ञानकार्यत्वाभावेऽपि प्रयत्नस्य ज्ञातविषयकत्वमेव भवेदिति स्वीकारो नोचितः, तथा च बुद्धिसत्त्वं नैव ख्यापयितुं शक्यम्। केवलं सामानाधिकरण्यमात्रेण विषयनियमेऽन्यानामपीश्वरगुणानां जीवगुणानां च सविषयत्वं प्राप्तं भवति।

## जीवैः सिद्धसाधनम्

अदृष्टद्वारा जीवानामेव क्षित्यादिकर्तृत्वं स्वीकार्यम्। जीवानामदृष्टद्वारकं कर्तृत्वन्तु स्वीक्रियत एव। जीवानां क्षित्याद्युपादानविषयाणामज्ञानात् क्षित्यादिकर्तृत्वं तेषामसामर्थ्याच्च कथं सम्भाव्यतेऽपि चेदत्रोच्यते यददृष्टद्वारेणैतत् सम्भवति। सुषुप्त्यादौ यौ श्वासप्रश्वासौ प्रवर्त्तेते तत्र जीवानामेवादृष्टद्वारेण कर्तृत्वं स्वीक्रियतेऽसौ जीवनयोनिः

यत्नो जीवेनैवाचरितो भवति। वस्तुत एष आक्षेपो नास्ति गम्भीरः केवलं दोषप्रदानायैवायं दोषः प्रदत्तः। सुषुप्त्यादावपीश्वराधिष्ठितादेवादृष्टात् श्वासप्रश्वासौ भवत इति स्वीकारे क्षत्यभावात्।

## एकः कर्ता सिद्धो न भवति

अयमप्याक्षेपः प्रदत्तो न्यायमतदूषकैर्यत् यथा विशालप्रासादादीनां बहुतर-जनकर्तृकत्वं भवति तथैव क्षित्यादेरपि गुरुतरकार्यत्वात् बहुजनकर्तृत्वं स्वीकार्यम्। अत्रानुमानप्रयोगा अपि जैनादिभिः प्रयुक्ताः परन्तु वस्तुतोऽयमपि दोषो दोषः प्रदर्शनीय इति मनसाऽवधार्य दत्तः। नास्ति बलमस्मिन्नाक्षेपे। अनन्तैरप्यल्पज्ञैः जीवैः कर्तृभिः न शक्यते निर्मातुं क्षित्यादिकं सर्वज्ञत्वमावश्यकमेव भविष्यति क्षित्यादिकर्तृणामेवं लाघवेनैकस्यैव कर्तुः कल्पनं युज्यते।

## अन्वयव्यतिरेकौ नैव गृह्येते

कार्यकारणभावग्रहार्थमन्वयव्यतिरेकग्रहोऽपेक्षितो भवति। ईश्वरीयायाः कृतेः सदा सर्वत्र विद्यमानतया कालिको दैशिकश्च अन्वय एव गृह्यते न तु व्यतिरेकः क्वचिदपि दृष्टिपथमायाति। तर्हि कुतः परमेश्वरीयायाः कृतेः कारणत्वं स्यात् कार्यमात्रमपि? अस्ति न्यायमतविद्वेषिणामत्राभिनिवेशः। अत्र च नैयायिकानामस्ति समाधानं यत् कार्यनियतपूर्ववृत्तित्वमेव कारणत्वं नहि अन्वयव्यतिरेकानुविधायित्वम्। अत्रोभयोर्वैमत्यमस्ति, अन्यमभिप्रायं मनसि निधाय नैयायिको वक्ति अन्यमभिप्राय-माश्रित्य बौद्धः समादधाति। इति नैष दोषः सम्भवति। अन्वयव्यतिरेकाग्रहेऽपि न्यायमते कारणत्वसम्भवात् अन्वयव्यतिरेकानुविधायित्वरूपं कारणत्वमाश्रित्य न्यायमतखण्डनं नैवोचितम्।

## बाधकप्रमाणानि

ईश्वरसिद्धिरनुमानतो नैव सम्भवतीति स्थापयितुमनेकानि बाधकप्रमाणनि प्रस्तूयन्ते। तत्र चानेकेऽनुमानप्रयोगाः (१) ईश्वरो न जन्मिनां हेतुरुत्पत्तिविकलत्वात् आकाशकुसुमवत् (२) जगत् नेश्वरहेतुकं क्रमशः जायमानत्वात् ईश्वरकारणाभिनिवेशिनां प्रत्ययवत् (पृ० ७५-७६) (३) ईश्वरः कर्ता न भवति प्रयोजनशून्यत्वात् मुक्तात्मवत् (पृ० १०७) इत्यादयोऽनेकेऽनुमानप्रयोगाः प्रदर्श्यन्ते परमेश्वरसिद्धिं बाधयितुम्। परन्तु नैतेषामनुमानानां साधुता तथाहि प्रथमतृतीयतुरीयाणामनुमानानामनीश्वरवादिनोप्रस्थापने न हि आश्रयासिद्धिः वारयितुं शक्या कथञ्चिदपि। ईश्वरमेव पक्षीकृत्यैवमनुमानानां प्रयोगात् अनुमानार्थं च पक्षस्य

सिद्धिरत्यावश्यश्की। द्वितीयेऽनुमाने जगत् पक्षीकृत्येश्वरहेतुकत्वाभावः साध्यते, काञ्चनमयवह्नेः साध्यतास्थले यथा साध्याप्रसिद्धिर्भवति तथैवात्रापि साध्याप्रसिद्धिः दोषः। अपि च बौद्धैः स्वस्मिन् मतेऽनुमानप्रयोगं कर्तुं सम्भवतीयं परन्तु नहि न्यायमतानुसारमनुमानं प्रयोक्तुं शक्यते न्यायमते दृष्टान्तस्यैवात्र दर्शयितुमशक्यत्वात्। परन्तु विचारणायात्राक्षिप्तुं शक्यते, आक्षिप्यते चान्यां सरणिं समाश्रित्य बौद्धैः यत् जगतः क्रमशः जायमानत्वमस्ति, यदि न्यायाभिमतः परमेश्वरः कर्ता (कारणं) भवति। तदुत्पद्येत एव। जगत ईश्वरात्मकं कारणं युगपदेव सन्निहितमिति युगपदेवोत्पत्तिः स्यात् समग्रस्य जगतः। अत्र नैयायिकानामुत्तरमस्ति अदृष्टात्मकस्य सहकारिणोऽप्यपेक्षास्ति तस्य युगपत् कार्योत्पादनेऽसामर्थ्यात् नैव युगपत् जगतः समुत्पत्तिराक्षिप्तुं शक्यते। यद्यपि बौद्धानां कथनमस्ति यत् सहकारिकारणेन यदि कश्चिदुपकार ईश्वरस्यापेक्षितस्तदा परमेश्वरः सहकारिणमपेक्षेत नैव चैवमस्ति, अतः परमेश्वरस्य न हि सहकारिकारणापेक्षा सङ्घटते। परन्तु नैतत् खण्डनं गाम्भीर्यं वहति।

गुणरत्नेन परमेश्वरस्य कर्तृत्वं कुतः? किमु सत्तामात्रेण, किं वा ज्ञानमात्रेण, किं वा ज्ञानेच्छाकृतिमत्त्वेन, ज्ञानेच्छाप्रयत्नपूर्वकव्यापाराद्वा, ऐश्वर्याद्वा एवं पञ्चधा विकल्प्य परमेश्वरः खण्ड्यते। तस्मिन्नालोचने नास्ति किञ्चदपि सारतत्त्वम्। केवलं बुद्धेरपव्यय एव कृत इति मन्ये।

### प्रयोजनं किमस्तीश्वरस्य सर्गे

अयं प्रश्नः प्रायशः सर्वैरपि न्यायाभिमतेश्वरदूषणे प्रवृत्तैः दार्शनिकैः समुपस्थापितः। तत्र चानेकधा विकल्प्य परमेश्वरः खण्ड्यते यन्नास्ति कस्यचिदपि प्रयोजनस्य सम्भावना। बुद्धिपूर्वा प्रवृत्तिश्च प्रयोजनमाधारीकृत्यैव भवति। अतः नैवेश्वरो जगतः कर्तेति। अत्र नैयायिकानामप्यस्ति केषाञ्चिद्द्वैमत्यं परन्तु सिद्धान्ततः करुणामेव प्रयोजनीभूतां वदन्ति। अत्र निष्कर्षतः सिद्धान्तयितुं शक्यते यत् नैव कस्यचिदपि प्रयोजनस्यैतादृशस्य सम्भावना यत्र दोषप्रदर्शनं सम्भवं न स्यात्। परन्तु तथाप्यहं मन्ये यत् प्रयोजनमाधारीकृत्य न्यायाभिमतेश्वरस्य दूषणं नैवोचितम्। यतो हि यथा शतरञ्जक्रीडायां कुशलेन क्रीडकेन यच्चलनं चाल्यतेऽकुशलः क्रीडको नैव तस्य किं प्रयोजनमस्तीति निश्चिनोति परन्तु तस्य प्रयोजनन्तु भवत्येव। तथैवास्माभिर्यदि सर्गरचनायाः प्रयोजनमवगन्तुं नैव पार्यते तर्हि नहीश्वरस्य स्रष्टुः खण्डनं साधु स्वीकार्यम्। वनजातानां वीरुधामपि यन्निष्प्रयोजनकत्वं गुणरत्नादिभिः प्रतिपादितं तदपि तथैव मन्ये यथाऽज्ञः ओषधीनां गुणमजानन् तस्य प्रयोजनं न वेत्ति किन्तु नैवौषधीनां निष्प्रयोजनकत्वम् भवति तावन्मात्रात्। वैद्यस्तु तेषामुपयोगं

जानात्येव तथैवास्तु नामास्माभिः क्षित्यादिरचनायाः प्रयोजनं ज्ञातुमसामर्थ्यं परन्तु नैतावता परमेश्वरस्य क्षित्यादिकर्तृत्वं खण्डनीयम् भवति। न्यायसिद्धान्तानुसारन्तु क्षित्यादिरचनायाः प्रयोजनं न्यायाभिमतेश्वरस्य स्वरूपनिर्वचनावसर एव प्रतिपादितम् पूर्वपक्षोत्तरपक्षप्रदर्शनपुरस्सरम्।

एवं तावत् क्षित्यादेः सकर्तृकत्वानुमाने य आक्षेपाः ते समीक्षिताः। इदानीं द्वितीयानुमानेऽदृष्टस्य चेतनाधिष्ठितत्वानुमाने य आक्षेपाः प्रदर्श्यन्ते दार्शनिकैस्ते समीक्ष्यन्ते।

## अदृष्टस्य सत्तैव नास्ति

अदृष्टस्य सत्तां चार्वाकोऽपि निराकरोति वेदान्तिनश्च निराकुर्वन्ति। तत्र चार्वाककृतमालोचनमत्यन्तं दुर्बलमस्ति। यतो हि तन्मते धर्माधर्मयोरस्तितैव नास्ति, किन्त्वेवं स्वीकारे कृतहानाकृताभ्यागमदोषावापन्नौ भवतः।

अतः चार्वाककृतायामदृष्टस्यालोचनायां किञ्चिदपि सारं नास्ति। अदृष्टस्य सत्तां वेदान्तिनो यन्निराकुर्वन्ति तस्मिन् बलमस्ति। तेषां कथनमस्ति यददृष्टसद्भावे नास्ति किञ्चित् प्रमाणम् यथा लोके राजा सेवकैः संसेवितः फलं प्रददाति तथैवेश्वरोऽपि समुचिताचारव्यवहारादिभिः सेवितः फलं काले प्रददाति। यथा सेवकेन राजनि सेविते नहि किञ्चिददृष्टमुपजायते तथैव समुचिताचारव्यवहारादिभिरीश्वरेऽपि सेवितेऽदृष्टादिकं नैवोत्पद्यते, इत्येव स्वीकर्तुं युज्यते। नैयायिकास्तावत् "चिरध्वस्तं फलायालं न कर्मातिशयं विना" इत्यस्मिन् तर्के विश्वसन्तोऽदृष्टं कल्पयन्ति। परन्तु वस्तुतः नैयायिकानामेषस्तर्को निस्सार एव। लोके घटाद्युत्पत्तौ नष्टेऽपि कर्मणि चक्रभ्रमिरूपस्य व्यापारस्य विद्यमानत्वात् तत्र भवतु व्यापारस्यावश्यकता परन्तु यागादीनां कर्मणां विनाशे सति यागादिफलावाप्तयेऽदृष्टात्मकव्यापारस्य कल्पनं नैवौचित्यं वहति। व्यापारकल्पनाभावेऽपि यागादिफलावाप्तिसम्भवात् यथा च राजसेवारूपेण कर्मणा नहि किञ्चिददृष्टमुत्पद्यते किन्तु राज्ञो बुद्धिः संस्कारिता भवति कालान्तरे च राजा सेवकाय पारितोषिकं प्रददाति, कृतस्याशुभस्य च कर्मणः फलं दण्डं प्रददाति। न्यायदर्शने परमेश्वरसत्तायाः स्वीकृतत्वेन तत्रादृष्टकल्पनमनावश्यकमेवेति मन्ये। मीमांसादर्शने यत्र परमेश्वरस्य सत्ता नैव स्वीक्रियते तत्र कृतेन कर्मणा यद्यदृष्टात्मको व्यापारो नैवोत्पद्यत इति स्वीकारे शुभाशुभकर्मणां फलं नैवोपलभ्येत। अतः तत्रादृष्टसत्तायाः स्वीकरणमावश्यकम्। अत्र न्यायदर्शने तु नास्त्यदृष्टकल्पनमावश्यकम्, अदृष्टकल्पनाभावेऽपि सेवादिफलवत् शुभाशुभकर्मणां फलोपभोगसम्भवात्। अतो भोगार्थं न्याय

दर्शनेऽदृष्टकल्पनं पूर्वाग्रहगृहीतमेव प्रतीयते। किन्तु ईश्वरबुद्धेर्नित्यतया तत्र संस्कारः कथं स्यात्? यतो हि संस्कारो दोषापनयनेन वा स्याद् गुणाधानेन वा, नित्यायां बुद्धावुभयमप्यसम्भवम्। अतो नैयायिकोक्तमेव साधु।

## अदृष्टं चेतनमेव

अदृष्टस्याचेतनस्य नैव चेतनमधिष्ठातारं विना प्रवृत्तिः सम्भवतीति तदधिष्ठातेश्वर इति नैयायिकानां पक्षः। बौद्धैः जैनैश्चोच्यते यत् अदृष्टं नास्त्यचेतनं किन्तु चेतनमेवेति न तदधिष्ठायकस्य काचिदावश्यता, चेतनस्याधिष्ठातारं विनापि प्रवृत्त्यर्हत्वात्। इदं तावच्चिन्तनीयं किमु सम्भवत्यदृष्टस्य चेतनत्वं? तमिमं प्रश्नं समाधातुं प्रवृत्तस्य प्रश्नोऽयं जायते कि नाम चैतन्यम्? तत्र प्रायशः सर्वेऽपि दार्शनिकाः ज्ञानत्वं चैतन्यं ज्ञानं वा चैतन्यमित्यत्रान्यतरं कल्पमाश्रयन्ते। तर्हि नैतादृशं चेतनत्वं सम्भवत्यदृष्टस्य तस्य ज्ञानात्मकत्वाभावात्, ज्ञानाश्रयत्वाभावाच्च। नैवादृष्टं ज्ञानात्मकं ज्ञानाश्रयं वा। अतो यददृष्टस्य चेतनत्वं स्वीक्रियते प्रतिपाद्यते च तदसारमेव प्रतीयते।

## अचेतनस्य चेतनानधिष्ठितस्यापि प्रवृत्तिः सम्भवति

इदमदृष्टस्य चेतनाधिष्ठितत्वानुमानं किञ्चिद् व्यापकं गृहीतव्यम् यतोहि नैयायिकाः परमाण्वादीनामचेतनानामपि चेतनाधिष्ठितानां प्रवृत्त्यभावात् तेषामधिष्ठायकत्वेनापि परमेश्वरं साधयन्ति। सोऽयमाक्षेपः बौद्धजैनसाङ्ख्यमीमांसासाधारणः। इमं तावदाक्षेपं समाधातुं नैयायिकाः आक्षिपन्ति यत् एवं चेतनानधिष्ठितस्याचेतनस्यापि प्रवृत्तिसम्भवेऽचेतनत्वं जडत्वं व्याहतं भवति। वस्तुतो विवादास्पद एष प्रश्नोऽस्ति यदचेतनस्य चेतनमधिष्ठातारं विना प्रवृत्तिः सम्भवति न वा? आचार्यशङ्करप्रभृतयः सांख्याभिमतं प्रकृतिसृष्टिवादं खण्डयितुमिममेवाक्षेपं प्रमुखतः प्रदर्शयन्ति यदचेतनायाः प्रकृतेः चेतनमधिष्ठातारं विना प्रवृत्तिर्न सम्भवति।[१७] अचेतनस्य चेतनानधिष्ठितस्यापि प्रवृत्तिः सम्भवतीत्यत्र दृष्टान्तविधया यानि स्थलानि दर्श्यन्तेऽचेतनानधिष्ठितस्य पयसः प्रवृत्तिरधोगमनार्थं अयस्कान्ताभिगमनार्थमयसः प्रवृत्तिः तानि स्थलानि चेतनाधिष्ठितानि मनुते नैयायिकः साङ्ख्यादयस्तु तानि स्थलानि चेतनानधिष्ठितानि स्वीकुर्वन्ति। किन्तु विभिन्नानि स्थलानि विद्यन्ते यत्र चेतनाधिष्ठितत्वे मतसाम्यमस्ति पक्षप्रतिपक्षयोः। अतश्चेतनाधिष्ठितस्य अचेतनस्य प्रवृत्तिर्भवतीति निश्चितमस्ति, चैतनाधिष्ठितस्यैव भवतीति निश्चितं नास्ति संशयास्पदमेतत्। किन्तु नैतत् निश्चितमस्ति यदचेतनस्य चेतनानधिष्ठितस्यापि प्रवृत्तिर्भवति। अतोऽहं मन्ये यदचेतनस्य चेतनानधिष्ठितस्य प्रवृत्तिर्न भवतीति सिद्धान्ते बलमस्ति।

अत्र शालिकनाथेन यत् प्रयोजनं मूले कृत्वा सिद्धान्त्यते यत्र प्रयोजनं दृश्यते

प्रतीयते च तत्रैव चेतनाधिष्ठितत्वं स्वीकार्यं यत्र तु प्रयोजनं नैव प्रतीयते तत्र नैवाचेतनस्य प्रवृत्त्यर्थं चेतनाधिष्ठितत्वमावश्यकम्। तदपि नैवोचितं प्रतिभाति। वस्तुतः एवं स्वीकृते सति स्वीकरणीयं भविष्यति यदियं प्रकृतिः रहस्यपूर्णया रीत्या गणितविषयकसिद्धान्तानाश्रित्य स्वयमेव प्रवर्तते। यतोहि न ह्यस्य सर्गस्यापि किञ्चित् प्रयोजनं दृश्यते यथा च शालिकनाथेन प्रतिपादितम् (पृ०१६०) परन्तु नैतत् बुद्धिगम्यमस्ति। लिङ्कनबारनेटमहोदयैः वैज्ञानिकमतालोचनं कुर्वद्भिः प्रोच्यते यत् "आधुनिकाः वैज्ञानिकाः ये विना परमेश्वरसम्बन्धं सृष्टिविषयिण्यः समस्याः समाधातुं प्रयतन्ते त एतदेव द्रढयन्ति यत् प्रकृतिः रहस्यपूर्णया रीत्या गणितविषयकान् सिद्धान्तानाश्रित्य प्रवर्तते[१८]" अतः केवलं प्रयोजनमेवाधारीकृत्याचेतनस्य चेतनधिष्ठितस्य प्रवृत्तिर्नैव स्वीकरणीया। अपितु नियमस्यापि विद्यते महत्त्वपूर्णं स्थानम्। यदि प्रयोजनं नैव दृश्यते किन्तु नियमो दृष्टिपथमायाति तर्हि चेतनेनाधिष्ठितस्यैवाचेतनस्य प्रवृत्तिः स्वीकार्या। अत एतदेवोचितं सिद्धन्तयितुं यदाचार्यशङ्करप्रभृतीनामस्मिन् सिद्धान्ते बलमस्ति यदचेतनस्य चेतनानधिष्ठितस्य प्रवृत्तिर्न सम्भवति।

## जीव एवाधिष्ठाता भवेत्

अत्रेदमप्याक्षिप्यते यददृष्टपरमाण्वादीनामधिष्ठाता जीव एव स्यात् किमर्थमीश्वरस्याधिष्ठातृत्वं स्वीक्रियते? अत्र नैयायिकः समादधाति यज्जीवा नामल्पज्ञतयाऽदृष्टज्ञानस्यासम्भाव्यत्वात् नहि जीवात्मनामधिष्ठातृत्वं सम्भवत्यदृष्टस्य। अत्र मीमांसकानां कथनमस्ति यत् ईश्वरस्यापि परपुरुषवर्तिधर्माधर्मात्मकादृष्टज्ञानं नैवोपपद्यते परमेश्वरस्य परपुरुषवर्तिधर्माधर्मात्मकादृष्टं प्रति कारणत्वाभावात् (पृ० १६२) परन्तु मीमांसकानामयमाक्षेपोऽत्यन्तं दुर्बलः नहीश्वरस्य न्यायमते परपुरुषवर्तिधर्माधर्मात्मकादृष्टं प्रत्यप्यकारणत्वमीश्वरस्य कार्यमात्रं प्रति कारणत्वात्, अदृष्टस्यापि कार्यान्तर्गतत्वात् अतो मीमांसकानामयमाक्षेपोऽनुचितोऽस्ति यत् जीवात्मान एवादृष्टाधिष्ठायकाः भवन्तु।

## अधिष्ठानं किं नाम? कथं चेश्वरोऽधिष्ठाता?

अदृष्टाधिष्ठायकत्वनिवारणाय किं नामेदमधिष्ठानं? इति प्रश्नः क्रियते। तत्र विकल्प्यते च संयोग, समवायादिषु किं नामेदमधिष्ठानम्? तक्षा वास्यादिकं संयोगेनाधितिष्ठति तत्रादृष्टे नहि संयोगरूपमधिष्ठानं सम्भवति गुणत्वेनादृष्टस्याधिष्ठानानर्हत्वात्। समवायोऽपि न सम्भवति अदृष्टस्य परमेश्वरान्यगुणत्वात्। संयुक्तसंयोगिसमवायसम्बन्धेनात्राधिष्ठानमिति नैयायिकाः सिद्धान्तयन्ति किन्त्वेवं

परम्परया नहि कुत्रचिदधिष्ठानं दृश्यतेऽतो नैवेश्वरोऽदृष्टाधिष्ठाता। एवमेवाचेतनस्य चेतनानधिष्ठितस्य प्रवृत्तिर्नोपयुज्यत इत्युच्यमाने प्रवृत्तिपदेन किमपेक्ष्यते? नहि क्रियात्मिका प्रवृत्तिर्गुणस्य सम्भवति। एवं पुनरप्यदृष्टाधिष्ठायकत्वेनेश्वरसिद्धिः खण्ड्यते। अस्त्यस्मिन्नाक्षेपे बलम्। किन्त्वगत्या वाचस्पतिमिश्रदर्शितरीतिरेव स्वीकरणीया। अधुना तु नवपद्धतिभिरपि दृश्यत एवाधिष्ठानम्।

अपरन्तावदनुमानं प्रयुज्यते वेदानां पौरुषेयत्वसाधकम्। अनेनाप्यनुमानेन वेदपौरुषयत्वे सिद्धे वेदप्रणेतृतयेश्वरसिद्धिर्भवति। तत्र तावन्मीमांसकमुख्याः आचार्याः आक्षिपन्ति यत् तत् क्रमशः प्रतिपाद्यते।

## शब्दनित्यत्वम्

वेदपौरुषयेत्वं निराकुर्वन् मीमांसकः प्रथमं शब्दनित्यत्वं प्रतिष्ठापयति शब्दानामनित्यत्वे न स्याच्छब्दात्मकानां वेदानां नित्यत्वम्। तत्र याः युक्तयस्ताः पूर्वं (पृ० १६३-४) समुपदर्शिताः। नैयायिकास्तावत् शब्दानित्यत्वसाधनायोत्पन्नः ककारः, उत्पन्नो गकारः इत्यादीनां बुद्धीनामेव सामर्थ्यं मन्वते। "सोऽयं ककारः" इत्यादीनां बुद्धीनां साजात्यमात्रावलम्बकत्वं स्वीकुर्वन्ति नैयायिकाः। न हि तावदेवं शब्दानां नित्यत्वं सिद्धं भवति। मीमांसकमते नैयायिकस्याक्षेपोऽस्ति यत् तव मीमांसकस्य मते कण्ठताल्वाद्यभिघातानां शब्दव्यञ्जकत्वमेवास्ति न तु शब्दोत्पादकत्वं तथा ह्येकस्मिन्नेव शब्दे कथमुच्चारणभेदेन तारत्वमन्दत्वादिविषया विरुद्धा प्रतीतिर्भवेत् नैवैकस्यैव तारत्वमन्दत्वे द्वेऽपि प्रतिपत्तुं शक्यते। अत्र मीमांसकमतमस्ति यत् तारत्वादिकस्य व्यञ्जकवायुधर्मत्वमस्ति नैव शब्दधर्मत्वम्, श्रोत्रेण वायुधर्मस्यापि तारत्वादेः ग्रहणसम्भवात् तत्र हि नैयायिकानामाक्षेपोऽस्ति यद्येवं तारत्वमन्दत्वादीनां वायुधर्मत्वं स्वीक्रियते तर्हि कत्वगत्वादीनामपि व्यञ्जकवायुधर्मत्वस्य स्वीकर्तुं शक्यतया ककार, गकारादीनामपि भेदो न सिद्ध्येत् फलतः वर्णैक्यापत्तिः स्यात्[१९]। अतो नहि शब्दनित्यत्वपक्षः स्वीकर्तुंः शक्यः।

## शब्दार्थयोः सम्बन्धो नित्यः

मीमांसकाः शब्दार्थयोः सम्बन्धो नित्य इति मन्वते। नैयायिकः ईश्वरेच्छैव शब्दार्थयोः सम्बन्ध इति मनुते। अत्र यदि सूक्ष्मदृष्ट्या विवेच्यते तर्हि स्पष्टमेव सिद्धं भवति यन्न्यायमतेऽपि शब्दार्थयोः सम्बन्धो नित्य एवास्ति भगवदिच्छायाः नित्यत्वात्। अन्तरमेतावदेवास्ति यन्मीमांसकमते शब्दार्थयोः सम्बन्धो नित्योऽपौरुषेयः सर्गाभावादनादिवृद्धपरम्परयाऽवगम्यते। न्यायमते तु सर्गकाले परमेश्वरो विद्यमानं

शब्दार्थयोः सम्बन्धं स्वकीयेच्छारूपं (ईश्वरेच्छारूपं) प्रयोजकवृद्धप्रयोज्यवृद्धोभयवेषं मायया धारयित्वा जीवं ग्राहयति। एवमस्य शब्दार्थसम्बन्धस्योभयमतेऽपि नित्यतया नहि कश्चिदपि विवादोऽस्ति।

**ग्रन्थोऽपौरुषेयः**

वाक्यत्वेन हेतुना वेदपौरुषेयत्वमनुमीयते नैयायिकैः। अस्ति च वेदानां वाक्यसमूहात्मकत्वम्। मीमांसकास्तावदत्राक्षिपन्ति यद् यत्र यत्र पौरुषेयत्वं दृष्टिपथमायाति तत्र तत्र स्मर्यमाणकर्तृकत्वमपि। यथा च भारतादौ परन्तु नहि वेदानां कश्चित् कर्ता स्मर्यतेऽतो नैव वाक्यत्वेन हेतुना पौरुषयेत्वं वेदानामनुमातुं शक्यम्। यद्यपि जीर्णकूपादावपि विद्यतेऽस्मर्यमाणकर्तृकत्वं किन्तु नहि तेषां पुरुषकृतत्वाभावः स्वीक्रियते। अतः सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वात् हेतोः पौरुषेयत्वं निराकरणीयम्। अत्र द्वितीयमप्यनुमानं प्रयुज्यते मीमांसकैः "विवादाध्यसितं वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वात् अधुनातनवेदाध्ययनवत्" इदमनुमानं भारतादौ कर्तुः स्मरणरूपेण बाधकेन बाधितत्वात् नैवं कर्तुं शक्यते। परन्त्विदं मीमांसकमतं नैवादरणीयमस्ति। तत्र कारणं चेदम्—मीमांसकैर्या युक्तिः समाश्रिता वेदानामपौरुषेयत्वसाधनाय सेयं युक्तिः अत्यन्तं दुर्बलीभूता। मूलतो वेदापौरुषेयत्वस्थापनाय सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वमेव हेतुः। वेदाध्ययनस्य गुर्वध्ययनपूर्वकत्वसाधनाय प्रयुक्तमनुमानमप्यस्मर्यमाणकर्तृकत्वेन साहाय्यं लभतेऽन्यथा भारतादावपि सम्भवेदीदृशमनुमानम्। चिन्तनीयमेतदेवास्ति यत् सम्प्रदाया-च्छेदे सत्यस्मर्यमाणकर्तृकत्वं किमेतादृक् प्रमाणमस्ति येन वेदापौरुषयेत्वमनुमातुं शक्येत। नैतत् प्रतिभाति बह्वीनां लोकोक्तीनां कश्चित् कर्ता नैव श्रूयते सम्प्रदाया-विच्छेदोऽपि समानः किमु तासां लोकोक्तीनामपि स्वीक्रियतेऽपौरुषेयत्वम्? वस्तुतोऽस्यां युक्तौ नास्ति किञ्चिदपि सारम्।

वेदानामपौरुषेयत्वेऽपर आक्षेपो भवति यत् वेदानां प्रामाण्यं कुतः स्यात्, शब्दाप्रामाण्यस्य वक्तृगुणाधीनत्वात्। तत्र च समाधीयते मीमांसकैर्यत् प्रामाण्यं नैव गुणाधीनं किन्तु दोषाधीनमप्रामाण्यं वेदे वक्तुः पुरुषस्याभावात् दोषाभावस्य सत्त्वाद् भवति प्रामाण्यसम्भवः। किन्त्वत्र वस्तुतो यथा दोषस्याप्रामाण्यं प्रति कारणत्वं तथैच प्रामाण्यं प्रति गुणस्य कारणत्वमप्यङ्गीकार्यम्। सत्प्रतिपक्षस्य सम्भावना केन वार्यते? यथा वक्त्रभावात् दोषाः न सन्ति तथैव गुणा अपि नैव विद्यन्ते। अत एतदपि प्रयोक्तुं शक्यते यत्—"वेदाः अप्रमाणम् अपेतवक्तृगुणत्वात् यन्नैवं यथाऽनाप्तवाक्यम्" एवमनेनानुमानेन सत्प्रतिपक्षता स्यात्।[२०] प्रमाणवार्तिकेऽपि-

वेदापौरुषेयत्वं वेदानां प्रामाण्यस्थापकमिति यथा स्वीक्रियते वाचां मिथ्यात्वेतूनां दोषाणां पुरुषाश्रयात् तथैव वाचां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात् अपौरुषेयत्वस्य मिथ्यात्वस्थापकत्वमेव कथं नाङ्गीक्रियते एवमाक्षिप्यते।[२१] अस्त्यस्मिन्नाक्षेपे बलम्। अतः सिद्धान्तरूपेण वक्तुं शक्यते यद्दोषाभावान्नहि वेदानां प्रामाण्यमपौरुषयेत्वात् सम्भवति। यदि तावत् निर्दोषकर्तृकत्वं सिद्धं भवेत्तदेव वेदानां प्रामाण्यं शक्यं स्वीकर्तुम्। अत एव तत्त्वसङ्ग्रह उच्यते–

**किञ्च वेदप्रमाणत्वे निर्बन्धो यदि वो ध्रुवम्।**
**निर्दोषकर्तृकत्वादौ तदा यत्नो विधीयताम्।।**[२२]

इति तावन्मीमांसकमुख्यैः स्वीकृतो वेदापौरुषयत्ववादो निराकरणीयः। वेदानां विध्यात्मत्वमस्तीति मीमांसकमतम्। विधिस्तावद् वक्तुरिच्छामेव बोधयति, वक्तृभिन्नेच्छायाः बोधने नास्ति विधेः सामर्थ्यम्, यदि तावद् वेदानां कश्चिद् वक्ता नास्ति तर्हि कस्येच्छां बोधयति विधिः? अतो यथा गर्भः श्रुतकुमार्याः पुरुषसंयोगे प्रमाणं भवति तथैव वेदगर्भो विधिरेव वेदानां पुरुषप्रणीतत्वे प्रमाणमस्ति[२३]। अतो नैवौचित्यं बिभर्ति वेदापौरुषयेत्वानुमानम्।

एवमेवान्येष्वप्यनुमानेषु दोषाः प्रदश्यन्ते दार्शनिकैः किन्त्वन्येषामनुमानानां नास्ति महत्वपूर्णं स्थानमत एव प्रायशः दार्शनिकैरेतेषामेवानुमानानां खण्डने विचारः कृतः। कैश्चिदेव दार्शनिकैरपरेष्वनुमानेषु दोषो दर्शितः। एतदेवमेवावगन्तव्यं यथा प्रधाने मल्ले पराजितेऽन्येपि मल्लाः पराजिताः मन्यन्ते तथैव प्रधानेष्वनुमानेषु दूषितेषु शिष्टान्यप्यनुमानानि दूषितानीति कृत्वा दार्शनिकैः विचारो नैव विहितः। यच्च कैश्चिद्विचार्यते दोषाश्च प्रदश्यन्ते तत्र येषां दोषाणां सिद्धान्ततः किञ्चिन्महत्त्वमस्ति ते विचार्यन्ते विवेच्यन्ते च। अत्र चेदृश एक एवाक्षेपोऽस्ति यश्च माध्वैरुपस्थापितः सङ्ख्याविशेषहेतुकेऽनुमाने (पृ० २२५) अत्र माध्वोक्तमेतत् समुचितमेव प्रतीयते यत् द्व्यणुकपरिमाणं प्रति परमाणुपरिमाणस्यैव कारणत्वं स्वीकार्यम्। त्रसेरण्वादौ विद्यमानमेकजातीयमेव परिमाणमस्ति। तदेव परिमाणं सर्वेष्वपि द्रव्येषूत्कर्षापकर्षवद् भवति, महत्त्वमुत्कर्षापकर्षवद् भवति तथैव सर्वेष्वप्येकजातीयमेव परिमाणम्, परिमाणस्याणुत्वमहत्त्वाद्यवान्तरा जातिर्नास्ति। अतो द्व्यणुकपरिमाणस्यापि परिमाणजन्यत्वं सम्भवति। इदानीं परमाणुपरिमाणजन्यत्वेऽपि द्व्यणुकपरिमाणस्य कश्चिद्दोषो नैवाक्षिप्तुं शक्यो येन सङ्ख्याविशेषहेतुकमनुमानं विधाय तस्याः सङ्ख्याया अपेक्षाबुद्धिजन्यत्वे-नापेक्षाबुद्धिरेषा नास्मदादीनां सम्भवतीतीश्वरसिद्धिः स्यात्। परमाण्वादेरचेतनस्य चेतनानधिष्ठितस्य प्रवर्त्तनायोगात् "परमाण्वादिः चेतनानधिष्ठितः एव प्रवर्ततेऽचेतनस्य

चेतनाधिष्ठितस्यैव प्रवृत्तिसम्भवात्'' इत्याद्यनुमानैर्यत् परमाण्वादीनां चेतनाधिष्ठितत्वं साध्यते तान्यनुमानानि पूर्वोक्तयोरनुमानयोरेवान्तर्भवन्ति। अतो नैतेषां चर्चाऽन्यत्र क्रियते।

ईश्वरस्यानुमानिकतायाः समीक्षणानन्तरं न्यायाभिमतेश्वरस्य निमित्तकारणत्वं दार्शनिकैरालोचितम्। तत्र वेदान्तिनः प्रमुखाः, वेदान्तिषु मध्ववेदान्तानुगामिनां परित्यागेनान्यैः सर्वैरपि वेदान्तिभिः अद्वैत, विशिष्टाद्वैत, द्वैताद्वैत, शुद्धाद्वैतवेदान्त-दर्शनानुगामिभिः परमेश्वरस्य निमित्ताभिन्नोपादानकारणता स्वीक्रियते नहि केवलं निमित्तकारणतैव परमेश्वरस्य विद्यते। एतेष्वपि अद्वैतवेदान्ते ब्रह्मणो जगदभिन्ननिमित्तो-पादानकारणता विवर्तवादमाश्रित्य, विशिष्टाद्वैते ब्रह्मांशभूतस्याचितः परिणामवादमाश्रित्य निमित्ताभिन्नोपादानकारणता, द्वैताद्वैतवेदान्ते ब्रह्मणोऽविकृतपरिणामवादमाश्रित्य, शुद्धाद्वैतवेदान्तेऽपि ब्रह्मणोऽकृतपरिणामवादमाश्रित्य जगदभिन्ननिमित्तोपादानता ब्रह्मणः स्वीक्रियते। एतेषां चतुर्णामपि दर्शनानां सिद्धान्तोऽस्ति यदीश्वरो नहि केवलं निमित्तकारणम् किन्तु निमित्ताभिन्नोपादानकारणं ब्रह्म।

**ईश्वरो किं निमित्तमात्रम्**

यथा चास्ति नैयायिकानां सिद्धान्तो यदीश्वरो निमित्तकारणमेव केवलमस्ति न तूपादानमपि। तत्र सम्भवन्त्यनेके दोषाः ये वेदान्तिभिः प्रमुखत आचार्यशङ्करेण रामानुजेन च प्रदर्श्यन्ते। तत्र तावदेकः आक्षेपोऽस्ति यत् यदि परमेश्वरो निमित्तमात्रमेव कुलालादिवच्छरीरित्वमपि तर्हि प्राप्तं भवतीश्वरस्य। अयमाक्षेपः पूर्वमेव समीक्षित इति नैवात्र समीक्ष्यते। ईश्वरपरमाण्वोः सम्बन्धोऽनुपपन्न इत्यपर आक्षेपोऽस्ति न्यायाभिमतेश्वरस्य विषये। तथाहि नैव संयोगः सम्भवत्युभयोः निरवयवत्वात् नैव च समवायादिराश्रयाश्रयिभावास्वीकारात्। अयमाक्षेप इमां पूर्वानुभविकां युक्तिं मनसि निधाय कृतोऽस्ति यन्निरवयवयोः संयोगो नैव भवति। नैयायिकश्च नेमां युक्तिं स्वीकरोति यन्निरवयवयोः संयोगो न भवति अन्यथा सर्वमूर्तद्रव्यसंयोगित्वरूपं विभुत्वं जीवानामप्यसिद्धमेव स्यात्।

आचार्यशङ्करेणैकोऽपर आक्षेपो न्यायाभिमतेश्वरस्य निमित्तकारणतामात्रमाश्रित्य दीयते यन्निमित्तमात्रत्वे रागद्वेषादिप्रसक्तिरीश्वरस्य भवति यतो हि जगन्निर्माण ईश्वरः कांश्चित् सुखिनः सृजति, कांश्चिच्च दुःखिनः प्राणिकर्मसापेक्षत्वे मिथः प्रवर्त्त्यप्रवर्तयितृतयाऽन्योन्याश्रयः स्यात् तथाहि परमेश्वरोऽदृष्टं प्रवर्त्तयेत् अदृष्टञ्च परमेश्वरं प्रवर्त्तयेत्। परन्त्वसार एष आक्षेपः यतो हि परमेश्वरः प्राणिकर्मजातं विदित्वा तदनुसारं सृष्टिं विदधाति नैवादृष्टमीश्वरस्य प्रवर्तकम्।

आचार्यशङ्करेणाक्षिप्यते यदयं कारुणिकः परमेश्वरो निमित्तकारणभूतः तर्हि केवलमदृष्टस्यानधिष्ठानेनैव कुपूयकर्मणां फलं प्राणिनो नैव प्राप्स्यन्तीति स्फुटम्। तर्हि कुतः सोऽदृष्टमधितिष्ठति। केवलमनधिष्ठानेनैव प्राणिदुःखवारणे समर्थः सन् यद्ययं दुःखं नैव वारयति तर्हि कारुण्यमस्य हीयते। अदृष्टस्य वा महत्त्वं द्योतितं भवति परन्तु नैवमस्ति परानुग्रहस्वभावोऽपीश्वरो नावश्यं दुष्कृते पुंसां प्रवृत्तिं निहन्ति। अयमाक्षेपो वस्तुत एतादृगेवास्ति यदीश्वरः सर्वसमर्थ इत्यस्य खण्डनायाक्षिप्यते यत् ईश्वरः किमधर्माचरणेऽपि समर्थः? न चेत् कुतः सर्वसमर्थता परमेश्वरस्य। किन्तु नैतत् खण्डनं युक्तमस्ति। एतदेव द्योतितं भवतीश्वरस्य सर्वसमर्थताकथनेन यत् यन्नैतिकनियमेभ्योऽविरुद्धमस्ति तत् सर्वं कर्तुं पारयति। तथैव न्यायाधीश इव न्यायाभिमतेश्वरोऽस्ति, यदि कृतानामशुभानां कर्मणां फलं नैव ददात्यदृष्टाधिष्ठानद्वारेण तर्हि नैतिकनियमस्य त्यागो भविष्यति। अतोऽस्मिन्नाक्षेपेऽपि नास्ति कश्चित् सारः।

आचार्यशङ्करेण न्यायसिद्धान्तानुसारमेक आक्षेपो न्यायाभितेश्वरस्य निमित्तकारणत्वे दीयते तदयमस्ति यन्न्यायाभिमतेश्वरस्य स्रष्टृत्वं निमित्तत्वमुभयमपि स्वीक्रियते नैतच्छक्यते स्वीकर्तुम्। एवं स्वीकारे न्यायदर्शनस्य परमेश्वरप्रवृत्तिं प्रत्यपि दोषस्यैव कारणता स्वीकार्या। सति चैवमीश्वरस्यानीश्वरताऽऽपद्यते। परन्तु सिद्धान्ततः दोषाणां नास्तीश्वरप्रवृत्तिं प्रति कारणत्वम्, केवलं जीवात्मनां प्रवृत्तिं प्रत्येवास्ति दोषाणां कारणत्वमिति न्यायमते नोक्तदोषसम्भवः। अत्र सारमिदं यदनित्यप्रवृत्तिं प्रत्येव दोषाणां कारणत्वं, कृतिरूपायाः भगवत्प्रवृत्तेर्नित्यत्वात् नैव तां प्रति दोषाणां प्रयोजकत्वम्।

आचार्यशङ्करेणैकोपर आक्षेपः क्रियते यश्च चिन्तनीयः। तथाहि नैयायिकाः परमाणूनां जीवानां चानन्त्यमङ्गीकुर्वन्ति फलत ईश्वरस्य सार्वज्ञ्यं वा न स्यादेतेषामनन्तता वा न स्यात् यतो हि प्रश्नो भवति किमीश्वरज्ञानेन जीवानां परमाणूनां चेयत्ता परिच्छिद्यते न वा? यदीयत्ता परिच्छिद्यते तदाऽनन्तता न स्यात्, न परिच्छिद्यते चेत् तदा परमेश्वरस्य सर्वज्ञता न स्यात्। अयं दोषश्चिन्तनीयोऽस्ति न्यायाभिमतेश्वरस्य विषये। जीवानां परमाणूनाञ्चानन्त्यं परमेश्वरस्य निमित्तकारणभूतस्य च सार्वज्ञ्यमुभयमपि विरुद्धमिव प्रतिभाति। रामानुजादिभिरप्येते एव दोषाः समुपस्थापिताः।

आचार्यशङ्कररामानुजादय उपर्युक्तदोषभयेन परमेश्वरस्य निमित्ताभिन्नोपादानकारणतां स्वीकुर्वन्ति। यद्यपि शास्त्रप्रामाण्यान्निमित्तभिन्नोपादानकारणता स्वीक्रियते ब्रह्मणः फलतः तर्कदोषदानमुचितं नैव प्रतिभाति किन्तु तर्कतोऽपि परिपोष्यते स्वीयः सिद्धान्त इति तर्कविरोध उपस्थाप्यते। प्रथमं तावदाचार्यशङ्करस्य सिद्धान्तः

समीक्ष्यते। आयार्यशङ्करमते ब्रह्मैकं पारमार्थिकं वस्तु नहि भिन्नः कश्चित् पदार्थोऽस्ति, किन्त्वस्मिन् मत एष आक्षेपो भवति यद्यदि परमार्थवस्तु एकमेवास्ति तर्हि कुतः जीवेश्वर, मुक्तबद्ध, शिष्याचार्य, ज्ञत्वाज्ञत्वादिव्यवस्था स्यात्।[२४] बन्धमोक्षादिव्यवस्थास्थापनार्थं यदि जीवाज्ञानवाद आश्रीयते नहि तदापि दोषदूरीकरणं सम्भवति जीवाज्ञानपक्षेऽपि बन्धमोक्षव्यवस्था नैव सम्भवति। अविद्याविनाशस्यैव च मोक्षपदार्थेन एकस्मिन् मुक्ते सर्वेऽपि मुक्ताः भवन्तु प्रतिजीवमविद्याभेदस्वीकारे प्रश्नो भवति यत् प्रतिजीवमिति जीवभेदमाश्रित्यैव वक्तुं सोऽयं जीवभेदः स्वाभाविको वा कल्पितो वा? यदि तावदविद्याकल्पितो भेदस्तर्हि कस्येयमविद्या किं ब्रह्मण उत जीवानाम्? एवं बहुतराक्षेपसम्भवात् नैवाद्वैतं स्वीकर्तुं शक्यम् ब्रह्मणः।

आचार्यरामानुजेन विशिष्टाद्वैतवादः समाश्रितः, अचित्पदार्थस्य परिणामेन सृष्टिरिति स्वीक्रियते। चिदचित्पदार्थयोरीश्वरांशत्वम्। परन्त्वेवमत्राक्षेपो भवति यदंशस्य परिणामे सति निश्चयमंशिनोऽपि परिणामित्वं स्वीकार्यम्। ईश्वरांशस्याचित् पदार्थस्य परिणामित्वं सिद्धमेवास्तीति परमेश्वरस्यापि परिणामित्वं स्यात्। अस्याक्षेपस्य वारणार्थं रामानुजाचार्याः स्थापयन्ति यद्यथा शरीरमात्मा शरीरान्तःस्थितो नियमयति शरीरे विकृतेऽपि नैव विकारमापद्यते तथैवेश्वरश्चिदचिदोरन्तःस्थितो नियमयति। चिदचिदावीश्वरस्य शरीरभूतौ। परमेश्वरश्चान्तर्यामी। एवमेव रामानुजाचार्याः क्वचिदिमं सम्बन्धं राज्ञः प्रजानां च पारस्परिकसम्बन्धतया प्रतिपादयन्ति। किन्त्वेतयोरुभयोरपि युक्त्योर्नैष दोषो वारयितुं शक्यते। शरीरशरीरिणोः पाल्यपालकयोश्च नास्त्यंशाशिभावरूपः सम्बन्ध इति शरीरगतेन विकारेण शरीरी विकृतो मा भवेत्, प्रजायाः दोषेण राजा दोषवान् मा भवेत् परन्तु जीवेशयोः ईशप्रकृत्योस्तु विद्यतेऽशांशभावरूपोऽपि सम्बन्ध इति जगद्गतेभ्यो दोषेभ्य परमेश्वरस्यासम्बन्धो नैव सम्भवति। एवं नैवाद्वैतसिद्धान्तानुसारं नैव च विशिष्टाद्वैतवादानुसारं परमेश्वरस्य निमित्ताभिन्नोपादानकारणता स्वीकर्तुं समुचिता। वल्लभनिम्बार्काभ्यान्त्वविकृतपरिणामवादमाश्रित्य ब्रह्मणो निमित्ताभिन्नोपादानकारणता स्वीक्रियते, परन्तु जगतः प्रतिक्षणं परिवर्तनशीलस्याविकृतपरिणामत्वस्वीकरणं समुचितं नैव प्रतीयते।

परमेश्वरस्य ज्ञानादीनां नित्यत्वविषयेऽप्यस्त्याक्षेपः। तदिदानीं समीक्ष्यते–

## किं ज्ञानादीनां नित्यत्वं सम्भवति?

नैयायिकाः परमेश्वरीयज्ञानेच्छाकृतीनां नित्यत्वमेकत्वञ्च स्वीकुर्वन्ति। क्षित्यादीनां सकर्तृकत्वसाधने प्रवृत्ते पक्षधर्मताबलात् नित्यज्ञानादिमत्त्वमपीश्वरस्य सिद्धं भवति। किन्तु मीमांसकादीनामत्राक्षेपोऽस्ति यत् कथं ज्ञानेच्छाकृतीनां नित्यत्वं स्वीक्रियते

नहि ज्ञानस्य नित्यत्वं क्वचिदपि दृष्टमस्ति सर्वस्यापि ज्ञानव्यक्तेः इन्द्रियादिभिर्जन्यत्वमेव दृष्टमस्ति। फलतः कथं दृष्टविपरीतं कल्पयति भवान्?

अत्र नैयायिकानां समाधानमस्ति यद् द्वेधा ज्ञानत्वेन सह नित्यत्वस्य विरोधः सम्भवति ज्ञानत्वं नित्यत्वाभावरूपं स्यात् नित्यत्वस्य ज्ञानाभावाक्षेपकत्वं वा स्यात् नात्रोभयथापि ज्ञानत्वनित्यत्वयोः विरोधः सम्भवति। यथा मातृत्वबन्ध्यात्वयोर्विरोधोऽस्ति नैवं ज्ञानत्वनित्यत्वयोर्विरोधोऽस्ति येन ज्ञानस्य नित्यत्वस्वीकारो न स्यात्। नवाऽपरः प्रकारोऽस्ति येन ज्ञानत्वनित्यत्वयोर्विरोधोऽस्तु तथाहि नित्यत्वं ज्ञानाभावं नैवाक्षिपति, यतो हि तदैवैतत् सम्भवति तदा ज्ञानत्वेन विरोधः स्यात्, न चैतदस्ति विरोधमूलस्य विपक्षबाधकस्यासत्त्वात्[२५]। यथा रूपस्य पृथिव्यादिगतस्य स्थूलजलादिगतस्यानित्यत्वेऽपि जलपरमाणुगतस्य रूपस्य नित्यत्वं स्वीक्रियते तथैव जीवगतज्ञानेच्छाकृतीनामनित्यत्वेऽपि परमेश्वरीयज्ञानस्य नित्यत्वस्वीकारे नैव किञ्चिद्धीयते। एकजातीयस्य पदार्थस्य भिन्नधर्मवत्त्वे नास्ति कश्चिद्विरोधः। अत्र यद्विभुद्वयसंयोगस्वीकारोऽस्त्वेवं नैयायिकोपरि विशिष्टाद्वैतिन आक्षिपन्ति। (पृ० २०५-६) नैव विभुद्वयसंयोगस्यास्वीकारात्मकः सिद्धान्तः एतादृशो यस्य खण्डनेन नैयायिकानां किञ्चिद्धीयते। नैयायिकेष्वपि केचन विभुद्वयसंयोगमङ्गीकुर्वन्त्येव। अतो ज्ञाननित्यत्वविषयेऽयमाक्षेपो नैव महत्त्वपूर्णोऽस्ति।

अत्र विशिष्टाद्वैतिनोऽपरमाक्षेपं प्रदर्शयन्ति यदीश्वरीयज्ञानस्य नित्यत्वे तस्य प्रामाण्यं कुतो भवेत्? यतो हि भवता प्रामाण्यं कारणगुणाधीनं स्वीक्रियते, ईश्वरीयज्ञानस्य प्रामाण्यमेव न स्यात् तस्य कारणाभावात्। अतोऽप्रामाण्यमेव स्यादीश्वरीयज्ञानस्य किं वा भवत् सिद्धान्तभङ्गः स्यात्। (पृ० २०६) सोऽयमाक्षेपो बलमादधाति।

एवमेव मीमांसकैराक्षिप्यते यत् ज्ञानं विषयभेदेन भिन्नं भवति फलतः सर्वपदार्थविषयकमीश्वरीयं ज्ञानमेकं नैव सम्भवति। एवमेव प्रयत्नस्यापि नैकत्वं सम्भवति यतो ह्यन्यो हि प्रयत्नो भवति पादप्रक्षेपेऽन्यो हि बाहूद्धरणे, कार्यभेदेन प्रयत्नभेदात् (पृ० १६१) इति कथं ज्ञानेच्छाप्रयत्नानां नित्यत्वमेकत्वं च सम्भवति।

वस्तुतो नैयायिकस्यैषा समस्या विद्यते यत् सः परमेश्वरीयज्ञानेच्छाप्रयत्नानां नित्यत्वं वा स्वीकुर्यात् अनित्यत्वं वा स्वीकुर्यात् यदि तावन्नित्यत्वं स्वीकरोति तर्ह्येषां दोषाणां सम्भावना गले पतति ज्ञानेच्छाप्रयत्नानामनित्वत्वदर्शनेऽपि तद्विपरीतं कल्प्यते। यदि तावन्नित्यत्वं नैव स्वीक्रियतेऽनित्यत्वमेव स्वीक्रियते ज्ञानेच्छाप्रयत्नानां तदा परमेश्वरस्याशरीरित्वं दुष्प्रतिपाद्यं भवति। ज्ञानेच्छाप्रयत्नान।मनित्यानां नहि

शरीरव्यतिरेकेणोत्पत्तिः सम्भवति। फलतो ज्ञानेच्छाप्रयत्नानित्यत्वे शरीरकल्पनमपि करणीयं भवेत्। परन्तु मन्ये: यदेते क्षुद्रोपद्रवाः शक्यन्ते समाधातुम्। एवमन्येऽपि केचन सन्त्याक्षेपाः यथेश्वरो नास्ति जीवसजातीयः जीवस्तु अणुरूपः परमेश्वरो विभुः यथा च विशिष्टाद्वैतिनः वल्लभनिम्बार्कादय आक्षिपन्ति तत् नैव तर्कमाधारीकृत्य किन्तु शास्त्रप्रामाण्येनैव स्वीक्रियत इति न तत् विचार्यते, तर्काधारेण तदालोचनस्यानुचितत्वात्।

**उपसंहारः**

एवं न्यायाभिमतेश्वरस्य स्वकीयं स्वरूपं, तमधिकृत्यान्येषां दर्शनानां य आक्षेपाः, तेषामाक्षेपाणां किं समाधानं सम्भवति, न वा सम्भवतीत्येतत् सर्वमेवोपपादितम्, प्रायशो यच्छक्यमासीत्। अत्र चायाति दृष्टिपथं यत् प्रायशो दर्शनानामीश्वरस्यानुमानिकतानिराकरणविषयेऽत्यन्तमाग्रह आसीत् न्यायाभिमतेश्वरस्यान्येषां स्वरूपाणां खण्डने तावान् प्रयासो नैव विहितो यावाननुमानिकतायाः खण्डने विहितः। अत्र ग्रन्थे विषयप्रवेशानन्तरं न्यायाभिमतेश्वरस्य स्वरूपमुपदर्शितं द्वितीयेऽध्याये, न्यायदर्शनस्य समानतन्त्रमस्ति वैशेषिकदर्शनमिति वैशेषिकदर्शनानुसारमपीश्वरस्य स्वरूपमस्मिन्नेवाध्याये प्रतिपादितम्। अनन्तरं तृतीयेऽध्याये नास्तिकदर्शनाननुसृत्य न्यायाभिमतेश्वरः आलोचितः। यद्यपि विवादास्पद एष नास्तिकास्तिकभावः बौद्धजैनादयोऽपि नह्यात्मानं नास्तिकं स्वीकुर्वन्ति केवलं चार्वाकदर्शनस्यैव नास्तिकता निर्विरोधा। परन्त्वत्र शोधप्रबन्धे भारतीयपरम्परानुसारमेव नास्तिकास्तिकविभागः कृतः, आलोचनाय च गृहीतः। शोधप्रबन्धेऽस्मिन् आस्तिकनास्तिकविभागस्य नास्त्येतदतिरिक्तं किञ्चित् प्रयोजनं यत् क्रमः कीदृशः स्यात्? अतः प्रथमं चार्वाकदर्शनानुसारं न्यायाभिमतेश्वरस्यालोचनं कृतमनन्तरं च बौद्धानुसारेणानन्तरं च जैनदर्शनानुसारेण। तृतीयेऽध्याये चार्वाकबौद्धजैनदर्शनानुसारमालोचिते न्यायाभिमतेश्वरे तुरीयेऽध्याये सोऽयं क्रमः परम्परागतः आश्रितः आस्तिकदर्शनानुसारं न्यायाभिमतेश्वरपर्यालोचनाय। वेदान्तदर्शनेषु विशिष्टाद्वैत, माध्व, निम्बार्क, वल्लभवेदान्तानां कालान्तरभावितयाऽद्वैतवेदान्तानन्तरमेतेषां दर्शनानां दृष्ट्या न्यायाभिमतेश्वरः पर्यालोचितः। अस्मिन्नध्याये पञ्चमे समेषां आक्षेपाणां समीक्षणं कृतम्।

एवं दर्शनानन्तरदृष्ट्या न्यायाभिमतेश्वरस्य पर्यालोचनात्मकोऽयं शोधप्रबन्धः सम्पूर्णतामधिगतः। यद्यपि वाञ्छाऽऽसीत् मदीयैषा यत् दर्शनान्तरपदेन पाश्चात्त्यदर्शनानपि परिगृह्य शोधप्रबन्धेऽस्मिन् पाश्चात्त्यदर्शनानुसारमपीश्वरस्यालोचनं करोमि। पाश्चात्त्यदर्शनानां सरणिरन्यास्ति तत्र यद्यपि विद्यते तर्काधारितस्य परमेश्वरस्य परमेश्वरीयनिमित्त-

कारणतादीनाञ्चालोचनं परन्तु परमेश्वरस्यालोचनेषु पूर्वपक्षरूपेण यादृशमीश्वरस्वरूपं निर्दिश्यते तत् नैव सम्पूर्णतो न्यायाभिमतेश्वरस्य स्वरूपं भवति किन्तु पाश्चात्य-दार्शनिकेष्वेवान्यतमेन केनचिदुपस्थापितस्य परमेश्वरस्य स्वरूपं भवति। अतोऽस्मिन् शोधप्रबन्धे पाश्चात्त्यदर्शनानां दृष्ट्या नैव न्यायाभिमत ईश्वर शक्य आसीदालोचयितुम् न्यायाभिमतेश्वरालोचनस्य प्रायशः पाश्चात्त्यदर्शनेष्वभावात्। किन्तु परमेश्वरस्य तार्किकतायाः विषये पाश्चात्त्यपौरस्त्यदर्शनानामनुरोधेन सम्भवतीदानीमप्य-नुन्धानकार्यस्य सम्भावना।

## पादटिप्पणी

१. भूतेभ्यश्चिदुत्पत्तिर्नापि प्रत्यक्षप्रमाणिका। नापि लिङ्गात् प्रसिद्ध्यति। वृ० आ० उ० भा० वा० ४/३/२१५।
२. ....देहाभावेऽभावोऽस्याश्चितेः स्यात् किं प्रमाणकः। बृ० आ० उ० भा० वा० ४/३/२४३।
३. उद्धृत स० द० सं०, पृ० १५७ एवं पूर्णप्रज्ञभाष्यम्, पृ० १३
४. ब्र० सू० शा० भा० २/२/३९।
५. ब्र० सू० श्री भा० २/२/३९।
६. श्रीमद्रामानुजाचार्यप्रभृतिभिः प्रणीताः श्रीभाष्यादिप्रबन्धाः प्रमाणतमाः। य० म० दी०, पृ० ६४
७. प्र० र० मा०, पृ०-२२०।
८. गद्यपद्या० न्या० कु०, पृ० २१३।
९. वर्षादिवद्‌भवोपाधिः वृत्तिरोधः सुषुप्तिवत्।
उद्भिद्‌वृश्चिकवद्‌वर्णाः मायावत् समयादयः।। न्या० कु० द्वि० स्त० २ का०
१०. रामरुद्री, पृ० ३४
११. शरीराजन्यत्वकृत्यजन्यत्वयोरत्यन्ताभावरूपत्वेन नित्ययोर्व्याप्तिग्राहककार्यकारण-भावरूपानुकूलतर्काभावादित्यर्थः। रामरुद्री, पृ० ३२-३३।
१२. आ० त० वि०, पृ० ३८६-३८९।
१३. आ० त० वि०, पृ० ३९२-३९५।
१४. यदि शरीरजन्यत्वप्रयुक्तं सकर्तृत्वं स्यात्, तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति साध्यव्याप्यता स्यात्। न चैवम् किन्तु जन्यत्वप्रयुक्तम्। न्या० कु०, पृ० ४८७
१५. प्रयत्नस्य द्विधर्मकत्वात्। सहि ज्ञानकार्यो ज्ञानैकविषयश्च कर्तृत्वम् तत्र कार्यत्वनिवृत्तौ कारणतया ज्ञानं मापेक्षिष्ट विषयार्थन्तु तदपेक्षा केन वार्येत। आ० त० वि०, पृ० ३८०-३८१

१६. न च तस्य स्वरूपेणैव विषयप्रवणत्वम्, ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात् प्रयत्नस्य भेदो यदयमर्थाप्रवण: इति। आ० त० वि०, पृ० ३८१

१७. ब्र० सू० २/२/२

१८. डॉ० आइन्स्टाइन और ब्रह्माण्ड, पृ० २१।

१९. तथा सति कत्वगत्वादेरपि व्यञ्जकवायुधर्मत्वापत्त्या ककारगकारयोरपि भेदो न सिद्ध्येदिति वर्णैक्यापत्ते:। दिनकरी, पृ० ५३८

२०. अपेतवक्तृगुणत्वेन सत्प्रतिक्षत्वप्रसङ्गात्। गद्यपद्या० न्या० कु०, पृ० ११०

२१. गिरां मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयात्।
अपौरुषयं सत्यार्थमिति केचित् प्रचक्षते।।
गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयात्।
अपौरुषेयं मिथ्यार्थं किं नेत्यन्ये प्रचक्षते।। प्र० वा०, पृ० ३२६

२२. त० सं०, पृ० ७९७, श्लोक सं० २३९९

२३. न्या० सि० मु०, पृ० ५२४

२४. जीवेश्वरबद्धमुक्तशिष्याचार्यज्ञत्वादिव्यवस्था न स्यात्। श्रीभाष्यम्, पृ० ४६९

२५. अतदभावत्वादतदाक्षेपकत्वाच्च। नहि मातृत्वस्य बन्ध्यात्ववन्नित्यत्वस्याभावे ज्ञानत्वम्। नापि नित्यत्वं ज्ञानाभावमाक्षिपेत्, ज्ञानत्वेनाविरोधात्, विरोधमूलस्य विपक्षबाधकस्याभावात्। आ० त० वि०, पृ० ४०६-४०७।

# ग्रन्थानुक्रमणिका


१. अङ्गुत्तरनिकायः।

२. अणुभाष्यम् १, (प्रकाशव्याख्यासहितम्), वल्लभाचार्यः, विद्याविलासप्रेस, वाराणसी, १९०५।

३. अणुभाष्यम् २,३ तदेव, १९०६।

४. अथर्वसंहिता।

५. अद्वैतब्रह्मसिद्धिः, सदानन्दयतिः, कलकत्ताविश्वविद्यालयः, कलकत्ता, १९३२।

६. अद्वैतसिद्धिसिद्धान्तसारः, सदानन्दव्यासः, विद्याविलास प्रेस, वाराणसी, १९०३।

७. अनुमितिगादाधरी, गदाधरभट्टाचार्यः, चौखम्बा संस्कृत सीरीज, वाराणसी, १९२२।

८. अन्ययोगव्यवच्छेदद्वात्रिंशिका (मल्लिषेणसूरिकृत स्याद्वादमञ्जरीसहिता), हेमचन्द्रः श्रीराजचन्द्र आश्रम, गुजरात, १९७०।

९. अभिधर्मकोशः (स्फुटार्था वृत्तिः) वसुमित्रः, कलकत्ता ओरियन्टल सीरिज, कलकत्ता, १९४९।

१०. अर्थसङ्ग्रहः (अर्थसङ्ग्रहकौमुदी तथा हिन्दीव्याख्यासहितः) लौगाक्षिभाष्करः सं० कामेश्वरनाथ मिश्रः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, १९४४, चतुर्थसंस्करणम्।

११. आत्मत्त्वविवेकः (नारायणीटीकासहितः) उदयाचार्यः, चौखम्बा संस्कृत सीरीज, वाराणसी, १९३६।

१२. आप्तपरीक्षा (स्वोपज्ञटीकासहितः) विद्यानन्दस्वामी, वीरसेवा मंदिर, सहारनपुर, १९४९।

१३. उपनिषद्भाष्यम्। शङ्कराचार्यः, महेश अनुसन्धान संस्थानम्, वाराणसी, १९७९।

१४. उपनिषद्भाष्यम्, २, तदेव, १९८२।

१५. उपनिषद्भाष्यम्, ३, तदेव, १९८६।

१६. उपस्कारः, शङ्करमिश्रः—कलकत्ता, १८६१ जयनारायणतर्कपञ्चाननकृतविवृतिसहितः।

१७. ऋक्संहिता।
१८. ऐतरेय आरण्यकम्।
१९. कणादरहस्यम्। प्रशस्तपादभाष्यटीकासङ्ग्रहे।, शङ्करमिश्रः, चौ० संस्कृत सीरीज, वाराणसी, १९१७।
२०. केन उपनिषद्।
२१. कौस्तुभप्रभा, केशवभट्ट काश्मीरी, वृन्दावनम्, १९३७।
२२. चतुःशतकम्, आर्यदेवः, आलोक प्रकाशन, नागपुर, १९७१।
२३. जागदीशी, जगदीशभट्टाचार्यः, चौ० सं० सी० वाराणसी, १९०८।
२४. जैनदर्शन, महेन्द्र कुमार, गणेशप्रसाद वर्णी ग्रन्थमाला, काशी, १९६६, द्वि० सं०।
२५. जैमिनीयन्यायमालाविस्तरः, माधवाचार्यः, विद्यारण्यविद्यापीठम्, मुम्बई, १९८३।
२६. डॉ० आइन्स्टाइन और ब्रह्माण्ड, लिंकन बारनेट, अनु० विद्याभूषण श्रीरश्मि, षड्दर्शन प्रकाशन, वाराणसी, १९५६।
२७. तत्त्वप्रदीपिका (चित्सुखी) हिन्दीटीकासहिता, चित्सुखाचार्यः, षड्दर्शन प्रकाशन, वाराणसी, १९५६।
२८. तत्त्वमुक्ताकलापः, सर्वार्थसिद्धसमेतः, वेदान्तदेशिकः - मद्रास, १९४१।
२९. तत्त्वसङ्ग्रहः, शान्तिरक्षितः, बौद्धभारती, वाराणसी, १९८१।
३०. तत्त्वार्थसूत्रम्, उमास्वातिः, गणेशप्रसादवर्णी ग्रन्थमाला, वाराणसी, वी० नि० सं०, २४७६।
३१. तर्कताण्डवम् (न्यायदीपसहितम्) व्यासतीर्थ, मैसूर, १९३२।
३२. तैत्तिरीय आरण्यकम्।
३४. तैत्तिरीय संहिता।
३५. दर्शनदिग्दर्शन, राहुल सांकृत्यायन, किताबमहल, इलाहाबाद, १९४४।
३६. दशश्लोकी निम्बार्काचार्यः।
३७. दीघनिकाय।
३८. द्रव्यसङ्ग्रहः - सं० सं० वि० वि०, वाराणसी।
३९. द्वादशदर्शनसङ्ग्रहः, काशिकानन्दगिरिः, वाराणसी, १९८८।
४०. नयविवेकः, विवेकतत्त्वसहितः, भवनाथः, राष्ट्रीय संस्कृत संस्थान, दिल्ली, १९७७।
४१. निरीश्वरवाद, याकूब मसीह, बिहार ग्रन्थ अकादमी, पटना, १९८६, द्वि० सं०।

४२. न्यायकुसुमाञ्जलिः (हरिदासीय) कुसुमाञ्जलिपरिमलसहितः। उदयनाचार्यः, चौखम्बा विद्याभवन, वाराणसी १९७८, द्वि० सं०।

४३. न्यायकुसुमाञ्जलिः (गद्यपद्यात्मक) हिन्दीव्याख्यासहितः, उदयनाचार्यः, सं० सं० वि० वि०, वाराणसी, १९७३।

४४. न्यायकुसुमाञ्जलिः, गद्यपद्यात्मकः, प्रकाशबोधिनी आदि चतुष्टीकासहितः, उदयनाचार्यः, चौखम्बा सं० सी० वाराणसी, १९५७, द्वि० सं०।

४५. न्यायदर्शनम् (भाष्यवार्तिकतात्पर्यटीकावृत्तिसहितम्), गोतम, कलकत्ता, १९८५, द्वि सं०।

४६. न्यायपरिशुद्धिः, वेदान्तदेशिकः, विद्याविलास प्रेस, वाराणसी, १९१८।

४७. न्यायभाष्यम् (खद्योतसहितम्) वात्स्यायनः, विद्याविलास प्रेस, वाराणसी, १९२६।

४८. न्यायभूषणम् (न्यायसारव्याख्यात्मकः) भासर्वज्ञः, षड्दर्शनप्रकाशन, वाराणसी, १९६८।

४९. न्यायमञ्जरी, जयन्तभट्टः, चौ० सं० सी०, वाराणसी, १९७१।

५०. न्यायविनिश्चयम् (न्यायविनिश्चयविवरणम्), भट्ट अकलङ्कदेववादिराजसूरिः भारतीय ज्ञानपीठ, वाराणसी, १९५४।

५१. न्यायशास्त्रीय ईश्वरवाद, किशोरनाथा झा, इलाहाबाद, १९७८।

५२. न्यायसिद्धाञ्जनम्, नीलमेघाचार्य, वा० सं० विश्वविद्यालयः, वाराणसी, १९६६।

५३. न्यायसिद्धान्ततत्त्वामृतम्, श्रीनिवासः, मद्रास, १९५०।

५४. न्यायसिद्धान्तमुक्तावली (दिनकरीरामरुद्रीसहिता) विश्वनाथपञ्चाननः, चौखम्बा विद्या भवन, वाराणसी, १९८२ पुनर्मुद्रिता।

५५. न्यायसुधा, सोमेश्वरभट्टः, विद्याविलास प्रेस, वाराणसी, १९०३।

५६. न्यायालङ्कारः, अभयतिलकोपाध्यायः, ओरियन्टल इन्स्टीट्यूट, बड़ौदा,।

५७. न्यायावतारसूत्रवार्त्तिकवृत्ति, शान्तिसूरिः, भारतीय विद्या प्रकाशन बम्बई, १९४९।

५८. पञ्चदशी, विद्यारण्यः, निर्णयसागर प्रेस, बम्बई, १९४९, सप्तम सं०

५९. पञ्चपादिका (विवरण, तत्त्वदीपन, ऋजुविवरणसहिता) पद्मपादाचार्य, महेश अनुसंधान संस्थानम्, वाराणसी, १९९२।

६०. पदार्थतत्त्वनिरूपणम्, रघुनाथशिरोमणिः, कलकत्ता, १९७६। रघुदेवन्यायालङ्कारटीकासहितम्। संस्कृतबङ्गलासंस्करणम्।

६१. पूर्णप्रज्ञभाष्यम् (माध्वसिद्धान्तः) हिन्दी सहित, मध्वाचार्यः, मुनिलाल प्रकाशन, इलाहाबाद, सं० २०३१

६२. प्रकरणपञ्चिका, शालिकनाथः, काशी हिन्दू विश्वविद्यालय, वाराणसी, १९६१।
६३. प्रत्यक्तत्त्वचिन्तामणिः, सदानन्दः, अच्युतग्रन्थमाला, वाराणसी, सं० १९८८।
६४. प्रभाकरविजयः, नन्दीश्वरः, संस्कृत साहित्य परिषद् कलकत्ता।
६५. प्रमाणवार्त्तिकम् (मनोरथर्नंदिवृत्तिसहितम्), धर्मकीर्तिः, बौद्धभारती, वाराणसी, सन् १९६८।
६६. प्रमाणवार्तिकम् (प्रज्ञाकरगुप्तकृतवार्तिकालङ्कारसहितम्) धर्मकीर्तिः, षड्दर्शन-प्रकाशनम्, वाराणसी, १९९१।
६७. प्रमेयकमलमार्तण्डः, प्रभाचन्द्रः, निर्णयसागर प्रेस, मुम्बई, १९४१ द्वि० सं०।
६८. प्रमेयरत्नमाला, (हिन्दीव्याख्यासहित), अनन्तवीर्यः, चौखम्बा विद्या भवन, वाराणसी, १९६४।
६९. प्रशस्तपादभाष्यम् न्यायकन्दलीसहितम्, प्रशस्तपादाचार्यः, सं० सं० वि० वि०, वाराणसी, १९७७, द्वि० सं०।
७०. बुद्धचरितम्, अश्वघोषः।
७१. बौधिचर्यावतार (पञ्जिकासहित) शान्तिदेव, पञ्जिकाकारः-प्रज्ञाकरमतिः, मिथिला विद्यापीठ, १९६०।
७२. बौद्धदर्शन, राहुल सांकृत्यायन, किताबमहल, इलाहाबाद, १९४४।
७३. ब्रह्मसूत्रम् । वेदान्तपारिजातसौरभ, तथा वेदान्तकौस्तुभभाष्योपेतम्। निम्बार्काचार्यः, श्रीनिवासाचार्यः, वृन्दावनम्, १९३२।
७४. ब्रह्मसूत्रम्, शाङ्करभाष्यभामती, हिन्दीव्याख्यासहिता, शङ्कराचार्यः, षड्दर्शन-प्रकाशनम्, वाराणसी, १९८२।
७५. ब्रह्मसूत्रम्, तदेव, २, १९८४।
७६. ब्रह्मसूत्रश्रीभाष्यम् । भाष्यार्थदर्पणसहितम्। रामानुजाचार्यः, मद्रास, १९६३।
७७. भाट्टार्कः, नीलकण्ठभट्टः, राष्ट्रीयसंस्कृतसंस्थानम्, दिल्ली, १९८०।
७८. भारतीयदर्शन, बलदेव उपाध्याय, शारदामन्दिर, वाराणसी, १९६०, षष्ठ संस्करण।
७९. भारतीय दर्शन, राधाकृष्णन् अनु० नन्दकिशोर गोभिल, राजपाल एण्ड संस, दिल्ली, १९७२, द्वि० सं०।
८०. भारतीय दर्शन की रूपरेखा, हिरियन्ना, राजकमल प्रकाशन, दिल्ली, १९६५।
८१. भाष्यवार्तिकम्।, सुरेश्वराचार्यः, महेश अनुसन्धानसंस्थानम् वाराणसी, १९८२।
८२. भाष्यवार्तिकम्, २, तदेव, १९९०।

८३. मज्झिम निकाय।
८४. मध्वसिद्धान्तसारः।
८५. माण्डूक्यकारिका, गौडपादाचार्यः।
८६. मानमनोहरः, वादिवागीश्वराचार्यः, वाराणसी, १९७३।
८७. मानमेयोदयः, नारायणः, मद्रास, १९३३।
८८. मानसोल्लासः, सुरेश्वराचार्यः।
८९. मिलिन्दप्रश्न (हिन्दी) नागसेन, सं० भिक्षु जगदीश कश्यप, बौद्ध परिषद, श्रावस्ती, १९७२।
९०. मीमांसाकौस्तुभः, खण्डदेवः, विद्याविलास प्रेस, वाराणसी, १९२१।
९१. मीमांसादर्शन, सं० श्रीराम शर्मा, संस्कृति संस्थान, बरेली, १९६६।
९२. मीमांसादर्शनम् (भाष्यतन्त्रवार्तिकसहितम्) जैमिनिः, पूना, १९७२, द्वि० सं०।
९३. मीमांसान्यायप्रकाशः प्रभा टीका संवलित, आपदेवः, भाण्डारकर इस्टीट्यूट, पूना, १९७२।
९४. मीमांसान्यायप्रकाशः अर्थदर्शिनीटीकासंवलितः, आपदेवः, कलकत्ता, शकाब्द १८२३।
९५. मीमांसाशास्त्रकुतूहलम् सं० पट्टाभिरामशास्त्री, सं० सं० वि० वि०, वाराणसी, १९८७।
९६. मुण्डक उपनिषद्।
९७. मैत्रायणी संहिता।
९८. यतीन्द्रमतदीपिका, हिन्दीव्याख्यासहित, श्रीनिवासाचार्यः, चौ० वि० भा० वाराणसी।, १९८९।
९९. योगसूत्रम्, षट्टीकोपेतम्, चौ० सं० सं० वाराणसी, १९८२, द्वि० सं०।
१००. योगसूत्रम् पातञ्जलययोगदर्शनम् (भास्वतीतत्त्ववैशारदीयोगवार्त्तिकपातञ्जल-वृत्तियुतव्यासभाष्यम्) पतञ्जतिलः, चौ० सं० सी० आ०, वाराणसी, १९३५।
१०१. योगाचारभूमिः, असङ्गः, कलकत्ता विश्वविद्यालय, कलकत्ता, १८६७।
१०२. वाक्यपदीयम्, भर्तृहरिः।
१०३. विवेकचूडामणिः, शङ्कराचार्यः।
१०४. वेदान्तपरिभाषा, धर्मराजध्वरीन्द्रः, चौखम्भा विद्याभवन, वाराणसी, मुसलगाँवकर कृत हिन्दी व्याख्या सहित १९६३।
१०५. वेदान्तसारः, रामानुजाचार्यः, अयोध्या, सं० २०००।

१०६. वैशैषिकसूत्रम् - कणादः।
१०७. शास्त्रदीपिका (युक्तिस्नेहप्रपूरणी, मयूखमालिकासहित) पार्थसारथिमिश्रः, विद्या विलास प्रेस, वाराणसी, १९१३।
१०८. शुक्लयजुर्वेदसंहिता।
१०९. शुद्धाद्वैतमार्तण्डः, गिरिधर जी, वा० सं० वि० वि०, वाराणसी, १९६६।
११०. श्लोकवार्तिकम्( पार्थसारथिमिश्रप्रणीतन्यायरत्नाकरसहितम्) कुमारिलभट्टः, रत्ना पब्लिकेशन वाराणसी, १९७८।
१११. श्वेताश्वतर उपनिषद्।
११२. षड्दर्शनसमुच्चयः (तर्करहस्यदीपिकासहित) हरिभद्रसूरिः, कलकत्ता वि० वि० कलकत्ता, १९०५।
११३. संक्षेपशारीरकम्, सर्वज्ञात्ममुनिः, विद्याविलास प्रेस, वाराणसी, १९०३।
११४. समणसुत्त। श्रमणसूत्र। अनु० कैलाशचन्द्रशास्त्री, मुनि श्रीनाथमल जी, सर्व सेवासंघप्रकाशन, वाराणसी १९८९, चतुर्थ संस्करण।
११५. सर्वदर्शनसङ्ग्रहः, माधवाचार्यः, भण्डारकर रिसर्च इंस्टीट्यूट, पूना, १९५१, द्वि० सं०।
११६. सर्वमतसङ्ग्रहः, नारायणः, केरला विश्वविद्यालय, केरल १९७७।
११७. सर्वमतसङ्ग्रहः, अज्ञातकर्तृकः सं० गणपतिशास्त्री, त्रिवेन्द्रम्, १९१८।
११८. सर्वसिद्धान्तसङ्ग्रहः, शङ्कराचार्यः, काशी।
११९. साङ्ख्यकारिका, अज्ञातकर्तृकयुक्तिदीपिकासहिता, ईश्वरकृष्णः, सं० रमाशङ्कर त्रिपाठी, चौ० सं० सी०, वाराणसी, १९७०।
१२०. साङ्ख्यतत्त्वकौमुदी, वाचस्पतिमिश्रः, निर्णयसागर प्रेस, मुम्बई, १९४०।
१२१. साङ्ख्यप्रवचनभाष्यम् (वृत्ति, वृत्तिसार, भाष्य, भाष्यसारसहितम्) विज्ञानभिक्षुः। सं० जनार्दनशास्त्री पाण्डेयः। मोतीलाल बनारसीदास, वाराणसी, १९८९।
१२२. साङ्ख्यसङ्ग्रहः, सं० विन्ध्येश्वरीप्रसाद द्विवेदी, चौ० सं० सी० आ०, वाराणसी, १९६९।
१२३. सिद्धान्तबिन्दुः, न्यायरत्नावलीटीकासहितः। मधुसूदन सरस्वती, विद्याविलास प्रेस, वाराणसी, १९२८।
१२४. सिद्धित्रयम्, यामुनाचार्यः, निर्णयसागर, बम्बई, १९५४।
१२५. सिद्धिविनिश्चयटीका, अनन्तवीर्याचार्यः, भारतीयज्ञानपीठ, वाराणसी, १९५९।
१२६. सेश्वरमीमांसा (मीमांसापादुका) वेदान्तदेशिकः, उभयवेदान्त ग्रन्थमाला, मद्रास, १९७१।